# THE SILPARATNA

BY

SRÎ KUMÂRA Dr V R

EDITED BY

MAHÂMAHOPÂDHYÂYA
T GAṆAPATI SÂSTRÎ Hon M R A S

*Curator of the Department for the Publication of Sanskrit Manuscripts, Trivandrum*



Part I

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM
BY THE SUPERINTENDENT, GOVERNMENT PRESS

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७५.

# शिल्परत्नं

श्रीकुमारप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण
लण्डनपुरस्थराजकीयैष्याखण्डीयविद्यासेवकसमाजपूज्यसभ्यपदभाजा
महामहोपाध्यायेन
त. गणपतिशास्त्रिणा
यथामातृकं शोधितम् ।

---

पूर्वो भागः ।

तच्च
अनन्तशयने
महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशितम् ।

कोलम्बाब्दाः १०९७, क्रैस्ताब्दाः १९२२.

# PREFACE

THE Silparatna is divided into two parts — the first part consisting of 46 chapters deals with the construction of houses, villages and other allied subjects while the second part contains 35 chapters and treats of iconography and kindred topics. The language employed in the work is neither elegant nor faultless but the treatment of the subjects is thorough and systematic. This is a rare work on Indian art, and no similar work has so far been published anywhere else.

Two palm-leaf manuscripts of this work in Malayalam characters, one from the Palace Library and the other from the Manalikkara Mathom in South Travancore, were obtained. Both of them being full of errors, I searched for another manuscript that might prove useful for correcting the text but could not, for a long time, find out one. The available manuscripts were however examined for the Press and also taken up for printing with the hope that the edition though based on incorrect manuscripts, might in a way remove the want of materials now felt by the students of Indian arts.

When the first part was fully printed, Mr. Parameswaran Namburipad of Kanippayyur, belonging to Kunnamkulam in Cochin State, an expert in the ancient Silpa chanced to see me and informed me that he had in his possession a better copy of the Silparatna. He could not, however, comply with my request for a loan of his manuscript but was kind enough to compare his copy with the printed formes and send me the variant readings. Unfortunately even before the collation was finished, Death snatched him away and his disciple Mr. R. Sankara Variyar completed the work left unfinished by his teacher. Thus the variants from the Kanippayyur manuscript designated क were obtained. Later on another manuscript of the first part was procured from the Raja of Chirakkal, North Malabar, and the readings of this manuscript marked ख were also taken. All the variants of the manuscripts क and ख are added as an appendix to the first part now issued. An edition of the second part based on all available manuscripts will be published before long.

The Silparatna was compiled from ancient Silpa and Agama works by Srīkumāra of Kerala, well versed in Silpa Vidyā, as is evident from the following verse —

"ब्राह्मं क्षात्रं च तेजोऽप्यहमहमिकया वर्णिते यत्र वीरे
तस्य श्रीदेवनारायणधरणिपतेराज्ञयाज्ञाकरोऽहम् ।
मन्दोऽप्यत्यन्तमोहादतिविपुलतरेभ्योऽथ पूर्वागमेभ्य
संक्षिप्तं शिल्परत्नं प्रलिखितुमधुना प्रक्रमे तत्क्रमेण ॥"

(Silparatna chapter I Sloka 6)

The king Dēvanārāyana referred to in the above verse is said to have ruled over a territory with his capital at Ambalappuzha now within the State of Travancore He was a great patron of learning and entertained in his court the famous Nārāyana Bhatta, a great poet and Vaiyākarana and author of Prakriyāsarvasva, Nārāyanīya and many other works, and is known to have flourished in the latter part of the 16th century A D It is therefore certain that the author of the Silparatna a protegee of his, also lived in the same period

Trivandrum, 16th June 1922

T GANAPATI SĀSTRI

# निवेदना ।

---

इद शिल्परत्नं भागद्वयात्मकम् । तत्र पूर्वभाग षट्चत्वारिंशदध्यायात्मक गृहग्रामादिनिर्माणविधिपर, उत्तरभागो देवबिम्बलिङ्गादिसम्बद्धविधिपर पञ्चत्रिंशदध्यायात्मक । काममत्र भाषा नातीव हृद्या, न च निरवद्या, प्रमेय तु शिल्प महार्घं वितत्य च सम्यक् च प्रतिपादितम् । ग्रन्थश्च शिल्पविषय एवञ्जातीयोऽपूर्वोऽद्यापि न क्वचित् प्रकाशित ।

अस्यैक आदर्शो राजकीयग्रन्थशालीय, अपरो मणलिक्करमठसम्बन्धीति द्वावादर्शौ तालपत्रात्मकौ केरलीयलिपी लेखकप्रमादबहुलावुपलब्धौ । एतत्परिशोधनानुकूलस्तृतीय, कश्चिदादर्शश्चिरस्य परिमार्गितोऽपि न लब्ध । तत आदर्शान्तरनैराश्यादुपलब्धादर्शद्वयस्थितपाठानुरोधिन कमपि संस्कारमाश्रित्य ग्रन्थ प्रकाशयिष्याम इति, तेन पुरातनशिल्पकलाव्युत्पत्त्यर्थं प्रयत्न कुर्वता तदनुकूलेदृशग्रन्थदौर्लभ्यमचिरत परिहृत भविष्यतीति च बुद्ध्यास्य ग्रन्थस्य मुद्रणमस्माभिरुपक्रान्तम् ।

एतत्पूर्वभागस्य मुद्रणे परिसमाप्ते कोच्चिराज्यान्तर्गतकुन्नङ्कुलाभिजन शिल्पविद्याविचक्षण श्रीमान् काणिप्पैयूरु परमेश्वरनम्बूतिरिमहाशय इद यदृच्छागत कमपि साधुतर शिल्परत्नस्यादर्श स्वगृहे स्थितमाह स्म । प्रार्थितश्च मयासौ स्वीयादर्शस्यात्र प्रेषण सौकर्यविरहादननुमन्यमानोऽपि तद्गतान् पूर्वभागसम्बन्धिन शुद्धाशुद्धपाठभेदान् भूयिष्ठान् उच्चित्योच्चित्य मह्य सदय प्राहिणोत् । पाठभेदोच्चयमारब्धमपरिसमाप्यैव लोकान्तर गते तस्मिन् अस्मत्परमोपकारिणि महाशये तस्य प्रिय शिष्य श्रीयुत आर् शङ्करवार्य महाशय स्वगुरूपक्रान्त कर्म परिसमापितवान् । इत्थ तावत् काणिप्पैयूरादर्शाद् ग संज्ञितात् पाठा सगृहीता । अथ चिरक्कल्राजभवनादेक शिल्परत्नपूर्वभागस्यादर्श आसादित, तस्माच्च घ संज्ञितात् पाठा उच्चित्य सगृहीता । त इमे सर्वे ग घ संज्ञितयोरादर्शयो पाठा व्युत्पित्सुपरमोपकारका पूर्वभागात्मकस्यास्य पुस्तकस्यान्ते योजिता । उत्तरभागस्तु सर्वादर्शसम्पत्साद्गुण्येन सशोध्यानतिचिरेण प्रकाश्येत ।

केरलीयेन **श्रीकुमार**नाम्ना केनचिच्छिल्पविद्याविशारदेन प्राचीनाशिल्पागमेभ्य इदं **शिल्परत्नं** सङ्कलितम् । यत् स आह —

"ब्राह्मं क्षात्रं च तेजोऽप्यहमहमिकया वर्णिते यत्र वीरे
तस्य श्रीदेवनारायणधरणिपतेराज्ञयाज्ञाकरोऽहम् ।
मन्दोऽप्यत्यन्तमोहादतिविपुलतरेभ्योऽथ पूर्वागमेभ्य
सक्षिप्तं शिल्परत्नं प्रलिम्बितुमधुना प्रक्रमे तत्क्रमेण ॥"

इति । अत्र श्लोके स्मर्यमाणो **देवनारायणधरणिपति वञ्चिराज्यान्तर्गतम् अम्बलप्पुलाख्य** नगरं राजधानीं कृत्वा कमपि भूभागमशिषत् । स **प्रवृत्त्या** विद्वत्प्रियो नानाविधविद्याभिवर्धनपरो महावैयाकरणस्य महाकवेः **प्रक्रियासर्वस्व-नारायणीया**दिग्रन्थकर्तुः **श्रीनारायणभट्टस्या**श्रयभूत **कैस्ताब्दीयषो**डशशतकस्यान्तिमभागे स्थित इति तदाज्ञाकरस्य **श्रीकुमारस्य** स एव जीवितसमयो विज्ञायते ॥

अनन्तशयनम्,
१६—६—१९२२

**त. गणपतिशास्त्री.**

विषयानुक्रमणी ।

॥ श्रीः ॥

श्रीकुमारप्रणीतं

# शिल्परत्नम् ।

(पूर्वो भागः ।)

मायावैभवकल्पिता गुणमया +++++++
जीवौघास्तदधिष्ठिताश्च विविधा यत्संस्थिता यन्मयाः ।
आत्मानं परमं तमौपनिषदैर्वाक्यैः सदा स्वस्तिकै
रन्विष्टं भुवनैकनाथममलं वन्दे विरिञ्चाधिपम् ॥ १ ॥

पारुष्याद्गो येन चादौ युगानां
वास्या तष्ट्वा स्निग्धतां प्रापितोऽर्कः ।
नित्यं देवैरर्चितो विश्वकर्मा
सोऽयं भूयात् सर्वलोकोदयाय ॥ २ ॥

त्रिपुरपुरत्रयरचना यत्करयोः कर्मचातुरी जाता ।
शिल्पिवरं तं दनुजैरर्चितचरणं मय वन्दे ॥ ३ ॥

नानाविशालगणितागमशिल्पशास्त्र-
व्युत्पत्तिमुख्यभुवमद्भुतविक्रमाढ्याम् ।
सेतूर्ध्वकाननिवा(स)कृताधिवासा
वन्दे षडाननवतीं परदेवतां मे ॥ ४ ॥

(धं[1]म)न्ये मतङ्गभृगुकाश्यपकुम्भजात-
मुख्या मुनीन्द्रपतयो मम सुप्रसन्नाः ।

---

१ 'ग' स पाठ

G P T 3140 500 21 8 10

शिल्पागमाम्बुनिधिपारगता मदीय-
चित्तप्रबोधनकरा गुरवोऽप्यमेयाः ॥ ५ ॥

सम्पूज्यते सदसि भार्गवसृष्टभूमा-
गेऽस्मिन् बुधैः सकलशिल्पकथासु योऽसौ ।

त मे नमामि पितर भृगुवंशजात
शश्वत्स्वपुत्रहितपूरणजागरूकम् ॥ ६ ॥

ब्राह्म क्षात्र च तेजोऽप्यहमहमिकया वर्णिते यत्र वीरे
तस्य श्रीदेवनारायणधरणिपतेराज्ञयाज्ञाकरोऽहम् ।

मन्दोऽप्यत्यन्तमोहादतिविपुलतरेभ्योऽथ पूर्वागमेभ्यः
सक्षिप्त शिल्परत्न प्रलिखितुमधुना प्रक्रमे तत्क्रमेण ॥ ७ ॥

आचार्यलक्षण पूर्व मानसाधनलक्षणम् ।
पश्चाद् (भूलक्षण चैव) भूपरिग्रहमेव च ॥ ८ ॥

ग्रामादीना लक्षण च पदविन्यासलक्षणम् ।
वास्तुपूजाक्रम तत्र ग्रामादेर्द्वारलक्षणम् ॥ ९ ॥

तत्र देवालयस्थानं पर खातविधिक्रमम् ।
शङ्कुना दिक्परिज्ञान गर्भन्यास ततः परम् ॥ १० ॥

वास्तु(कर्म)विधान च साधनानां च लक्षणम् ।
आयादिलक्षण पश्चात् पश्चात् प्रासादलक्षणम् ॥ ११ ॥

पादाधिष्ठाननियममुपपीठस्य लक्षणम् ।
आद्यङ्गलक्षण नाललक्षण भित्तिलक्षणम् ॥ १२ ॥

+ + + + + + भित्तिभूषाः सर्वस्वलक्षणम् (?) ।
द्वाराणा लक्षण पश्चात् तोरणानां च लक्षणम् ॥ १३ ॥

जालस्य लक्षण कूटगोष्ठादीना च लक्षणम् ।
पञ्जराचरणं वृत्तस्फुटितस्य तु लक्षणम् ॥ १४ ॥
पश्चात् कुम्भलताचारमुत्तराणां च लक्षणम् ।
प्रस्तरस्य गलस्यापि शिखरस्य च लक्षणम् ॥ १५ ॥
लुपाया लक्षण पश्चात्तत्र मूर्ध्नेष्टकाविधिम् ।
नासिकालक्षणं स्तूपिलक्षण शान्तिकाविकम् ॥ १६ ॥
वृत्ताष्टाश्रषडश्रादिप्रासादाकारलक्षणम् ।
मण्डपस्य विधि पञ्चप्राकार गोपुर ततः ॥ १७ ॥
परिवारविधि पश्चान्महापीठस्य लक्षणम् ।
ध्वजस्य लक्षण सन्धिलक्षणं चित्रलक्षणम् ॥ १८ ॥
प्रत्येक क्रमतः प्रोक्त्वा पूर्वभागे भवन्त्विति ।
षट्चत्वारिंशदध्यायाः शिल्परत्नाख्यसंग्रहे ॥ १९ ॥
अथातो बिम्बलिङ्गादिसाधनस्वीकृतिक्रम. ।
लिङ्गस्य लक्षण पश्चाल्लिङ्गलक्षणलक्षणम् ॥ २० ॥
बिम्बायामविधि पश्चादुत्तम दशतालकम् ।
मध्यम दशताल चाप्यधम दशतालकम् ॥ २१ ॥
उत्तम नवताल च मध्यम नवतालकम् ।
अधम नवताल चाप्यष्टतालस्य लक्षणम् ॥ २२ ॥
सप्तताल च षट्ताल पञ्चताल तथैव च ।
चतुस्ताल ततः पश्चाद् भूषायुधविधि पुनः ॥ २३ ॥
शूलसंस्थापन पश्चाद् रज्जुबन्धक्रम पुनः ।
मृल्लेपन तथा देवीलक्षण वाहलक्षणम् ॥ २४ ॥

(कि)श्च शैवप्रकरणं वैष्णव शक्तिमार्गजम् ।
ध्यानं च बिम्बदोष च पीठलक्षणमेव च ॥ २५ ॥
प्रतिष्ठायाः क्रम पश्चाज्जीर्णोद्धारं ततः परम् ।
लिङ्गप्रासादकरण मानुषालयलक्षणम् ॥ २६ ॥
कूपप्रश्न ततः पश्चादासनादिपरिच्छदम् ।
कर्मकारजनस्यास्य वेतनाकल्पनक्रमम् ॥ २७ ॥
क्षुरिकालक्षणं पञ्चत्रिंशदन्ताध्यायसमन्वितम् ।
भवेत् तदुत्तरं भागं सज्जनेभ्यो नमो नमः ॥ २८ ॥

अत्र पूर्वमाचार्यलक्षणम् ।

ग्रामादिक वा नृगृहादिक वा
वाप्यादिकं वा विबुधालयं वा ।
यः कर्तुमिच्छत्यथ संवृत ते-
नस्याद्गुरुशिल्पिरेतदर्थम् (?) ॥ २९ ॥
विप्रः कुलीनः कृतसत्क्रियौघः
स्वधीतवेदागमतत्त्ववेत्ता ।
वर्णाश्रमाचारपरोऽभिदीक्षो
दक्षस्तपस्वी गुरुरास्तिकोऽस्तु ॥ ३० ॥
पूर्वं स्थपतिरिष्टव्यः शिल्पशास्त्रविशारदः ।
तथैव शिल्पशास्त्रज्ञो युक्तः स्वाचार्यलक्षणैः ॥ ३१ ॥
स्थापकोऽपि वृतः कर्त्रा वास्तुकर्म समाचरेत् ।
ताभ्यामुभाभ्यां प्रारब्ध विमानं वान्यदेव वा ॥ ३२ ॥

निष्पाद्यमा समाप्तेः स्यात् ताभ्यामेव हि नेतरैः ।
तयोरभावे तत्पुत्रैः शिष्यैर्वा कर्मतत्परैः ॥ ३३ ॥

अथ शिल्पिलक्षणम् ।

स्थपतिः स्थापनार्हः स्यात् सर्वशास्त्रविशारदः ।
न हीनाङ्गोऽतिरिक्ताङ्गो धार्मिकस्तु दयापरः ॥ ३४ ॥
अमात्सर्योऽनसूयश्च तान्त्रिकः स्वभिजातवान् ।
गणितज्ञः पुराणज्ञ आनन्दश्चाप्यलुब्धकः ॥ ३५ ॥
चित्रज्ञः सर्वदेशज्ञः सत्यवादी जितेन्द्रियः ।
अरोगी चाप्रमादी च सप्तव्यसनवर्जितः ॥ ३६ ॥
सुनामा दृढबन्धुश्च वास्तुविद्याब्धिपारगः ।
स्थपतेस्तस्य शिष्यो वा सूत्रग्राही सुतोऽथवा ॥ ३७ ॥
स्थपत्याज्ञा(नधारी ? नुरोधी) च सर्वकर्मविशारदः ।
सूत्रदण्डप्रमाणज्ञो मानोन्मानप्रमाणवित् ॥ ३८ ॥
तक्षणात् स्थूलसूक्ष्माणां तक्षकः स तु कीर्तितः ।
मृत्कर्मज्ञो गुणी शक्तः सर्वकर्मस्वतन्त्रकः ॥ ३९ ॥
गुरुभक्तः सदा हृष्टः स्थपत्याद्यनुगः सदा ।
तक्षिताना तक्षकेणाप्युपर्युपरि युक्तितः ॥ ४० ॥
वृद्धिकृद् वर्धकिः प्रोक्तः सूत्रग्राह्यनुगः सदा ।
एभिर्विनापि सर्वेषां कर्म कर्तुं न शक्यते ॥ ४१ ॥
तस्मादेष सदा पूज्यः स्थपत्यादिचतुष्टयः ॥ ४१½ ॥

इति शिल्परत्ने गुर्वादिलक्षणं नाम
प्रथमोऽध्यायः ।

## अथ द्वितीयोऽध्यायः ।

### अथ मानसाधनम् ।

परमाणुरिति प्रोक्तो योगिना दृष्टिगोचरः ।
त्रसरेणुरष्टभि. स्यात् तैरेव परमाणुभिः ॥ १ ॥
तदष्टभिस्तु बालाग्र लीक्षा बालाग्रेकाष्टभि. ।
लीक्षाष्टभिस्तु जूका स्याज्जूकाष्टगुणितो यव ॥ २ ॥
यवोदरै[२] षड्गुणैर्वा सप्तभिर्वाधमादिकम् ।
क्रमादष्टगुणैर्वाथ मानाङ्गुलमिति स्मृतम् ॥ ३ ॥
श्वेतशाली महाशाली रक्तशाली तथैव च ।
सौगन्धिशेमराली च शाली पञ्चविधा स्मृता ॥ ४ ॥
क्षुण्णे सिता स्मृता शाली रक्तो व्रीहिरुदाहृतः ।
तासामुदरविस्तारैरपि मानाङ्गुलं स्मृतम् ॥ ५ ॥
शाल्यायनैस्त्रिभिस्तैश्च सार्धैस्तैर्वेदसम्मितैः ।
मानाङ्गुलो नचाप्येव कनिष्ठादीनि कल्पयेत् ॥ ६ ॥
र(क्त)शाल्यायत तेषु द्विगुण वा त्रिमात्रकम् ।
चतुस्त्रिंशद्विध दुष्टमेव मानाङ्गुल बुधैः ॥ ७ ॥
तन्तुर्दक्षिणकरमध्यमामध्यपर्वेण (?) ।
दैर्घ्य मात्राङ्गुल श्रेष्ठ नीच तद्व्याससम्मितम् ॥ ८ ॥
इत्थ मात्राङ्गुल शिल्पशास्त्रज्ञैरीरित द्विधा ।
अङ्गुलत्रितया मुष्टिर्वितस्तिर्द्वादशाङ्गुलि ॥ ९ ॥

---

१ 'ष्टकाग्रभि', २ 'मै' क पाठः

तद्द्वय हस्तमुदिष्टं तच्च किष्कुरिति स्मृतम् ।
एकैकाङ्गुलवृद्धयातो भवन्त्यष्टौ कराः स्फुटम् ॥ १० ॥
प्राजापत्य धनुर्मुष्टिश्चापग्रहमत. परम् ।
प्राच्या वैदेहक नाम्ना वैपुल्य च प्रकीर्तितम् ॥ ११ ॥
इत्थमेकोत्तरत्रिशदङ्गुलान्ताः करा स्मृताः ।
एव त्वशीतिसयुक्तद्विशत करभेदकम् ॥ १२ ॥

हस्तैश्चतुर्भिर्भवतीह दण्डो नीचोत्तम पञ्चभिरेव हस्तैः ।
सार्धाब्धिहस्तैरथ मध्यमोऽय क्रोश सहस्रद्वितयेन तेषाम् ॥
स्याद् योजन क्रोशचतुष्टयेन तथा कराणा दशकेन वश· ।
निवर्तन विशतिसख्यवशैस्तथैव रज्जुर्गजदण्डदीर्घ ॥

आ सन्धेर्बद्धमुष्टिस्तु करोऽर(नि¹त्नि)रुदाहृत· ।
स एवारणिरुद्दिष्टास्याष्टौ चेदाकनिष्ठिका ॥ १५ ॥
प्रादेशतालगोकर्णवितस्त्य. स्युर्यथाक्रमम् ।
तर्जन्यादिकनिष्ठान्तमङ्गुष्ठाग्रात् प्रसारिताः ॥ १६ ॥

मानाङ्गुलै. केवलमेव कुर्याद् देवालयादीनि गृहाणि वा नृणाम्
कुण्डादिकानामथ मण्डलाना सर्वत्र मात्राङ्गुलमिष्यते बुधैः ॥

याने च शयने किष्कुः प्राजापत्य विमानके ।
आरामोद्यानकादौ तु प्राजापत्यकर स्मृतम् ॥ १८ ॥
वास्तूना च धनुर्मुष्टिर्ग्रामादीनामियं तु वा ।
वापीकूपादिमार्गादौ ग्रामादीना धनुर्ग्रहम् ॥ १९ ॥
विप्रादीना करौ द्वौ द्वौ प्रकीर्णकधनुर्ग्रहौ ।
वैपुल्यचापमुष्ट्याख्यौ स्याता भवनमापने ॥ २० ॥

१ 'तीष्टक' क पाठ

प्राजापत्याख्यवैदेहौ किष्कुप्राच्यौ च तत्क्रमात् ।
सर्वेषां सर्ववस्तूनां किष्कुरेवाथवा मतः ॥ २१ ॥

धनुर्ग्रहप्रकीर्णाद्या द्विजानां गृहमापने ।
वैपुल्यं च धनुर्मुष्टिः क्षत्रियाणां विशेषतः ॥ २२ ॥

प्राजापत्यं च वैदेहं वैश्यजात्यार्हकं स्मृतम् ।
किष्कुप्राच्यककूचैव शूद्राणामिति केचन(?) ॥ २३ ॥

दण्डेन तद्ग्रामनिवेशनाद्य पुराणि खेट निगमं च कुर्यात् ।
हस्तेन वेद्यादिषु मानमुक्तं स्वल्पेषु चेदङ्गुलकैर्यवैर्वा ॥ २४ ॥

मुष्टि. स्याद् यज्ञपात्रादौ वितस्तिर्वस्त्रकादिषु ।
ताल बिम्बादिके माने भवेत्तद्धर्मि (?) तद्विधौ ॥ २५ ॥

इति शिल्परत्ने मानसाधनकथन नाम
द्वितीयोऽध्याय ।

---

## तृतीयोऽध्यायः ।

### अथ भूमिलक्षणम् ।

गोमल्लैः फलपुष्पदुग्धतरुभिश्चाढ्या समा प्राक्प्लवा
स्निग्धा धीररवा प्रदक्षिणजलोपेताशुबीजोद्गमा ।
सा प्रोक्ता बहुपांसुरक्षयजला तुल्या च शीतोष्णयोः
श्रेष्ठा भूरधमा समुक्तविपरीता मिश्रिता मध्यमा ॥ १ ॥

वृत्तार्धेन्दुनिभा त्रिपञ्चरसकोणा शूलशूर्पाकृति-
र्मत्स्यानेकपकूर्मपृष्ठकपिलावक्त्रोपमा मेदिनी ।
भस्माङ्गारतुषास्थिकेशचितिवल्मीकादिभिः सयुता
वर्ज्या मध्यनता सगर्भकुहरा विस्रा विदिकस्थापि च ॥ २॥

पङ्कक्लिन्ना रविकरहता वातनाकीटजुष्टा(?)
तोयाभावा विषतरुयुता कण्टकैरन्विता वा ।
पैशाचाढ्या यमपिशितभुग्वह्निदिक्षु स्वभावा-
न्निम्ना भू(रिव?मि)र्नवगृहविधौ निन्दिता शर्कराढ्या ॥ ३॥
पूर्णा सुपद्मा च तथैव भद्रा धूम्रा च भूमिर्विहिता चतुर्धा ।
वक्ष्ये च तासामपि लक्षणानि सक्षेपतो भूमिपरिग्रहार्थम् ॥
प्लक्षन्यग्रोधनिम्बार्जुनबकुलकुलरथा(प?स)नाशोकनिष्पा-
वाङ्कोलैर्मालतीचम्पकतिलखदिरैः कोद्रवैर्मुद्गिता या ।
भूमिर्या भूधराधीश्वरशिखरगता पार्श्वसस्थाथवाद्रेः
पूर्णा सा पुष्टिदात्री सुरनिलयसमा कल्पने स्वल्पतोया ॥
कर्पूरागरुनालिकेरतिलकैर्दर्भै कदम्बार्जुनै-
र्मालेयै. क्रमुकेक्षुकेतककुशैः कुन्दारविन्दोत्पलैः ।
पूर्वोदक्प्लवशालिनी बहुजला वा या दरीदृश्यते
सेयं शान्तिकरी सुरेशयजने सूक्ता सुपद्मा मही ॥ ६ ॥
तीरं वारिनिधेः श्रिताथ सरितस्तीर्थस्य वा दक्षिणे
व्रीहिक्षेत्रविचित्रिताप्यदिशि यज्ञाहांड[१]ध्रिपैरङ्किता ।
कीर्णा पुष्पफलप्रवालनरुभिर्योद्यानहृद्यापि वा
भद्रा सा परिगीयते वसुमती प्रीतिप्रदा यज्वनाम् ॥ ७ ॥
अर्कैर्वेणुविभीतकैः स्नुहियुतैः श्लेष्मातकैः पीलुभिः
सकीर्णा बहुशर्करा च कठिना गर्भान्विता सोषरा ।

---

१ 'वृ' ख पाठ

गृध्रश्येनवराहवायसशिवाशाखामृगैः सन्तत
जुष्टा यष्टुरनिष्टदा निगदिता धूम्रा मही सूराभः ॥ ८ ॥
वारुण्यैन्द्री तथाग्नेयी वायवी भूश्चतुर्विधा ।
तद्भवा च शिला ज्ञेया तन्नामा शुभदा शुभा ॥ ९ ॥
या कोमलतरुव्राता स्वतः पुष्पितकानना ।
जलाशयैश्च सर्वत्र युक्ता भूर्वारुणी स्मृता ॥ १० ॥
या क्षीरवृक्षबहुला सौम्ये यस्या जल महत् ।
व्रीहिक्षेत्रं च याम्याया सा माहेन्द्री क्षितिः स्मृता ॥ ११ ॥
गृध्रकङ्कवराहर्क्षश्येनगोमायुवायसैः ।
सयुक्ता दूरपानीया भूराग्नेयी विनिन्दिता ॥ १२ ॥
अक्षस्नुहिकलिङ्गार्कपीलुश्लेष्मातकण्टकैः ।
युक्ता या निर्जला भूमिरशुभा वायवी स्मृता ॥ १३ ॥
विप्रादिक्रमतः कुशेषुवनदूर्वाकाशयुक्ता भुव-
स्तुल्यातानवितानसिन्धुररसाभ्यशाधिदीर्घा अपि ।
श्वेतापाटलपीतमेचकरुचश्चाज्यासृगन्नासवा-
मोदाः स्वादुकषायतिक्तकटुकास्वादान्विताश्च स्मृताः ॥
अलाभे धवलरम्याया सर्ववर्णहितावहा ।
तथैव प्राक्प्लवा भूमिः सुगन्धा मधुरान्विता ॥ १५ ॥
सङ्कीर्णरूपा वसुधात्र वर्णैर्गन्धै रसैश्चाखिलवर्जनीया ।
एनामनालक्षितवर्णचिह्ना नक्त परीक्षेत निमित्ततश्च ॥
क्ष्मा खात्वामघट निधाय भृतधान्यं वर्धमान मुखे
कृत्वासिच्य घृत दिशासु सितरक्तापीतकृष्णा दशाः ।

विप्रादिक्रमतः प्रदीप्य विधिवन्नीते मुहूर्ते ज्वलेद्
वर्तिर्यस्य धरास्य तासु सकलास्विद्धासु सर्वोचिता ॥ १७ ॥
परेषामपरा शस्ता(त्व[1])परेषा न परा धरा ।
सर्वा मही प्रशस्ता स्याद् देवाना तद्विशेषत. ॥ १८ ॥
तत् खात वा जलापूर्ण कृत्वा शतपद व्रजेत् ।
पुनरागच्छतः प्राग्वत् पूर्ण चेद् भूमिरुत्तमा ॥ १९ ॥
यवन्यूना मध्यमा स्यात् त्याज्या न्यूना ततोऽधिकम् ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षाः पूर्वादिगाः शुभाः ॥ २० ॥
अश्वत्थः पूर्वतो धन्यो दक्षिणे चाप्युदुम्बरः ।
न्यग्रोधः पश्चिमे प्लक्षोऽप्युत्तरेति परे जगुः ॥ २१ ॥
पूर्वाद्युदुम्बराश्वत्थप्लक्षन्यग्रोधकास्तु वा ।
सर्वत्र केसराश्चूताः पुन्नागा नागदाडिमाः ॥ २२ ॥
पनसाश्चम्पकाः पूगा नालिकेराश्च शोभनाः ॥ २२½ ॥
पनसः प्राच्या श्रेष्ठः क्रमुको याम्येऽथ पश्चिमे केरः ।
सौम्ये चूतो धन्यो नागस्तत्रैव केसरः प्राच्याम् ॥ २३½ ॥
तिन्त्रिणिरुदिता याम्ये छत्रिश्रेष्ठे हि पश्चिमे भागे ।
अन्तस्सारा वृक्षा यदि सन्ति ह्यन्तरेव सन्त्वपि ते ॥ २४½ ॥
ये सन्ति त्वचिसारास्तेऽपि च सन्त्वेव सर्वतो बाह्ये ।
सकल सार येषा ते वृक्षाः सर्वदिक्षु युज्यन्ताम् ॥ २५½ ॥
वृक्षा निस्साराश्चेत् तेषा क्षेत्रेषु वर्तन नेष्टम् ।
हाटकतरुरपि नेष्टो मन्दिरसविधेष्वितीरित यस्मात् ॥ २६½ ॥

---

१ 'तोऽसार ॥' क पाठ

तस्मात् सर्वं वृक्षाः सर्वदिगन्ते विनिर्मितास्ते स्युः ॥ २७॥

गोवह्निप्रेतभूताम्बुनागेभघनसञ्ज्ञिताः ।
वीथ्यः प्रागादिनीचत्वाद् ज्ञेया निखिलभूमिषु ॥ २८ ॥

इन्द्राग्न्योरन्तराद्यन्तरालनीचवशात् क्रमात् ।
पैतामहापथाख्यौ च श्मशानं रोगवर्धनम् ॥ २९ ॥

आसुरं प्रथमं पुण्यं दीर्घायुश्चेति वीथयः ।
इन्द्रोन्नतं पुत्रनाशं वह्न्युन्नतमथार्थदम् ॥ ३० ॥

याम्योन्नतमरोगं तु स्त्रीप्रदं राक्षसोन्नतम् ।
तत्र लाभं वारुणोच्चं वायूच्चं धननाशनम् ॥ ३१ ॥

सौम्योच्चं रोगदं विद्यादीशानोच्चं महागदम् ।
द्युस्ते त्वन्तरालाख्याः स्वनामसदृशं फलम् ॥ ३२ ॥

प्राच्या निषिद्धो हि गि(रि.) तच्छायाप्युदये रवेः ।
यत्रापतति तत्रापि ग्रामाद्यं न प्रशस्यते ॥ ३३ ॥

प्राक्या तु चोत्तमा मध्या गर्हिता कन्यसा मही ॥ ३३१ ॥

इति शिल्परत्ने भूमिलक्षणं नाम
तृतीयोऽध्यायः ।

---

अथ चतुर्थोऽध्यायः ।
शुद्धपरग्रहप्रकारः ।

एवं परीक्ष्य सकलै(रुदितै)र्विहीनां
दोषैर्गुणैरुपचितां वसुधामवेक्ष्य ।
शुद्धिं च शास्त्रविहितां विधिवद् धरायाः
कुर्याद् गुरुः सपदि सुष्ठु समार्जितायाः ॥ १ ॥

तत्तद्योगा महीं लब्ध्वा छित्त्वा गुल्मादिकानपि ।
मात्वा गुरुः सुलग्नर्क्षे तत्तदर्थं परिग्रहेत् ॥ २ ॥
प्राकारपर्यन्तमथ प्रकल्प्य दत्त्वा बलिं तत्र च भूतकूरम् ।
शङ्कुं निधाय प्रविधाय सूत्रमुन्मीय भूमिग्रहण विदध्यान् ॥
पुन्नागैकतरूद्भवान् करमितान् तत्पादनाहान् दृढान्
शङ्कून् प्राग्विधिनाथ मन्त्रमहितान्मध्यादिशर्वान्तिमम् ।
मात्वा कल्पितसालसीम्नि परितः शङ्कु द्विसवेष्टित
मन्त्री सम्प्रविसार्य सूत्रमपि गृह्णातु क्षितिं सर्वतः ॥ ४ ॥
तत्तत्सीमासु तच्छङ्कून् विन्यस्य प्रथमं गुरुः ।
ताडयेल्लोहकूटेन मुद्गरेणाथवा समम् ॥ ५ ॥
नाश्मना (वा) न काष्ठेन ताडयेद् दोषकृद् यतः ।
ततः शिल्पी यथेष्टं तु शङ्कून् कूटेन ताडयेत् ॥
सहसा प्रविशेच्छङ्कुर्न विशेद् वात्र विघ्नकृत् ।
शनैर्व्रजन्नृजुः शङ्कुः कर्मसिद्धिं तदा वदेत् ॥ ७ ॥
मध्यादिशतशङ्कूना भिन्ने शीर्णेऽथ ताडने ।
फलानि क्रमशो विद्यात् कर्तुः पुत्रस्य वा मृतिः ॥ ८ ॥
भयं मृतिस्त्वर्थनाशं भयं शोकं मृतिं सुखम् ।
अविशीर्णोच्छ्रितशिखे स्थानवृद्धिं समादिशेत् ॥ ९ ॥
कार्पाससूत्ररज्जुः स्यात् प्रशस्ता सुदृढा समा ।
गौणी कौश्यथवा मौञ्जी तया सूत्रं प्रसारयेत् ॥ १० ॥
नियुक्तसूत्रपाते यो यजमानोऽथवा परः ।
निर्विकारौ यदा स्याता निश्शल्या भुवमादिशेत् ॥ ११ ॥

कण्डूयनादिविकृतौ शल्यमस्तीति निर्दिशेत् ।
श्वसृगालाजगोश्वादीनथ तत्समये तथा ॥ १२ ॥
यदि पश्येदतः सूत्राच्छल्यमस्तीति निर्दिशेत् ।
शिरःकण्डूयनेऽस्थि स्याच्छिरसो हस्तमानके ॥ १३ ॥
मुखस्पर्शे कपाल वा काष्ठ वा चिकुरे तथा ।
कर्णकण्डूयने हस्तत्रिके लोहजशृङ्खलाम् ॥ १४ ॥
असयोरथ बाह्वोर्वा कटौ लोहान् प्रकोष्ठयोः ।
हस्तमात्रे वदेदेवमेवोर्वोः काष्ठकास्थिनी ॥ १५ ॥
उरोहृदययो. स्पर्शे तावन्मात्रेऽस्थि निर्दिशेत् ।
जानुकण्डूयनेऽस्ताम्भः करमात्रे भवेदतः ॥ १६ ॥
जङ्घयो. केशमादेश्य कुञ्जरास्थीनि पादयो. ।
अङ्गुष्ठाद्यङ्गुलिष्वर्षाकालोकास्यं (?) विनिर्दिशेत् ॥
मार्जारलङ्घनेऽप्यस्ति तत्प्रमाणे शुना वदेत् ।
अजादाज तु वा शौन महिषास्थि तुरङ्गमात् ॥ १८ ॥
माहिषेण वदेज्जम्बुकास्थि कौलन्तु जम्बुकात् ।
कौलेन व्याघ्रजं वास्थि व्याघ्रेणैव भवेत् पुनः ॥ १९ ॥
इभेन नार विज्ञेय गर्दभ तु नरेण हि ।
गर्दभेनाजज सूत्रलङ्घने (तु) वदेदिति ॥ २० ॥
क्षेत्रप्रवेशनात् तेषा दर्शने शब्दिते श्रिते ।
तेषा कीर्तनतो वापि शल्यमेव समादिशेत् ॥ २१ ॥
भस्माङ्गारतुषादीनि पक्षिणा लङ्घनादितः ।
वदेत् त्वनुद्धृते शल्ये देवमर्त्यगृहादिकम् ॥ २२ ॥

यदि कुर्यात् तत्र देवे नैव सान्निध्यवर्धनम् ।
(स?)मानुषे तत्र वमता गोनाश च प्रवासनम् ॥ २३ ॥
रोगनैर्धन्यमाक्लेश धननाश च निर्दिशेत् ।
जीवन्मध्ये तु धान्यानि कूर्मो नित्य प्रवर्तयेत् ॥ २४ ॥
मण्डूकोऽप्यचला लक्ष्मीं मूषिको धर्मशीलताम् ।
मध्ये मण्डूककूर्मौ वा स्वर्ण चेद् वितरेन्मणिम् ॥ २५ ॥
खाताज्ञाभ्युद्धरेत् तस्मादुद्धृतश्चेदनर्थकृत् ।
तस्माद् यत्नात् समुद्धृत्य दुःशल्य पुनरञ्जसा ॥ २६ ॥
करोतु शुद्धभूताया कर्षणाद्य गुरुर्भुवि ।
कारयेदसनाद्यैर्वा क्षीरवृक्षैरथापि वा ॥ २७ ॥
कारयेन्मातिमानत्र लक्षणेन हल युगम् ।

अथ हललक्षणम् ।

जिनाङ्गुलायत घ्राण तदर्ध्यर्धा च मेखलाम् ॥ २८ ॥
षडङ्गुल तु विस्तार घ्राणे वेदाङ्गुल घनम् ।
क्रमेण कार्श्यता प्राप्त तस्याग्र जिह्वयाचितम् ॥ २९ ॥
सी(सा?रा)याम त्रिहस्त तद्युग युगकरायतम् ।
तयोः मध्याङ्गुल नाह युगकीलान् करार्धकान् ॥ ३० ॥
युगसख्यामात्रघनान वृषसम्बन्धनक्षमान् ।
करोतु जिह्वा लोहेर्वा खादिरेणाथवा दृढाम् ॥ ३१ ॥
कृष्टपूर्वौ वृषौ स्याता कर्षणे कपिलौ सितौ ।
सुलग्ने विधिनाचार्यस्तत्र कर्षणमाचरेत् ॥ ३२ ॥

---

१ 'मा' क पाठ

काष्ठेष्टकतुषाङ्गारपाषाणास्थिसरीसृपान् ।
हलाग्रेणोद्धृता दृष्ट्वा तस्य विद्यादिदं फलम् ॥ ३३ ॥
काष्ठेष्वग्निभयं सर्वास्विष्टकासु धनागमम् ।
अङ्गारेषु महद् रोगं तुषेष्वेव धनक्षयम् ॥ ३४ ॥
पाषाणेष्वपि कल्याणं कुलनाशं तथास्थिषु ।
+ + + + + + + + + + + + + + + ॥ ३५ ॥

कृष्ट्वा तां कपिलैर्वृषैश्च बहुशः कृत्वा हलाद्यर्नवै-
राचार्योऽथ नवाम्बरो भुवि वपेद् धान्यानि तन्मन्त्रकैः ।
अङ्कुरितान्यभिसेचयेच्च परितः सरत्नं सवर्षये-
दापुष्पाफलमत्र तानि पशुभिः संभक्षयेदादरात् ॥ ३६ ॥
यानि स्वस्वाङ्कुरोक्तानि बीजान्यथ पृथक् पृथक् ।
तानि निष्पावकादीनि विहितान्यत्र वापने ॥ ३७ ॥

भूयस्तत्र विधाय गोनिवसनं नीत्वा च संवत्सरं
मुद्गादीनि पुनश्च तत्र निवपेद् धान्यानि पूर्वक्रमात् ।
भूयस्तान्यपि भक्षयेच्च पशुभिः शुद्धे मुहूर्ते तथा
खात्वा शल्यविमोचितामतिदृढां भूयो विदध्यान्महीम् ॥

त्रिरात्राङ्कुरिता श्रेष्ठा वेदरात्रैस्तु मध्यमा ।
अधमा भूतरात्रैस्तु मही स्याद् बीजवापने ॥ ३९ ॥
विधिनैव स्वीकृतायां धरायां लक्षणान्वितम् ।
ग्रामादिकं करोत्वार्यो गुरुशिल्पिभिरन्वितः ॥ ४० ॥

इति शिल्परत्ने भूमिपरिग्रहणं नाम
चतुर्थोऽध्यायः ।

## अथ पञ्चमोऽध्यायः।

### ग्रामादिलक्षणम्।

चतुरश्चाष्टदण्डा भूः काकिणी तच्चतुर्गुणा।
माषो वेदगुणस्तस्माद् भवेद् वर्तनकाह्वया ॥ १ ॥
तत्पञ्चगुणिता खाटी कुडुम्ब तच्चतुर्गुणम्।
एककुडुम्बसमेत कुटित वाह्येकभोग वा ॥ २ ॥
तल्लक्षणविस्तार वक्ष्ये पश्चाद् विशेषतः(¹) ॥ २३ ॥
द्विजकुलपरिपूर्णं वास्तु यन्मङ्गलाढ्य
नृपवणिगतियुक्त वास्तु यत् तत् पुर स्यात्।
कतिपयजनवासो ग्राम इत्युच्यतेऽस्मिन्
मठमिति पठित यत् तापसाना निवासम् ॥ ३¹ ॥
ग्रामश्च खेटकश्चैव खर्वट दुर्गमेव च ॥ ४ ॥
नगरं राजधानी च पत्तन द्रोणिकामुखम्।
शिबिर स्कन्धवारश्च स्थानीय च विडम्बकम् ॥ ५ ॥
निगमश्चाथ निर्दिष्ट. स्याच्छाखानगर ततः।
एषा चतुर्दशाना च लक्षण पृथगुच्यते ॥ ६ ॥
नद्यादीनां दक्षिणादौ तीरे ग्रामान् निवेशयेत्।
ग्रामयोः खेटक मध्ये राष्ट्रमध्ये तु खर्वटम् ॥ ७ ॥
पर्वते वा वने वाब्धौ दुर्गं स्याद्वा जलावृतम्।
दुर्ग तु पार्वत वन्यमौ(द)क चैरण तथा ॥ ८ ॥
दैवकं धात्वन चैव कृतक चेति सप्तधा।

नृपभवनसमोपेत हस्त्यश्वरथपदातिबहुलमुख्यम् ।
धान्यस्नेहक्षारलवणभैषज्यगन्धविषयुक्तम् ॥ ९३ ॥
लोहाङ्गारस्नायुविषाणवेण्विन्धनादिसर्वयुतम् ।
तृणचर्मशाकयुक्त वल्लूरकसारदारुसयुक्तम् ॥ १०३ ॥
दुर्ग दुर्गममुक्त दुर्लङ्घ्यं दुरवगाहमतिमात्रम् ।
रक्षार्थ च जयार्थ त्वरिभिरभेद्य च दुर्गमिष्ट स्यात् ॥ ११ ॥
गिरिमध्य गिरिपार्श्वं गिरिशिखर पार्वत दुर्गम् ।
निर्जल(तल?)तरुवनगहन वनदुर्ग तदुभयमिश्र स्यात् ॥१२३॥
तदेव सह(ज)जल चेज्जलदुर्ग पङ्कयुक्त वा ।
नद्यब्ध्यावृतक यज्जलदुर्ग निगदित प्राज्ञैः ॥ १३३ ॥
अक्षयजल्न(ल)विपुलैरणगहनसालैररणं प्रोक्तम् ।
इन्द्रश्च वासुदेवो गुहो जयन्तश्च वैश्रवण ॥ १४३ ॥
अश्विन्यो श्रीमन्दिरशिवो च दुर्गा सरस्वती चेति ।
प्राकारस्थास्त्वेते यस्मिस्तद् दिव्यदुर्ग स्यात् ॥ १५३ ॥
धावनकृतकौ दुर्गौ विज्ञेयौ स्वरवनामसदृशतरौ ।
एकोनविंशतिविध दुर्ग प्रायेण कथित स्यात् ॥ १६३ ॥
अक्षयजलान्नभक्ष्यमतिविपुलोर्ध्वगहनसालम् (?) ।
सर्व हि दुर्गजात सप्राकार च सुखरक्षम् ॥ १७३ ॥
बहिरुदकरहितवनच्छन्नपथ दुष्प्रवेश च ।
गोपुरमण्डपयुक्त सोपान लघ्नमच्छन्नम् ॥ १८३ ॥
द्विकवाटचतुष्कुटिकद्यर्गलक करमानद्विकीलम् ।
स्तम्भूणमध्यमाल त्विष्टकसहित च सुदृढसोपानम् ॥ १९३ ॥

द्वाराणि मण्डपसभाशालागाराणि कार्याणि ।
पर्यन्ते यन्त्रयुत परितः परिखैश्च सयुक्तम् ॥ २०॥
पांसुचययुक्तमार्गं विधिवत् कार्यं हि सर्वत्र ।
परितः शिबिरोपेत नानाजनवाससङ्कीर्णम् ॥ २१॥
द्वादशसालायुक्त चतुर वृत्त तदायत वापि ।
नन्द्यावर्त कौक्कुटमिभकुम्भनागवृत्त च ॥ २२॥
नेमिम्न च त्रिकोणं पट्कोणाष्टाश्रनेमिखण्ड च ।
प्राकार चेष्टकया द्वादशहस्तोच्छ्रयादीनम् ॥ २३ ॥
उत्सेधार्धविशालं कार्य स्यात् सर्वदुर्गेपु ।
पासुचययुक्तमार्ग मूला भित्ति समद्वारा ॥ २४॥
राष्ट्रस्य मध्ये नद्या वा समीपे नगर स्मृतम ॥ २५ ॥
तदेव शङ्कुपङ्काद्यै· प्राकाराट्टालगोपुरं ।
शतघ्न्याद्यैश्च परित परिस्तीर्णोच्छ्रिताट्टका ॥ २६ ॥
एकद्वित्रिचतुर्द्वारा राजधानीति कथ्यते ।
नानापण्यधनाकीर्ण सागरानूपमश्रितम् ॥ २७ ॥
सायात्रिकवणिग्जुष्ट पत्तन परिचक्षते ।
तदेवा(ब्ध्या)ब्धे)श्च नद्याश्च सङ्गमागतपोतकम् ॥ २८ ॥
द्वीपान्तरवणिग्जुष्ट द्रोणीमुख बुधाः ।
परराष्ट्रे स्वदेशे वा चतुर्विधबलान्वितम् ॥ २९ ॥
विजिगीषो. सन्निवेश शिबिर तत प्रचक्षते ।
नातिदूरे तदेव स्यान्नृपयोर्युध्यतोर्मिथ. ॥ ३० ॥
सेनानिवेश तु पृथक् स्कन्धावार उदीरित· ।

पर्वतस्याथवा नद्याः पार्श्वे राजबलान्वितम् ॥ ३१ ॥
राष्ट्रस्यान्तकपालाय तत् स्थानीय विदुर्बुधाः ।
कृषीवलादिकावासो ग्रामोपान्ते विडम्बकम् ॥ ३२ ॥
चातुर्वर्ण्यैः कर्मकारैर्नानाकर्मोपजीविभिः ।
पण्याश्वधनधान्याद्यैर्युक्त तु निगम स्मृतम् ॥ ३३ ॥
वने वा नगरोपान्ते नागरैस्तु जनैर्वृतम् ।
क्षेत्रारामाकरोपेत शाखानगरमिष्यते ॥ ३४ ॥

अथ तेषां दण्डमानानि ।

अष्टाष्टदण्डविस्तारो ग्राम स्यादधमाधमः ।
द्विगुणत्रिगुणौ तस्माद् ग्रामौ तौ मध्यमोत्तमौ ॥ ३५ ॥
षट्पञ्चाशच्च द्विशत दण्डाः खेटेऽधमाः स्मृताः ।
विंशत्या त्रिशतैर्दण्डैर्मध्यश्चतुरशीतिभिः ॥ ३६ ॥
त्रिभिः शतैश्चोत्तमः स्यात् खेटं त्वेव त्रिधा स्मृतम् ।
अष्टौ च चत्वारिंशच्च दण्डास्तद्वचतुश्शतम् ॥ ३७ ॥
हीने तु खर्वटे ज्ञेया मध्ये पञ्चशताधिकम् ।
द्वादशैवोत्तमे षट्भिः सप्तत्या पञ्चभिः शतैः ॥ ३८ ॥
हीनदुर्गं षट्शतैश्च चत्वारिंशद्भिरन्वितम् ।
चतुर्दण्डोत्तरैः सप्तशतैर्दुर्गं तु मध्यमम् ॥ ३९ ॥
अष्टाष्टियुक्तसप्तशतैर्युत दुर्गमिहोत्तमम् ? ।
सद्वात्रिंशद्वसुशतैः षण्णवत्याष्टभिः शतैः ॥ ४० ॥
षड्त्तरैर्नवशतैर्नीचे त्रिनगराणि वै ।
सहस्रेण च सार्धेन द्विसहस्रेण च क्रमात् ॥ ४१ ॥

नीचं मध्य तथा श्रेष्ठं नगर मध्यमत्रये।
त्रिचतुष्पञ्चसाहस्रैर्नगराण्युत्तमत्रये ।' ४२ ॥
षट्सप्ताष्टसहस्रैस्तैर्दण्डै· स्युश्चोत्तमोत्तमे ।
नगराणा त्रये तानि नगराणि यथाक्रमम् ॥ ४३ ॥
विकारदण्डवृद्ध्या तत् प्रत्येक नवधा पुन ।
राजधान्यादिकाना तु मान नगरवद् भवेत् ॥ ४४ ॥

अथान्यथाग्रामः ।

मानाद् ग्रामस्योत्तमस्य पर्यन्तो लक्षदण्डवान् ।
तस्माद् विंशतिसाहस्रदण्डह्रासान क्रमेण तु ॥ ४५ ॥
ग्रामाणा पञ्चधा मान मुख्यतैवमुदीरितम् (?) ।
तस्माद् विंशतिसाहस्रदण्डात् पञ्चशतस्य तु ॥ ४६ ॥
ह्रासक्रमाद् ग्राममानान्यापञ्चशतदण्डत. ।
चत्वारिंशत्प्रभेदानि मध्यमाने भवन्तिह ॥ ४७ ॥
विस्तारात् पादमर्ध वा त्रिपाद तत्सम तु वा ।
मुखायामो भवेदेषा ग्रामाङ्गिना विशेषतः ॥ ४८ ॥
विपुले तु मुखाग्राम षड्शाशै प्रकीर्तितम् ।
एतावन्मानुषेष्वेव मान ग्रामादिषु स्मृतम् ॥ ४९ ॥
देवासुरपुरादीना मान न ज्ञायते नरै· ।
सहस्रैर्जगतीपा[illegible]र्द्विजन्मनाम् ॥ ५० ॥
श्रेष्ठोत्तम. श्रेष्ठमध्यो ग्राम. श्रेष्ठाधमस्तथा ।
सप्तषट्पञ्चसाहस्रैर्ग्रामा मध्योत्तमादयः ॥ ५१ ॥
चतुस्त्रिद्विसहस्रैस्तु ग्रामा. स्युरधमत्रया. ।
विप्राणा दशसप्तेषुशतैर्नीचोत्तमादयः ॥ ५२ ॥

ग्रामा भवन्त्यथ क्षुद्रास्तेऽप्येकादशधा स्मृताः ।
चतुस्त्रिद्विशतैरिष्टा शतैश्चतुरशीतिकैः ॥ ५३ ॥
सचतुष्षष्टिपञ्चाशद्वात्रिंशत्यष्टकैरपि ।
त्रिका(रा)दित्यसङ्ख्यैश्च ब्राह्मणैः सुनिवेशितैः ॥ ५४ ॥
एकद्विजाद्यादशकरेकभोगादिका दश ।
सकलाद्यासनान्ते तु पदे ग्रामादि विन्यसेत् ॥ ५५ ॥
युग्मे सूत्र तु वीथ्या स्युरयुग्मे पदपङ्क्तयः ।
द्वयोर्न सङ्कर कुर्यात् सङ्करश्चेदनर्थकृत् ॥ ५६ ॥

अथ तेषां विन्यासभेदाः ।

दण्डकः स्वस्तिकश्चैव प्रस्तरश्च प्रकीर्णकः ।
नन्द्यावर्त परागश्च पद्मकः श्रीप्रतिष्ठितः ॥ ५७ ॥
ग्रामादीना तु सामान्य विन्यासस्त्वष्टधा स्मृतः ।
तस्मिन्नेकैव वी(थ्या'थी) स्यात् प्राचीना सोऽपि दण्डकः ॥
प्राग्वीथिर्दक्षिणगा दक्षिणवीथिः प्रतीचिमुखा ।
पश्चिमवीथ्युत्तरगा प्रागग्रा चोत्तरी वीथिः ॥ ५९ ॥
एव चेत स्वस्तिकनाम्ना शिल्पशास्त्रेषु कीर्तितः ।
प्राक्प्रत्यगायतास्तिस्रः सौम्यास्तिस्रोऽथ वीथयः ॥ ६० ॥
चतस्रः पञ्च वा षड् वा सप्त वा प्रस्तरस्तु सः ।
चतस्रो वीथयः प्राच्या सौम्या द्वादशवीथयः ॥ ६१ ॥
रुद्रदिङ्नन्दवसुभिर्मिता वापि प्रकीर्णके ।
प्रत्यग्गा वीथयः पञ्च सौम्यान्ताः स्युस्त्रयोदश ॥ ६२ ॥

शक्यां वातिशक्यांप्यष्टध्यात्यष्टधा च सम्मितम् ।
नन्द्यावर्ते तु विन्यासे ग्रामादौ प्रभवन्ति हि ॥ ६३ ॥
प्राच्योऽष्टवीथयो यस्मिन् सौम्या धृत्यादिसख्यया ।
आकृत्यन्त समा यत्र परागोऽसौ विधीयते ॥ ६४ ॥
प्राचीना वीथय. सप्त त्रयोविंशादित क्रमात् ।
आ सप्तविंशतेः सौम्या विन्यासे पद्मके स्मृताः ॥ ६५ ॥
प्राचीना वीथयोऽष्टौ स्युरष्टाविंशतिकादित. ।
आद्वात्रिंशदुदीच्यः स्युर्विन्यासे श्रीप्रतिष्ठिते ॥ ६६ ॥
एकद्वित्रिचतुष्पञ्चदण्डैः स्याद् वीथिविस्तृतिः ।
प्रागुत्तराभ्या वीथिभ्या कर्करीबन्धमध्यमा ॥ ६७ ॥
चतुर्द्वारा भावयेयुर्वप्राभ्या दण्डकादय[1] ।
ग्रामपर्यन्तवीथिस्तु ख्याता मङ्गलवीथिका ॥ ६८ ॥
नगरे रथवीथि सा रथ्याख्या खर्वटादिषु ।

अथ तेषूद्यानवाप्यादीना स्थानानि ।

ग्रामादिष्वथ पर्जन्ये जलमार्गस्त्वथैन्द्रगः ॥ ६९ ॥
ईशार्गलान्तराले वा प्रागुदीचि प्लवो यथा ।
शस्त सर्वत्र वाप्यादि ह्युत्तरे पुष्पवाटिका ॥ ७० ॥
दक्षिणे गणिकावाट पारतः शूद्रजन्मनाम् ।
वैश्याना वणिजा प्राच्या मध्ये राजापणो भवेत् ॥ ७१ ॥
प्रागुदीच्या कुलालाना वापकाना च तत्र हि ।
जालिकाना तु वायव्ये सूनाना पश्चिमे गृहम् ॥ ७२ ॥

---

१ 'च्या षड्वी' ख पाठ

तैलविक्रयिणा सौम्ये तक्ष्णा वाय्यनिलेऽनले ।
वायव्ये कारुकादीनां रजकानां तु पश्चिमे ॥ ७३ ॥
क्रोशद्वये वा तस्यार्धे बहिश्चण्डालपक्कणम् ।
प्रागुत्तरेण तु क्रोशाद् बहिः पितृवनं भवेत् ॥ ७४ ॥
अनुक्तानां तथान्येषां युक्त्यावासं प्रकल्पयेत् ।

अथ द्रोणीमुखादौ भेदः ।

परितोऽत्य(१)पदयुक्तेर्मध्ये वणिजां गृहश्रेणिः ॥ ७५ ॥
तद्दक्षिणतः पार्श्वे शेषं स्यात् तन्तुवायानाम् ।
उत्तरतस्तत्तद्वद् वासालिर्यन्त्रिकाणां तु ॥ ७६ ॥
कर्मोपजीविनां स्याद् गृहगणनमथ तत्पथाद् बाह्ये ।
ताम्बूलादिफलं च प्रोक्तं सारान्वितं द्रव्यम् ॥ ७७ ॥
ईशानादिमहेन्द्रद्वारान्तं चान्तरापणं न्यस्तम् ।
तत्रैव मत्स्यमांसं शुष्कं शाकं च विज्ञेयम् ॥ ७८ ॥
माहेन्द्राद्यग्न्यन्तं भक्ष्यं भोज्यं च निर्दिष्टम् ।
अग्न्याद्यिगृहक्षतपर्यन्तं तत्र भाण्डानि (?) ॥ ७९ ॥
तस्मान्निर्ऋतिपदान्तं कार्यादिकमत्र विज्ञेयम् ।
निर्ऋतेः पुष्पपदादिदन्तपदान्तेऽपि वस्त्रं स्यात् ॥ ८० ॥
तस्मात् समीरणान्तं तण्डुलमथ धान्यपञ्चकं गव्यम् ।
तस्मात् फल्लाटान्तं वस्त्रं कौशेयमित्यादि ॥ ८१ ॥

१. 'क्ते', ग पाठ  २ 'यान्तमि' क पाठ

तत्रैव लवणादिद्रव्यं तैलादिकं ज्ञेयम् ।
तस्मादीशपदान्तं सपुष्पकं गन्धकलभादि ॥ ८२ ॥
अभ्यन्तरगतमार्गेष्वथ रत्नं हाटकं वस्त्रम् ।
माञ्जिष्ठमरिचमपिरतं (?) ताम्रादिकं लोहम् ॥ ८३ ॥
पिप्पलीकं हारिद्रं मधुघृततैलादिकं मर्वम् ।
तत्रान्तर्बाह्ये (वा) भैषज्यं क्वापि सर्वतः कार्यम् ॥ ८४ ॥
एवमनुक्तद्रव्याण्यपि च भवन्त्वत्र युक्तितः स्थाने ।

अथ राजधान्यादिभेदः ।

राजधान्या नृपावासः पाकशालान्तरिक्षके ॥ ८५ ॥
अधीशयोर्वा पर्जन्ये शय्यासद्म गृहक्षते ।
अस्त्रशाला च निर्ऋतौ वारुणे भोजनालयम् ॥ ८६ ॥
विहारशाला वायौ स्यात् फल्लाटे कोशसचयम् ।
गोष्ठागार तथा सौम्ये व्यायामोऽप्यर्गले स्मृतः ॥ ८७ ॥
पर्जन्ये स्नानभवनमैशान्या चार्वना गृहम् ।
नृत्तशाला तु गान्धर्वे पृष्णि वा गजमन्दिरम् ॥ ८८ ॥
दित्यदित्योस्तुरङ्गाणां स्त्रीणां सौम्ये च पश्चिमे ।
मध्ये प्रपामण्डपं मा॰ वायौ चार्चा च कारयेत् ॥ ८९ ॥
[illegible]ध्ये ब्रह्मगृहं नृपास्थितिगृहं मित्रे विहारोऽनिले
व्यायामोऽर्गलके धनं धनपतौ स्नानादि पर्जन्यके ।
शेऽर्वाग्यथ भुक्तिसद्म वरुणे नृत्तादि गान्धर्वकं
शस्त्राद्य निर्ऋतौ गृहक्षतपदे शय्यागृहं भूभुजाम् ॥ ९० ॥

एवं ग्रामपुरादिभेदमखिलं प्रोक्तं यथालक्षणं
ब्रह्मागस्त्यपुरन्दरैरपि यथा त्वष्ट्रा मयेनोदितम् ।
यद् विज्ञाय निवेशितेषु शुभदो भूयादशेषामरैः
सपूज्यो मुनिभिस्तथैव मनुजैर्देवो मृडानीपतिः ॥ ९१ ॥

इति शिल्परत्ने ग्रामादिलक्षणं नाम
पञ्चमोऽध्यायः ।

अथ षष्ठोऽध्यायः ।

अथ पदविन्यासः ।

पदविन्यासः कथ्यते वास्तुसिद्धये ।
सकलं पेचकं पीठं महापीठोपपीठके ॥ १ ॥
उग्रपीठं स्थण्डिलं च मण्डूकपरशायिकम् ।
आसनं च तथा स्थानीयं च देशीयमुच्यते ॥ २ ॥
उभयचण्डिताख्यपदं तथा भद्रमहासनम् ।
पद्मगर्भं त्रियुतकं वृत्ताभोगाभिधं पुनः ॥ ३ ॥
कर्णाष्टकपदं तद्वत् तथैव गणिकापदम् ।
पदं सूर्यविशालं तु सुसहितपदं पुनः ॥ ४ ॥
सुप्रतीकान्तकं तद्वद् विशालं विप्रगर्भकम् ।
विश्वेशं विपुलभोगं तथा विप्रतिकान्तकम् ॥ ५ ॥
विशालाक्षं विप्रभक्तिकं च विश्वेशसारकम् ।
तथैवेश्वरकान्ताख्यमिन्द्रकान्तपदं पुनः ॥ ६ ॥
द्वात्रिंशच्छेदसयुक्तमेवं पदमिति स्मृतम् ।
प्रान्तसूत्रचतुष्कान्तरैकं स्यात् सकलं पदम् ॥ ७ ॥

प्राच्योदीच्यैककोष्ठादिसप्तवृद्धा क्रमात्तयेत् ॥ ८ ॥
चतुष्पद पेचक स्यात पीठ नवपद स्मृतम् ।
महापीठ षोडशभि' पञ्चविंशति(कै) पदैः ॥ ९ ॥
उपपीठ तु षट्त्रिंशत्पदैः स्यादुग्रपीठकम् ।
स्थण्डिल ह्यूनपञ्चाशन्मण्डूक चाष्टकाष्टकैः ॥ १० ॥
एकाशीतिपदै ख्यात क्षेत्र(म्यात्)परशायिकम् ।
आसन शतकोष्ठै. स्यादेकविंशाधिक शतम् ॥ ११ ॥
पदं स्थानीयक नाम चतुश्चत्वारिंशताधिकम् ।
दशवर्गपद तद्वत् तथा देशीयमुच्यते ॥ १२ ॥
नवषष्ट्युत्तरशत पद चोभयचण्डितम् ।
(चतुरु)नद्विशतपद ख्यात भद्रमहासनम् ॥ १३ ॥
सपञ्चविंशद्विशत पद्मगर्भमिति स्मृतम् ।
षट्पञ्चाशद्विशत(क)पद त्रियुतनामकम् ॥ १४ ॥
एकोननवतियुग्द्विशत वृत्तभोगकम् ।
सचतुर्विंशत्रि[illegible] [illegible] कर्णाष्टकाभिधम ॥ १५ ॥
त्रिशतं चैकषष्ट[illegible] [illegible] गणिकमञ्जितम् ।
चतुश्शतपद सू[illegible] [illegible] परिकीर्तितम् ॥ १६ ॥
सुसहितपद चैकचत्वा[illegible]शच्चतुश्शतम् ।
चतुरशीतिसयुक्त चतुःशतपद पुनः ॥ १७ ॥
नाम्ना सुप्रतिकान्त स्यादेकोनत्रिशतान्वितम् ।
पद पञ्चशतं नाम्ना विशालकमिति स्मृतम् ॥ १८ ॥

षट्सप्तत्या पञ्चशतं विप्रगर्भमिति स्मृतम् ।
विश्वेशपदमेव तु शरवर्गाढ्यषट्छतम् ॥ १९ ॥

षट्सप्ततिच्छतक पद विपुलभोगकम् ।
नवविंशतिक सप्तशत विप्रतिकान्तकम् ॥ २० ॥

विशालाक्षपद वेदाशीतिसप्तशत पदम् ।
एकोनषष्टियुत नवशतपद पुनः ॥ २१ ॥

विप्रभक्तिकसज्ञ स्यात् पर विश्वेशसारकम् ।
पदैर्नवशतैर्युक्त तथैवेश्वरकान्तकम् ॥ २२ ॥

एकषष्टियुतैः कोष्ठैः पर नवशतै स्मृतम् ।
चतुर्विंशतिसाहस्रामिन्द्रकान्तपदं विदुः ॥ २३ ॥

एव द्वात्रिंशतिविध पदाना न्यासमीरितम् ॥ २३½ ॥

आद्य पद सकलमेकपद यतीना-
मिष्ट हि विष्टरमिहाशनवह्निकार्ये ।
पैत्रामरादियजन गुरुपूजनं च
तस्मिन् स्थितो निखिलदेवमयो विरिञ्चः ॥२४½ ॥

पैशाचकादिसविपग्रहतक्षतास्ते
पूज्या हि पेचकपदे चतुरश्रयुक्ते ।
तस्मिन् विधेयमधुना विधिना विधिज्ञै
शैव च निष्कलमथो सकल च युक्त्या ॥२५½॥

अथ पीठपदे नवभागयुते यजत दिश्यथ वेदचतुष्टयम् ।
विदिशीशपदाद्युदकं दहन पवनं गगनमन्तरतो महिम् ॥२६½॥

षोडशाश्च महापीठं पञ्चपञ्चाशरान्वितम् ।
कर्णसूत्रद्वयेनापि कोणकोष्ठे वितथो यम ॥ २७ ॥
भृङ्गश्च पितृसुग्रीवौ वरुण. शोषमारुतौ ।
मुख्यः सोमोऽदितिश्चापि बाह्ये देवा. प्रकीर्तिताः ॥२८॥
आपवत्सार्यसावित्रा विवस्वानिन्द्रमित्रकौ ।
रुद्रो महीधरश्चान्तर्मध्ये ब्रह्माग्यकोष्ठग. ॥ २९ ॥
उग्रपीठं भवेद् यत्र पञ्चविंशत्पदान्वितम् ।
तत्रैता देवताः पूज्याः पृथगेकपदस्थिताः ॥ ३० ॥
उग्रपीठपदे मध्ये चतुष्कोष्ठगतो विधिः ।
आर्यकश्च विवस्वांश्च मित्रकोऽथ महीधर. ॥ ३१ ॥
पदद्वितयगा ह्यन्ये पदगा इति कीर्तिता. ।
स्थण्डिलाख्यपदे पूज्या. ॥ ३२ ॥
पदानामपि सर्वेषां मण्डूकं चापि तत्परम् ।
अर्चित सर्ववस्तूनामासनाख्य परं तथा ॥ ३३ ॥
तस्मात् सङ्क्षिप्य तन्त्रेभ्यो वक्ष्येऽहमपि तत्त्रयम् ॥३४॥
कृत्वा चतुष्षष्टिपदानि भूयः
कोणेषु सूत्रे विनिवेशयेद् द्वे ।
तत्र स्थितानामपि [illegible]
वक्ष्ये पदानां नियमं विशेषात् ॥ ३५ ॥
ब्रह्मा मध्यचतुष्पदप्रणिहितो दिक्ष्वार्यकाद्याः स्थिता-
स्तद्बाह्येऽथ चतस्र एकपदगे द्वे द्वे स्थिते पार्श्वयो. ।
कोणस्थाप्यथ षोडशार्धपदगा कोणेषु बाह्ये तथा
दिक्स्था. षोडश देवता द्विपदगाश्चाष्टौ बहिर्दिग्गताः ॥३६॥

ईशानपर्जन्यजयन्तशङ्कुध्वान्तापनुत्सत्यभृशान्तरिक्षाः ।
अग्निश्च पूषा वितथाभिधानो गृहक्षतः प्रेतनिवासकर्ता ॥३७॥
गन्धर्वसज्ञस्त्वथ भृङ्गराजो मृगाभिधानः पितरः प्रशस्ताः ।
दौवारिकः पश्चिमपूर्वमस्थाः सुग्रीवसञ्ज्ञस्त्वथ पुष्पदन्तः ॥३८
भूयः प्रशस्तौ वरुणासुरौ च शोषश्च रोगः पवनो भुजङ्गः ।
मुख्योऽथ फल्लाटनिशाकरौ च भूयोऽर्गलोऽदित्युदितिक्रमेण ॥
विष्कम्भबाह्यस्थपदप्रविष्टा द्वात्रिंशदेताः परितः प्रदिष्टाः ।
अन्तस्थकोणेऽर्धपदेषु चाष्टौ वक्ष्ये चनस्त्रश्च दिशासु योज्याः ॥
सावित्रः सविता हुताशनदिशि ब्रह्माग्निमध्येऽर्धगा-
विन्द्रश्चेन्द्रजयश्च राक्षसदिशि ख्यातौ पदार्धस्थितौ ।
रुद्रो रुद्रजयश्च वायुदिशि च ख्यातौ तयेशार्धगा-
वापश्चापि तथापवत्स इति च द्वन्द्वस्थिता देवताः ॥४१॥

पूर्वादिदिक्षु क्रमशः स्थिताः स्यु-
स्तथार्यकश्चापि पुनर्विवस्वान् ।
मित्रश्च पश्चाच्च महीधराख्या
ब्रह्मा च मध्यस्थचतुष्पदस्थः ॥ ४२ ॥

दिक्षु कोणेषु बाह्यस्थाः पदबाह्ये पुनः क्रमात् ।
शर्वः स्कन्दार्यमाह्वौ च जम्भकः पिलिपिञ्जकः ॥ ४३
चरकी च विदारी च पतना पापराक्षसी ।
एवं मण्डूकपदगा कीर्तिता देवता क्रमात् ॥ ४४ ॥
एकाशीतिपदं कृत्वा पदे परमशायिके ।
मध्ये नवपदः स्थाप्यो ब्रह्मा लोकपितामह ॥ ४५ ॥

ततो दिक्षु च चत्वारि षट्पदेष्वार्यकादयः ।
तत्राष्टौ द्विपदस्थाः स्युः कोणे सावित्रकादय. ॥ ४६ ॥
ईशानाद्याः पदैकस्था सर्वमन्यद् यथापुरम् ॥ ४६½ ॥
एव पङ्क्तिकृतिप्रभिन्नपदके ब्रह्मा पदे षोडशे
मध्ये तत्र बहि. पदाष्टकगता दिक्ष्वार्यकाद्या क्रमात ।
सावित्रादिकदेवताश्च द्विपदस्थाप्याश्च पूर्वक्रमा-
दीशानप्रमुखाश्च पूर्ववदिद स्थान पदे चासने ॥ ४७½ ॥
इन्द्रकान्तपद यावत् तावन्निश्चितबुद्धिमान् ॥ ४८ ॥
एव समूहयेत् तत्र तत्र दैवतनिर्णयम् ।
समानि यानि कोष्ठानि चतुष्पष्टिवदिष्यते ॥ ४९ ॥
असमानि यानि तान्येवमेकाशीतिवदिष्यते ।
ब्रह्माण तु निरीक्ष्यैते स्थितास्तत्तत्पदेऽमरा ॥ ५० ॥

इति शिल्परत्ने पदविन्यासो नाम
षष्ठोऽध्याय ।

अथ सप्तमोऽध्याय ।

अथ वास्तुपूजा ।

पुरा सुरासुरे युद्धे पुरन्दरमुखैः सुरै ।
विष्णोः प्रभावभूम्नैव भग्ना पेतुरथासुरा ॥ १ ॥
गुरुर्भृगुस्ततस्तेषा सरम्भाद् भृशकोपित ।
जुहाव हव्य हव्यादे छाग चैक सलक्षणम् ॥ २ ॥
स्वेदाम्भ.कणिका तस्य यत् पपात हविर्भुजि ।
तत्तेजसा स तुच्छागश्छागवक्त्रोऽसुरोऽभवत् ॥ ३ ॥

भूमि दिव च सजराद्यतैरेवाभोगवर्षणा (¹) ।
उपतिष्ठन्मुनिश्रेष्ठ किंकरोमीति चाब्रवीत् ॥ ४ ॥
तमाबभाषे भृगुजो जृम्भमाण भयानकम् ।
विबुधानबुधप्रज्ञान् भ्रंशयाशु त्रिविष्टपात् ॥ ५ ॥
इत्युक्तस्तर्जयन् नादैर्निर्गच्छन् स्वमुखानले ।
निर्दहन्निव लोकांल्लीन् निर्जरानभ्यधावत ॥ ६ ॥
ऋभवोऽपि भयात् तस्य विभावैर्भ्रंशितैः स्वकैः ।
अभिजग्मुर्विभु शम्भु भव भूतिविभूषणम् ॥ ७ ॥
भवोऽप्यभयदस्तेषा भार्गवाभिभवाद् भृशम् ।
भग्नाना भूतयेऽथाक्षणस्तृतीयादग्निमुत्थितम् ॥ ८ ॥
आदिशद् भूतरूप न भस्मीकुरु भृगोः सुतम् ।
ततश्छागासुरं क्रूर प्रवृद्ध वपुमर्हसि ॥ ९ ॥
इत्युक्तः क्व गतोऽसीति वह्निर्दुद्राव भार्गवम् ।
विप्रद्रुतो भयात् सोऽपि बभ्राम भुवनत्रयम् ॥ १० ॥
रक्षितारमदृष्ट्वान्यमृते भसितभूषणात् ।
ततस्तनीयसीं कृत्वा तनु स्वा योगशक्तितः ॥ ११ ॥
विवेश शर्मणे शम्भोः श्रवणेन शिवान्तरम् ।
स तस्योदरमाविश्य शङ्करस्य शिवङ्करम् ॥ १२ ॥
ददर्श च जगद्विश्व + + + विश्वतश्चसत् ।
देवोऽपि दिव्यदर्शित्वान्निशाम्य स्वोदरेऽसुरम् ॥ १३ ॥

१ 'र' ख पाठ

मां भैर्भागव' तुष्टोऽहं नयनुद्ध्यानया तव ।
अत्रोषितोऽसि पुत्रो मे निर्गच्छ स्वेच्छया द्रुत. ॥ १४ ॥
अग्रचग्रहपद दत्त तथैश्वर्य महत् तव ।
अथ शुक्र. प्रणम्येरा विज्ञाय जगदीश्वरम् ॥ १५ ॥
कृतार्थोऽनुगृहीतोऽस्मि मत्तोऽन्य कोऽधुना कृती ।
इत्युक्तः प्रणत प्रीतः शुक्र वक्रेन्दुशेखर ॥ १६ ॥
तुष्टोऽस्मि वरयाभीष्ट वर शुक्र' प्रियोऽसि मे ।
सोऽपि वव्रे वर तत्र तच्छागदनुज पुर ॥ १७ ॥
पुरारेः पातयन् पद्मामभयस्तस्य वाञ्छित' ।
अधाधोवदन दैत्य दण्डवत् पतित क्षितौ ॥ १८ ॥
प्राह प्रसन्नवदन' सर्वं ददामि वर च यत् ।
वाञ्छित छाग' नत् तुभ्यमित्युक्त. प्राह शङ्करम् ॥ १९ ॥
त्वदनिष्ट यदज्ञानान्मयेशा दुरनुष्ठितम् ।
क्षन्तुमर्हसि तत् क्षमाया वसिष्ये त्वत्प्रसादत' ॥ २० ॥
अविरोधेन देवाना वरमेतत् प्रयच्छ मे ।
मयि ब्रह्मादयो देवा वमन्त सन्तु पूजिता' ॥ २१ ॥
श्रुत्वैतच्छूलहस्तोऽपि प्राह वस्तु वर त्वया ।
याचितो यत् ततो नाम्ना वास्तुपोऽसि तथास्तु ते ॥ २२ ॥
अद्यप्रभृति भूलोके दैव वान्यच्च मानुषम् ।
कुर्वन्तो वास्तु वासार्थं प्रथम त्वा यजन्तु ते ॥ २३ ॥

---

१ 'म' क पाठ

पुष्पैश्च धूपदीपैश्च बलिभिश्च महार्हणैः।
त्वं च त्वद्देहसंस्थाश्च पूज्याः स्युर्देवताः क्रमात् ॥ २४ ॥

एवं मयैव विहितं कुर्वतां वास्तुपूजनम्।
तदायतनवेश्मादौ वसतां सन्तु संपदः ॥ २५ ॥

अकृत्वा (वा)स्तुयजनं प्रासादभवनादिकम्।
कृतं तदासुर सर्वं भूयात् तत्र च यत् कृतम् ॥ २६ ॥

इति दत्त्वा वरं देवः शुक्रवास्तुपयोः समम्।
वस्तु देवान् नियुज्यास्मिन् तत्रैवान्तरधीयत ॥ २७ ॥

यद्देशदिङ्मुखं शंभोः पादयोः पतितोऽसुरः।
शुक्रेण देवैरुषितस्तथैवाभूद् विभोर्वरात् ॥ २८ ॥

तथैवाधोमुखोऽद्यापि वास्तुरीशानदिक्छिरः ॥ २८½ ॥

ईशो तस्य शिरस्तदा विनिहितः पादौ निरृत्या स्थितौ
वायव्ये च हुताशने च भुजयोः पद्भ्या तथा कूर्परे।
क्षिप्तं वक्षसि हस्तयोस्तलमिति प्रोक्ता च तस्य स्थिति-
स्तस्याङ्गेषु च देवता विनिहिताः प्रोक्ताः क्रमात् सूरिभिः॥

तस्येशः शिरसि स्थितश्च नयने सव्ये तथा दक्षिणे
पर्जन्यश्च तथा दितिश्च वदने चापः पुनः संस्थितः।
भूयस्तस्य च कन्धरे विनिहितः स्यादापवत्सस्तथा
पश्चात् तस्य तथांसयोर्विनिहिते स्यातां जयन्तादिती ॥ ३०½ ॥

भूयो महेन्द्रप्रमुखार्गलाद्याः संस्थापिताः स्युर्भुजयोः क्रमेण।
सावित्ररुद्रौ सवितेन्द्रजिच्च भूयः प्रकोष्ठद्वयसंस्थिताः स्युः ॥

ब्रह्मा च नाभौ स्तनयोर्द्वये च
सस्थापितौ चार्यमहीधरौ च।
कुक्षौ विवस्वाश्च तथैव मित्रः
पादद्वये स्युः पितरो निविष्टा. ॥ ३३ ॥

इन्द्रश्च मेढ्रे वृषणद्वये च पश्चात् तथैवेन्द्रजयो निविष्टः।
शिष्टा यथायुक्तिगतास्य देहे प्रत्येकमासा प्रवदामि पूजाम् ॥

अथा(न्य?न्येषा) मते वास्तुर्निकुब्ज. प्राक्शिरो भवेत्॥ ३४ ॥

अधोमुखो महीपृष्ठे वक्ष्ये तत्स्थामरान् क्रमात्।
तस्योत्तमाङ्गे विज्ञेया + + काभिवदेवता. ॥ ३५ ॥

सविता दक्षिणभुजे सवित्रः कक्ष उच्यते।
आपश्चैवापवत्सश्च सकक्षे वामतो भुजे ॥ ३६ ॥

विवस्वान् दक्षिणे पार्श्वे वामपार्श्वे महीधर.।
मध्ये ब्रह्मा स्वय तद्वन्मित्र. पुस्त्वेऽभिधीयते ॥ ३७ ॥

इन्द्रश्चेन्द्रजयश्चैव दक्षिणे पादे ईरित.।
रुद्रो रुद्रजयो वामपादे शेषा बहि. स्थिता· ॥ ३८ ॥

गृहे गृहे मनुष्याणा विबुधाना तथव च।
ग्रामखेटपुरादौ वा कार्यं · · · वास्तुपूजनम् ॥ ३९ ॥

कर्मादौ च समाप्तौ च मध्ये च शुभमिच्छता।
सुमुहूर्ते विशुद्धेऽस्मिन् गोमयालिप्तभूतले ॥ ४० ॥

मण्डूकाख्यपदेनाथ तत्परेणाथवान्यत.।
पिष्टैः प्रोक्तक्रमात् कार्यं मण्डल सुमनोहरम् ॥ ४१ ॥

ईशानाद्याः श्वेतकृष्णौ च शुक्लः
श्यामो रक्तः श्यामकृष्णाच्छवर्णः ।
रक्तश्यामौ शुक्लकृष्णौ च रक्तो
दूर्वाश्यामः पीतकृष्णो जपाभः ॥ ४२ ॥

धूम्रो रक्तः शङ्खवर्णोऽमृताभः
कृष्णः सन्ध्यामेघरुग् धूम्रकृष्णौ ।
हेमाभस्ते धूम्रमुक्ताजपाभाः
श्यामश्वेतौ कृष्णरक्तौ क्रमात् स्युः ॥ ४३ ॥

सिन्दूराभास्त्वार्यकाद्याश्चतस्र
श्वेतश्यामौ धूम्रकृष्णौ क्रमेण ।
सावित्राद्याः पीतरक्तौ घनाभौ
मध्ये ब्रह्मा तप्तहेमप्रभः स्यात् ॥ ४४ ॥

शर्वस्कन्दः श्वेतवर्णोऽर्यमाह्वो
रक्तः कृष्णो जम्भकोऽन्यः सिताभः ।
श्यामा धूम्रा रक्तवर्णा चरक्या-
द्या स्युर्मन्दारार्तवाभाः क्रमेण ॥ ४५ ॥

तत्तद्वर्णपरागैर्वा चित्रिते मण्डलोत्तमे ।
मनोहरे गुरुपूजनामुपहारैः समाचरेत् ॥ ४६ ॥
(केलि?) आश्रित्य मार्गं मतिमानथैषा-
मेकं च वास्तु परिपूजयेत् तु ।
अङ्गेषु तस्याप्यथ देवताश्च
सङ्कल्प्य सम्यग् परिपूजयेत् ताः ॥ ४७ ॥

परेशपूजाथ घृताक्षताभि. पर्जन्यकस्योत्पलगन्धतोयै ।
पीता जयन्तस्य भवेत् पताका रक्तान्नदीपैश्च यजेन्महेन्द्रम् ॥
सूर्यस्य पीतान्नवितानकाभ्या सत्यस्य साज्येन तथोदकेन ।
गोधूमकान्नेन भृशस्य पूजा कार्यान्तरिक्षस्य तु माममाषै ॥
अग्नि स्रुवाभ्यर्च्य तथैव लाजै पूपाख्यमिष्ट्वा वितथ च हेम्ना ।
मध्वोदनाभ्या च गृहक्षताख्य मासौदनाभ्या यममर्चयेच्च ॥
गन्धर्वमिष्ट्वा कुसुमैः सुगन्धैः स्यात् पक्षिजिह्वा त्वथ भृङ्गराजे ।
पूजा मृगस्याथ तिलैर्यवैर्वा पित्र निर्ऋत्यै कृसर यथावत् ॥
दौवारिक शोभनदन्तकाष्ठै सुग्रीवमिष्ट्वा तु यत्र सपूपै ।
स्तम्बैः कुशानामथ पुष्पदन्त तद्दजलेश मितपुण्डरीकै ॥
मध्वक्षताभ्यामसुराय पूजा शेपाय चान्न घृतमिश्रित स्यात् ।
नीवारकान्नेन तु रोगपूजा चाज्येन वायोर्घृतलड्डुकैश्च ॥
नागप्रसूनैरपि नागपूजा कुर्यात् तु मुख्याय तु मोदकैश्च ।
फल्लाटसस्यस्य समुद्गमन्न सोमाय गन्न मधुपायसाज्ये ॥ ५४ ॥
भूयोऽक्षतैर्गलमर्चयित्वा [illegible] च ।
माषान्नभक्ष्यैरदिति यथावत् [illegible] क्रमशो विभावयेत् ॥
आपस्तु दुग्धेन तथापवत्स [illegible] तत्लड्डुकश्च ।
सावित्रमिष्ट्वाथ कुशैर्गुलान्नैस्त[illegible] सावित्रे यजन विदध्यात् ॥
हारिद्रमन्न सघृत तथेन्द्रजयाय शस्त वलिकर्मणीह ।
रुद्राय मास विहित तु पक्व मास तथा रुद्रजये [illegible]पक्वम् ॥
तथापि पूज्याः सममार्यकाद्यास्ते लड्डुकैर्लोहितशुक्लभक्तैः ।
तथैव माषैः सघृतैर्यथावत् स्वस्वप्रदेशे विविवत् क्रमेण ॥५८॥

ब्रह्माणमाज्याक्षतपञ्चगव्यैः पुष्पैः सगन्धैश्चरुणा तिलैश्च ।
यथा विरिञ्च परिपूजयेद् गुरुस्तथैव वास्तु परिपूजितव्यः ॥
संपूज्य च प्राग् घृतपायसेन शर्वाह्वयस्कन्दमथो यजेत ॥
याम्येऽर्यम्णे समासाज्यैस्तन पित्तासृगामिषैः ॥ ६० ॥

जम्भकाय तु वारुण्या पिलिपिञ्छाय चोत्तरे ।
सैन्द्रलोहितपुष्पान्नैर्बलिमत्र प्रदापयेत् ॥ ६१ ॥

मामौदनघृतापूपैरैशान्या चरकीबलिः ।
मार्गे पीतेन मासेन विदार्यै बलिमर्पयेत् ॥ ६२ ॥

पूतनाया तु राक्षस्या दधिरक्तौदनैर्बलिः ।
क्षीरपिष्टास्थिरक्तान्नैर्वायव्या पापराक्षसीम् ॥ ६३ ॥

अथ देवासुरगन्धर्वय.पितरः सनागराक्षसकाः ।
पूर्वाद्यष्टदिशासु क्रमश सपिशाचका ग्रहाः पूज्याः ॥ ६४ ॥

एतेषा भूतकूरान्नैर्बलिर्मण्डलबाह्यतः ।
पूर्वादिदिक्ष्वष्टकेषु शर्वस्कन्दादिके बहि. ॥ ६५ ॥

प्रत्येकमुक्तद्रव्याणामलाभे कुसुमाक्षतै ।
सगन्धधूपदीपैश्च शुद्धान्नेन स्मृतो बलिः ॥ ६६ ॥

इत्येव वास्तुपुरुप ब्रह्माण च सदैवतम ।
मपूज्य च बलिं दत्त्वा तत्तन्नाम्ना प्रसादयेत् ॥ ६७ ॥

इति शिल्परत्ने वास्तुपूजाविधान नाम
सप्तमोऽध्याय ।

---

## अथाष्टमोऽध्याय ।

### अथ ग्रामादीनां द्वारविधिः ।

ग्रामादितत्तद्विस्तारेऽप्येकाशीतिपदे कृते ।
तत्तत्पदे महाद्वारमुपद्वारं च कारयेत् ॥ १ ॥

आदित्ये स्थापिते द्वारे पुत्रनाशोऽथ जायते ।
मित्रभङ्गस्तु सत्ये स्याद् भृङ्गे पथि निरुध्यते ॥ २ ॥

अन्तरिक्षे कृते द्वारे विनाशमधिगच्छति ।
पावके च कृते द्वारे म्रियते वेश्मन पति ॥ ३ ॥

तत्र पूष्णि कृते द्वारे नश्येद् वारणपोषणे ।
वितथे स्थापिते द्वारे पत्युर्मरणमादिशेत् ॥ ४ ॥

गृहक्षतपदे द्वारे कृते सम्पद्विवर्धनम् ।
यमे द्वारे कृते सर्वनाश च मरण भवेत् ॥ ५ ॥

गन्धर्वे निर्मिते द्वारे सर्वकर्मविवर्धनम् ।
भृङ्गराजे विपद् द्वारे मृगे सस्यविनाशनम् ॥ ६ ॥

नैर्ऋतौ मरण विद्यात् दौवारिकपदे भयम् ।
सुग्रीवे सर्वलाभः स्यात् पुष्पदन्तेऽखिलो गुण ॥ ७ ॥

वरुणे स्थापिते द्वारे नेत्राद् वा चोरतो भयम् ।
असुरे च कृते द्वारे निश्चयेन वदेद्[1] भयम् ॥ ८ ॥

शोषणे च कृते द्वारे शुष्यते निखिलो गुण. ।
रोगे यदि कृते द्वारे पाण्डुरोगो भविष्यति ॥ ९ ॥

पवने स्थापिते द्वारे नरो वातेन पीड्यते ।
नागे च निर्मिते द्वारे शीघ्रं नागभय भवेत् ॥ १० ॥

---

१ 'वदेत्' ख पाठ

मुख्ये यदि कृते द्वारे ब्रह्मण्यो भवति क्षणात् ।
फल्लाटे च कृते द्वारे वैशिष्ट्य लभते नरः ॥ ११ ॥
निशाकर कृते द्वारे यज्ञशीलो भविष्यति ।
अर्गले च कृते द्वारे जले(र्णेन)मरण भवते् । १२ ॥
अदितौ निर्मिते द्वार कुक्षिरोग विनिर्दिशेत् ।
उदितौ स्थापिते द्वारे वनिताकुपनाशनम् ॥ १३ ॥
रुद्रे यदि कृते द्वारे वह्निना दह्यते गृहम् ।
पर्जन्ये चेन्धन नश्येत् जयन्ते जयमाप्नुयात् ॥ १४ ॥
माहात्म्य चैव माहेन्द्रे द्विद्वारे (तु) कृते वदेत ।
अथ द्वे प्राङ्मुखे द्वारे कुर्याद् द्वे दक्षिणानने ॥ १५ ॥
द्वारे प्रत्यङ्मुखे द्वे च द्वे च कुर्यादुदङ्मुखे ।
माहेन्द्रे प्राङ्मुख द्वार जयन्ते च स्मृत वैरम् ॥ १६ ॥
गृहक्षते च गन्धर्वे द्वार याम्यमुख पृथक् ।
द्वार प्रत्यङ्मुख पुष्पदन्तसुग्रीवके तथा ॥ १७ ॥
फल्लाटे वाथ मुख्ये वा कुर्याद् द्वारमुदङ्मुखम् ।
गृहक्षते च माहेन्द्रे द्वार ब्राह्मणपूजितम् ॥ १८ ॥
गृहक्षतपदे पुष्पदन्ते द्वार नृपस्य तु ।
फल्लाटे पुष्पदन्ते च द्वार वैश्यस्य पूजितम् ॥ १९ ॥
माहेन्द्रेऽपि च फल्लाटे द्वार शूद्रजनस्य तु ।
जयन्ते वाथ गन्धर्वे दौवारिकपदे[2] पुन. ॥ २० ॥

---

१ 'प' क पाठ　२ 'द्वौ' ख पाठ

मुख्ये वा सर्ववर्णाना शुभद द्वारमिष्यते ।
महाद्वारक्रमः प्रोक्त उपद्वाराणि सन्ति चेत् ॥ २१ ॥
भृशे पूष्णि च भृङ्गाख्ये दौवारे शोषनागयोः ।
उदितावपि पर्जन्ये विन्यसेद् युक्तित पुन ॥ २२ ॥
यत्र स्थलेऽष्टमो राशिस्तत्र द्वार न विन्यसेत ।
यत्रोन्नत ततो द्वार यत्र निम्न ततो गृहम् ॥ २३ ॥
द्वारं यत्र च विहित तद्दिगंशाधिप च तद्धाम ।
एकतल वा द्वितल द्वितले द्विमुख च निर्मुख वा स्यात ॥
द्वारस्तम्भन्यासो जन्मनि तस्योदित च शिल्पिवरै. ।
आजन्मान्त निम्न मार्ग द्वारस्तास्तोऽथ सदृशमपि ॥ २५ ॥
अब्धिगुणीकृततारे योनि स्वीया भवेद यथा तस्य ।
एतन्मण्डपतार किष्कुमित वा भवेच्च मात्रमितम ॥ २६ ॥

इति शिल्परत्ने द्वारविन्यासलक्षण नाम
अष्टमोऽध्याय ।

अथ नवमोऽध्याय ।

अथ ग्रामादिषु देवालयनिर्माणप्रकार —

तीर्थान्ते तटिनीतटे जलधि तीरे सरित्सङ्गमे
शैलाग्रेऽद्रितटे वनोपवनयो उद्यानदेशे तथा ।
सिद्धाद्यायतनेषु वा गुरुवरा ग्रामे पुरे पत्तने
वान्यत्रापि मनोरमे सुरसमिज्यायै क्षिति कल्पयेत् ॥ १ ॥
प्राचि प्रतीचि च हरौ निजदिश्युमेशे
वायौ निशुम्भजिति तारकजित्युदीच्याम् ।

ग्रामादिकेषु निर्ऋतौ गणपार्ययोश्च
गृह्णातु भूमिमखिलेष्वपि मध्यतो वा ॥ २ ॥
पग्घि तु त्रिदण्डादि यावद् द्वात्रिंशतिदण्डकम् ।
नदेव चाष्टदिशि च कर्तव्य शिवमन्दिरम् ॥ ३ ॥
परिधाभ्यन्तरे चापि पैशाचिकपदे गुरु. ।
मानुषे तु पदे वाथ कर्तव्य शिवमन्दिरम् ॥ ४ ॥
पैशाचिकपदे कुर्यादालय तु पराङ्मुखम् ॥ ४३ ॥
मध्येऽज. स्वपदे धनेशनरणी प्रागीशमध्येषु मा
शर्वाणीरमयोर्यमेन्द्रदिशि गोशालेन्दुरक्षोम्बिषु ।
काली दण्डधगशेन्दुषु जनन्यो विधौ भारती
स्याद्वा क्षेत्रप ईश्वरेन्द्रशशिषु ज्येष्ठानिलाब्धीशयो· ॥५३॥
सूर्ये मर्या भृशे विष्णुस्तथाब्धीशे + + + + ॥ ६ ॥
+ + + + + + + + सुग्रीवे शास्तुरालयम् ।
भृङ्गे जनन्यो ज्येष्ठाया वायौ चण्ड्यास्तु मुख्यके ॥ ७ ॥
कुबेरे च महाकाल्या मातृणा च निशाकरे ।
अदितौ वास्तु चामुण्ड्या शस्तमैशे शिवालयम् ॥ ८ ॥
निर्ऋतौ वा जयन्त्या वा गोशाला च वनऽथवा ।
देवताना तु विन्यासमपरे जगुरन्यथा ॥ ९ ॥
तद्ग्रामपुरराष्ट्राणा स्यान्मध्ये ब्रह्मणो गृहम् ।
प्राच्या वा पश्चिमे विष्णोर्ग्रामादीना च सम्मुखम् ॥ १० ॥
पराङ्मुख स्यादैशान्या मानुषे शिवमन्दिरम् ।
स्वयभूर्दैवत चार्ष यत्र तत्रैव शोभनम् ॥ ११ ॥

प्राच्यामैशेऽथवा मध्ये गौर्या सूर्यस्य च श्रियः।
मातॄणा दक्षिणे धाम शास्तु कान्याश्च नैर्ऋते॥ १२ ॥
षण्मुखस्य च वारुण्या ज्येष्ठायास्तदनन्तरम् ।
वायौ सौम्ये च दुर्गाया लोकेशाना स्वगोचरे ॥ १३ ॥
इन्द्रेशसौम्यमध्ये वा क्षेत्रपालनिवेशनम् ।
गोशाला दक्षिणे प्राच्यामनुक्ताना तथैव च ॥ १४ ॥
मन्दिर कारयेत् तत्र युक्त्या (सर्व) महामति ।
उग्राः पराङ्मुखा शस्ता नृणा सौम्यास्तु समुखाः ॥१५॥

ईशादिप्रेतेशपर्यन्तदिकस्था
    प्रासादा ग्रामादिकेपु व्रजेत्था ।
गोयोन्युत्था शेषदिक्समस्थिता स्यु
    स्तत्स्थाग्याचार्वा चेप्यते तत्सयोनि ॥ १६ ॥

इति शिल्परत्ने देवालयस्थाननिगमो नाम
नवमोऽध्याय ।

अथ दशमोऽध्यायः ।

अथ विमानकरणे ग्यातविधिः ।

स्निग्ध चैव तथा[illegible] द्विविध भूमिलक्षणम् ।
स्त्रिक्कणा शर्कराढ्या [illegible]क्ष्यखननक्रिया ॥ १ ॥
या सा स्निग्धा मही ख्याता तनुवालुकसयुता ।
पुरुषाञ्जलिमात्रे तु दृष्टा तोयसमन्विता ॥ २ ॥
अक्लेशात् खनन यत्र सा स्निग्धाख्या मही स्मृता ।
हस्तमात्र खनेत् स्निग्धमुत्रमन्यत तथाजलम् ॥ ३ ॥

खात्वा क्षितिं तां पुरुषप्रमाणं जलान्तमश्मावधि वा सुलग्ने ।
पादोनमापूर्य विशुद्धवेद्यां गात्रो यजेद् दिक्ष्वथ वास्तुमैश्याम्॥
युगाश्रे तत्क्षमाने तु मानसूत्रं विधाय तु ।
तदन्याकृतिगेहानां तत्तत्तत्सम्भवक्षमाम् ॥ ५ ॥
भक्त्वा विधाय सूत्राणि वेद्यांश्च खातमाचरेत् ।
अथाधारशिलां न्यस्य गर्तेऽस्मिन् कल(श) न्यसेत् ॥ ६ ॥
पद्मानि कूर्मयुक्तानि योगनाल ततोपरि ।
पीठस्य तारार्धनता तदर्धविस्तारयुक्ता प्रकरोतु मन्त्री ।
वा पादपद्मस्य तता तदर्धतुङ्गामथाधारशिला सुलग्ने ॥ ७३ ॥
भाविप्रासादपीठादिमानेन परिकल्पयेत् ।
आधाराख्यशिला नपद्मकूर्मादिमानकम् ॥ ८३ ॥
स्तम्भाद्य प षड नन्तदष्टांशाधिकोच्चो घटः
पद्मोऽष्टांशमधुन्नतोच्छ्रयनवांशोनप्रयोऽग्रच्छदः ।
अष्टांशायतनांघ्रिपाशगतिव्यामायतावोच्छ्रय
कूर्मो नागयवाग्रनो द्विगुणमूला योगनालप्रथा ॥ ९३ ॥
आधा(रा ग य)शिळाम ये निधिकुम्भ शिलाकृतम् ।
ताम्रज वाथ विन्यस्य नानारत्नादिपूरितम् ॥ १०३ ॥
तदूर्ध्वे द्वपदम्भोज कर्णिकायां तथास्य तु ।
भाविदेवमुख कूर्मं विन्यसेद् विधिना निशि ॥ ११३ ॥
तदूर्ध्वे रजताम्भोजगतं रजतकच्छपम् ।
तदूर्ध्वदेशे स्वर्णाब्जे स्वर्णकूर्मं नि ापयेत ॥ १२३ ॥
तत्पादद्वपदोर्मध्यममायाम प्रनालकम् ।
कूर्मस्योपरि सम्स्थाप्य कारयेद् गर्तपूरणम् ॥ १३३ ॥

सशर्करैर्वालुकैश्च मृद्भिश्च दृषदादिभि ।
दृढ प्रपूरयेच्छुद्धैर्जलैराप्लुत्य मुद्गर ॥ १४ ॥
मुसलैर्बृहच्छिरस्कैस्तु निहत्य दृढता नयेत् ।
गजसञ्चारण तत्र बहुश कारयेत पुन ॥ १५ ॥
एव दृढतर कृत्वा समीकृत्य नलादिभि ।
दिग्ज्ञानप्रक्रियादक्ष, स तत्कर्म समारभेत ॥ १६ ॥

इति शिल्पस्य [illegible]विधिर्नाम
दशमोऽध्याय ।

## अथैकादशोऽध्याय ।

अथ दिक्परिच्छेद ।

अ(ब्जा'ब्धा)रादिसमीकृते क्षितितले सस्थाप्य शङ्कु सम
तन्मूलाहितसूत्रसभ्रमण[illegible] [illegible] वृत्त भुवि ।
प्रत्यग् प्रागपि वृत्तवर्तिनि [illegible]यत्रक प्राङ्मुख
सूत्र न्यस्य मुसा[illegible] ततश्चेतरे ॥ १ ॥
कृत्वा भूमितले समे [illegible] सार्धवृत्त च त-
न्मध्येऽर्काङ्गुलशङ्कु[illegible] छायाप्रयोगेऽङ्कयेत ।
पश्चाद् बिन्दुमनन्तरेऽ[illegible] कृत्वा तयो शङ्कुर-
श्यशो प्राग्दिनज प्रणीय [illegible]र्धाशयो साधयेत् ॥ २ ॥
तोयसिद्धवसुधावलयान्तन्यस्तलम्बककृतार्जवशङ्को ।
यत्र भा विशति मुञ्चति वृत्त तौ दिशा वरुणपूर्वयो स्त ॥
याति भानुरपमण्डलवृत्ते दक्षिणोत्तरदिशोरनुवेलम् ।
तेन सा दिगनृजु प्रतिभाति स्यादृजु पुनरपक्रममौर्व्या ॥ ४ ॥

छायानिर्गमनप्रवेशसमयार्ककान्तिजीवान्तर

क्षुण्णं स्वश्रवणेन लम्बकहृत स्यादङ्गुलाद्य फलम् ।

पश्चाद् बिन्दुमनेन स्व्ययनत· सचालयेद् व्यत्ययात्

स्पष्टा. प्राच्यपराथवायनवशात् प्राग्बिन्दुमुत्सार्ग्येत् ॥

गजदन्तादिभिर्वाथ खदिरादिभिरेव वा ।

अविकारवह्निरत्यर्थमातिनिम्मातपेऽपि च ॥ ६ ॥

यथेष्टपरिधि. शङ्कुस्तुल्यमूलाग्रको भवेत ।

शिलातले वा भमौ वा समाया स्थापयेच्च तम् ॥ ७ ॥

शङ्कुमार्जवसयुक्त कल्पितद्वादशाङ्गुलम् ।

तदग्राद भागपर्यन्तमानश्रुतिरिही यते ॥ ८ ॥

मायनार्कभुजाज्ञ' ।परमक्रान्तिनाभिता ।

लम्बकासाप्त गिता स्याच्छायाकर्णहता हृता ॥ ९ ॥

त्रिज्ययाग्राङ्गुल याम्ये विपुवच्छायुत भुजा ।

सोम्याथ साम्ये (का)लेऽपि न्यूनमग्राङ्गुल यदि ॥ १० ॥

शोधयेद् विपुवच्छाया सोम्यो बाहुस्तदापि च ।

विषुवच्छा त्यजेत तस्माद् स्वावुत्तगो[1]ऽधिकात ॥ ११ ॥

याम्य एव तदा बाहुस्तच्छायाकृतिभेदतः ।

मूल कोटि[2] श्रुतिश्छाया त्रिभिस्त्र्यश्रं भवेदिदम् ॥ १२ ॥

भ्रामयित्वाथ तत् त्र्यश्र यावच्छायानुगा श्रुतिः ।

कोट्या पूर्वापरे ज्ञेये बाहुना दक्षिणोत्तरे ॥ १३ ॥

१ 'गो' २ 'टिश्रु' ख पाठ

अथ चतुरश्रीकरणम् ।

प्रागग्रं सूत्रमुर्व्यामृजुतरमभिकल्प्यास्य मूलाग्रगाभ्यां
सूत्राभ्यां मत्स्ययुग्मं यमशशिहरितोः कल्पयित्वात्र सूत्रम् ।
कृत्वा दिक्ष्वङ्कयित्वा सममिह निहितैः सूत्रकैः कोणमत्स्यान्
कृत्वास्फाल्यैषु सूत्रं रचयतु चतुरश्रं पुरः क्षेत्रकॢप्तौ ॥ २२ ॥

इति शिल्परत्ने दिक्परिच्छेदो नाम
एकादशोऽध्यायः ।

अथ द्वादशोऽध्यायः ।

अथ गर्भन्यासः ।

ग्रामादीनां च सर्वेषां गर्भन्यासोऽर्हति क्रमात ।
स्थानीये च द्रोणमुखे खर्वटे प्रतिनागरे ॥ १ ॥
ग्रामे च निगमे खेटे महेन्द्रे च गृहक्षते ।
विष्णोः स्थाने शिवस्थाने स्कन्दस्थानेऽथवा पुनः ॥ २ ॥
स्थापयेद् ग्रामरक्षार्थे सर्वकामाभिवृद्धये ।
अनुक्तानां तु सर्वेषामजभागादिषु न्यसेत् ॥ ३ ॥
वापीकूपतटाकादौ तथा वा सेतुबन्धने ।
गर्भं तदुक्तभागे वा पूर्वायां दिशि वा तथा ॥ ४ ॥
पुरुषाञ्जलिमात्रे तु श्वभ्रे गर्भं निधापयेत ।
ब्रह्मादीनां च देवानां देवीनां द्वारदक्षिणे ॥ ५ ॥
स्तम्भमूलेऽथवा योगमूले गर्भं निधापयेत् ।
होमस्तम्भे प्रतिस्तम्भे पादुकोर्ध्वे प्रतेरधः ॥ ६ ॥
ततोन्नतं च निम्नं च गर्भं सर्वविनाशकृत् ।
पुरुषाञ्जलिमात्रे तत् खाते वाखिलधामसु ॥ ७ ॥

पादावशिष्टे खाते वा विन्यसेत् प्रथमेष्टकाम् ।
तुलाभाराभिषेकादिमण्डपे वा तथा पुनः ॥ ८ ॥

पाषण्डाश्रमिणां वासे तथैव च महानसे ।
जात्यन्तराणां सर्वेषां वासे नाट्यसभासु च ॥ ९ ॥

प्रासादे मण्डपे साले गोपुरे च तथैव च ।
सदने परिवाराणां विन्यसेत् प्रथमेष्टकाम् ॥ १० ॥

स्वस्थाने गर्भविन्यासं तत्तच्चिह्नेन कारयेत् ॥ १०½ ॥

नागैर्भित्तितति विभज्य चतुरो बाह्ये विधायांशका-
नन्तस्त्रीनखिलेषु गोभिरजिते षड् द्वा(?)च षाण्मातुरे ।
भूतैस्त्रीनपि चैककं वितनुयाद् गर्भं परांशे स्थितं
विप्रस्योपरि पादुकस्य भुवि राज्ञोऽधःक्रमादन्ययोः॥ ११½ ॥

यद्यत्स्थाने तु गर्भः स्यात् तत्रस्थाः प्रथमेष्टकाः ।
मर्मादीनि परित्यज्य वास्त्वङ्गे स्थापयेदिमाः ॥ १२½ ॥

वास्तुमर्मसु निक्षिप्ता यदि स्युः प्रथमेष्टकाः ।
स्थाननाशो भवेत् कर्तुर्दुःखं मरणमेव वा ॥ १३½ ॥

सुमुहूर्ते सुनक्षत्रे विन्यसेत् प्रथमेष्टकाम् ।
शैले देवादिनिलये शैल्यः स्युः प्रथमेष्टकाः ॥ १४½ ॥

इष्टकाभिस्तु कर्तव्या इष्टका इष्टकालये ।
संमिश्रे तु शिलाभिस्तु तरुभिस्तरुमन्दिरे ॥ १५½ ॥

मार्तिक्यो वाथ सर्वेषां विमानानां शुभावहाः ।
पुंसां पुमिष्टकाः शस्ताः स्त्री स्त्रीणामिति केचन ॥ १६½ ॥

पुमिष्टकाश्च सर्वेषां सर्वाभिप्रायसिद्धिदाः ।
करायतास्तदर्धांशविस्तृताष्टाङ्गुलोच्छ्रिताः ॥ १७३ ॥
सुपक्का लोहितरुचः खण्डस्फोटादिवर्जिताः ॥ १८ ॥
नवसंख्यास्तु वा पञ्च कार्याः स्युः प्रथमेष्टकाः ।
अङ्गुलैर्जगतीपङ्क्त्यनुष्टुब्भिश्च कृतायताः ॥ १९ ॥
क्रमात् तदर्धविस्तारा विस्तारार्धसमुच्छ्रयाः ।
उत्तमादिविमानानां निर्दिष्टाः प्रथमेष्टकाः ॥ २० ॥
वस्वङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ।
अष्टात्रिंशाङ्गुलं यावदायामं तु तथाविधम् ॥ २१ ॥
आयामार्धं विशालं तु विशालार्धं घनं तथा ।
नवाङ्गुलं समारभ्य द्वद्व्यङ्गुलविवर्धनात् ॥ २२ ।
नवत्रिंशदङ्गुलान्तं दीर्घं तारादि पूर्ववत् ।
एकादिषोडशान्तानां भूमीनां क्रमशो भवेत् ॥ २३ ॥
अष्टाशामिहिरैस्त्रिधायतितदर्धव्यासपादोच्छ्रिता
यद्वार्काहियुगैर्मिता ततिवितत्युत्सेधवासोऽङ्गुलैः(?)।
मार्तिक्यः पुटपाकलोहितरुचः शैल्योऽथवाष्टेष्टकाः
कर्तव्याश्चतुरस्रिकाश्चतुरुपेता वा गृहाचिन्त्यतः ॥ २४३ ॥
नवसंख्यामते पूर्वादीशान्तं मध्यतस्तथा ।
पञ्चपक्षे न्यसेत् पूर्वाद्युत्तरान्तं च मध्यतः ॥ २५३ ॥
प्रादक्षिण्यक्रमादेव पूर्वाग्रं चोत्तराग्रकम् ।
शैल्यो वा ऋजवः सर्वा निम्नोन्नतविवर्जिताः ॥ २६३ ॥
अथाष्टपक्षे विन्यासक्रमः स्यादन्यथैव हि ॥ २७ ॥

कृत्वा कोष्ठचतुष्टयं प्रणिहितस्तुर्यश्रमुर्वीतले
कोष्ठे वह्निदिगाश्रिते पवनके पूर्वाग्रसूत्रे लिखेत् ।
सौम्याग्रे पिशिताशनेश्वरदिशि व्याप्ते च सूत्रे लिखेत्
कोष्ठेष्वेषु निधापयेच्च युगला द्वन्द्वास्थितेष्विष्टकाः ॥ २८ ॥

अष्टौ चेत् प्रथमेष्टकाश्च विधिवत् संस्थापयेद् बुद्धिमान्
प्रादक्षिण्यविधानतः शतमखादीशान्तिमाशास्वपि ।
निम्नं चोन्नतमभ्युदीक्ष्य च समं संस्थापयेत् ताः पुन-
र्निम्ने दुःखमथोन्नते च महतीं भीतिं विधत्ते नृपात् ॥ २९ ॥

विन्यस्य चैवं पुनरिष्टकां च गन्धोदकैः संपरिपूर्य गर्तम् ।
कृत्वा प्रसूनानि परीक्षयेच्च निक्षिप्य चावर्तमथाक्षतानि ॥

तद् दक्षिणावर्तमतीव शस्तं वामं तु निन्द्यं खलु दुःखदत्वात् ।
शाल्यादिभिः क्षेत्रजमृत्तिकाभिस्तन्मध्यगर्तं परिपूर्य रक्षेत् ॥

अथ गर्भे —

कुर्यात् पात्रं ताम्रक्लृप्तं मस[illegible]नद्विस्तारं चायतं चात्र कक्ष्ये ।
अष्टाङ्गुलं चार्धसमुच्छ्रितं [illegible]नसूर्ध्वे विहितोच्छ्रयं च ॥
हस्तायतं पात्रमथोत्तमं स्या[illegible]शिकेनोच्छ्रयमत्र कल्प्यम् ।
तथा पिधानस्य समुच्छ्रयं [illegible] मन्त्री विहितं क्रमेण ॥

स्तम्भायामद्वादशांशोपपन्न-
व्यासं व्यासार्धोच्छ्रयं गर्भपात्रम् ।
तुर्यश्रं तच्छुद्धशुल्बप्रक्लृप्तं
स्वोत्सेधाङ्घ्र्यूनोच्छ्रयोर्ध्वच्छदाढ्यम् । ३४ ॥

ताम्रभाजनविस्तारं पञ्चधा परिकीर्तितम् ।
रत्निद्वादशपङ्क्त्यष्टचतुरङ्गुलमानतः ॥ ३५ ॥
उन्नतं तारतोर्ध्वं स्यात् तदर्धं वा त्रिपादकम् ।
पिधानस्योच्छ्रयं तद्वद् विस्तारसममायतम् ॥ ३६ ॥
अथ वामसमोत्सेधमुत्तमं त्विति केचन ।
पादहीनं मध्यमं स्यादधमं त्वर्धतुङ्गकम् ॥ ३७ ॥
विस्तारस्य चतुर्थांशोऽप्युच्छ्रयं कोष्ठभित्तिषु ।
त्रिभागैकं तु + + + पिधानोच्चमथापि वा ॥ ३८ ॥
त्रिचतुर्मात्रविस्ताराद् द्विद्यङ्गुलविवर्धनात् ।
पञ्चषड्विंशदङ्गुल्यन्तं स्यात् पात्रस्य विस्तृतिः ॥ ३९ ॥
समोच्चं वाष्टषट्पञ्चभागोनं वा समुच्छ्रयम् ।
गृहीतोच्चत्रिभागैकं कोष्ठमित्युच्छ्रयं भवेत् ॥ ४० ॥
तत्तद्धर्म्याङ्घ्रिविस्तारसमं वाष्टांशहीनकम् ।
त्रिपादं वा विशालं तद्देलायाः प्राग्विवोच्छ्रयः ॥ ४१ ॥
तद्भित्तेस्तु घनं कुर्याद् यवैर्द्वित्रिचतुष्टयैः ।
अथ विस्तारतो भित्तेर्घनं विंशतिभागतः ॥ ४२ ॥
अम्बुराशिमृदा वाथ कुर्यात् तत्कोष्ठभित्तिकम् ।
येन यत् कर्म निष्पाद्यं तेन तद् गृहगर्भकम् ॥ ४३ ॥
तुर्यश्रं वाथ वृत्तं वा मण्डपाकृति वा पुनः ।
देवतालसमं गर्भपात्रं स्याद् बलिपीठके ॥ ४४ ॥
समं त्रिपादमर्धं वा तारं तद्दलमुच्छ्रयम् ।
पीठस्य मध्ये संस्थाप्यं तत्तत्स्थानेऽपि वा पुनः ॥ ४५ ॥

कृत्वा पात्रं तु रत्नादीन् निक्षिप्य विधिवत्तथा ।
यानि यस्य स्वचिह्नानि तानि तत्र समर्पयेत् ॥ ४६ ॥

एवं कृत्वा गर्भपात्रं विन्यसेदिष्टकाचिते ।
रक्षिते विधिवत् पूर्वं गर्ते शुद्धविलग्नके ॥ ४७ ॥

चतुरश्रीकृताकारा वृक्षपाषाणनिर्मिता ।
पात्रद्विगुणविस्तारा पञ्चाङ्गुलघनान्विता ॥ ४८ ॥
प्रतिमाफलका या सा स्थाप्या तद्भाजनोपरि ।
तदूर्ध्वे स्थापयेत् स्तम्भं संश्लिष्टचतुरिष्टकम् ॥ ४९ ॥
उग्रादीनां तु सर्वेषां तत्तत्स्थाने विशेषतः ।
गर्भमादौ विनिक्षिप्य बिम्बं तदुपरि न्यसेत् ॥ ५० ॥
शिलेष्टकाचिते खाते संरक्षेद् वापिकादिषु ॥ ५०½ ॥

अमरनरविमानद्वारयोगाङ्घ्रिमूले
विधिवदविकलाङ्गं गर्भमादौ निधाय ।
तदुपरि विधिनास्मिन् योगमङ्घ्रिं च पूर्वं
सकलविभवयुक्तं स्थापयेद् गर्भमूर्ध्नि ॥ ५१½ ॥

स्वस्य स्वग्रामकेरप्रभृतिनिजजनस्यापि संपत्प्रसूत्यै (?)
गर्भाधानमितीदृशात्मनि सुखं संस्मार्य कर्ता स्वयम् ।
कारून् कर्मकरान् विभाव्य कनकैः सन्तोष्य रात्रौ गुरुं
प्रासादं सुदृढं च तक्षकवरैरभ्युज्ज्वलं कारयेत् ॥ ५२½ ॥

इति शिल्परत्ने गर्भस्थापनं नाम
द्वादशोऽध्यायः ।

## अथ त्रयोदशोऽध्यायः ।

### अवास्तुकार्मणज्ञानम् ।

मर्मादीनि निषिद्धानि वास्तुकर्मण्यनेकधा ।
सन्ति संक्षेपतस्तानि द्विधा वक्ष्यामि सांप्रतम् ॥ १ ॥

नाड्यः स्युर्दश पूर्वसौम्यमुखगा वास्तौ स्थिताः कल्पिते-
ष्वेकाशीतिपदेषु कर्णनिहिते सूत्रे लिखेत् तद्वते ।
पश्चात् षट्त्रिपदस्थिता श्रुतिः + + पार्श्वस्थिता रज्जवो
मर्मादीनि विभज्य वच्मि बहुधा तन्नाडिका रज्जुभिः ॥ २ ॥

धर्मा यशोवती भद्रा शुभदा कामदा शुभा ।
चित्रा सौम्या सुधा गौरी नाड्यः प्रागानना दश ॥ ३ ॥

अमृता वारुणी शान्ता ह्लादिनी ब्रह्मवादिनी ।
मनोरमा रतिः कान्ता ज्वालिनीशोत्तरानना ॥ ४ ॥

दक्षिणादिक्रमाज्ज्ञेया तद्रज्जुयुतिषु क्रमात् ।
अष्टाभिः सङ्गतिर्यत्र नाडीरज्जुविमिश्रितैः ॥ ५ ॥

सूत्रैस्तत्र महामर्म ब्रह्मस्थानस्य कोणतः ।
प्रत्येकं दिक्षु षट्कानि त्रिकाणां सन्ति पार्श्वतः ॥ ६ ॥

नाडीद्वयसमायोगान्युपमर्माणि तानि तु ।
चतुर्विंशच्चतुष्काणि नाडीमर्माणि सन्ति च ॥ ७ ॥

रज्जुमर्माणि रज्जुभ्यां चतुष्कं नवकं भवेत् ।
कोणस्तम्भगमर्मान्तं त्रिकं बाह्ये विनिर्दिशेत् ॥ ८ ॥

षट्कं च मर्मसंभेदं कृतिं षण्णां वदन्ति हि ।
पञ्चकं मर्मसन्धिश्च द्वे द्वे दिक्षु चतुर्ष्वपि ॥ ९ ॥

मध्यस्थितं मर्मरज्जुभ्यां + . दोषवर्जितम् ॥ ९३ ॥

स्थानान्येतानि वास्तोर्गृहकरणविधौ पीडयेन्नैव विद्वान्
पीडा स्यात् पीडितेषु क्षितिपतिविषयब्राह्मणानां पशूनाम् ।
तत्कर्तुः शिल्पिनां वा सतनयवनिताभ्रातृसंबन्धिनां च
स्वस्थाः स्युस्तेन विद्धे पृथगथ विहितान् वच्मि दोषान् विभज्य॥

मूर्ध्नि वक्त्रे च कर्णे च हृदये मरणं भवेत् ।
विद्धे चोरसि हृद्रोगं पादयोः कलहस्तथा ॥ ११३ ॥

ललाटे भ्रातृहानिः स्याद् वित्तहाङ्गुलिपृष्ठयोः ।
ऊर्वोर्मृत्युस्तु बन्धूनां पत्नीनाशस्तु वा भवेत् ॥ १२३ ॥

गुह्ये तु सुतहानिः स्यादष्टके गर्भविच्युतिः ।
षट्के च वृद्धिः शत्रूणां चतुष्के च गजक्षयः ॥ १३३ ॥

पञ्चके व्याधिरुद्दिष्टस्तस्करेभ्यस्त्रिके भयम् ।
वर्जयेत् कुड्यमध्ये च स्तम्भमध्यादिषु त्विदम् ॥ १४३ ॥

उक्तानुक्तं च यत्किञ्चित् प्रमादाद् यदि संभवेत् ।
एतानि दोषशान्त्यर्थं निधनेद्वास्तुकर्मणि ॥ १५३ ॥

सिंहमातङ्गमहिषकिटिकूर्मशिरांसि च ।
शुद्धहाटकक्लृप्तानि कर्तुः सौख्यविवृद्धये ॥ १६३ ॥

प्रकारान्तरं —

वक्ष्ये चतुष्षष्टिपदेषु मर्म कोणस्थसूत्रे विलिखेत् सिराख्ये ।
पूर्वाग्रसौम्याग्रगताश्च वंशाः सिराख्ययोः पार्श्वगतानुवंशाः ॥

माहेन्द्रधर्मेशपदप्रविष्टा गृहक्षताब्धीशपदस्थिताश्च ।
पुष्पादिदन्तेन्दुपदस्थिताश्च फल्लाटमित्राभिधकोष्ठसंस्थाः ॥

तिस्रो रेखाश्चतुर्दिक्षु बाह्यस्थाः सन्धयः स्मृताः ।
मर्माणि सूत्रसन्धीनि चोपमर्म पदस्थितम् ॥ १९½ ॥
मूर्ध्नि वक्त्रे च नाभौ च महामर्मस्तने मृतिः ।
अनुवंशद्वयस्यापि सन्धिर्लाङ्गलमुच्यते ॥ २०½ ॥
गवां नाशः शिरोवेधे वंशवेधे मृतिं वदेत् ।
प्रवासः सन्धिवेधे स्यादनुवंशे भयं भवेत् ॥ २१½ ॥
पदस्य गृहकृत्यंशं सूत्रं स्याद् वेदषष्टिके ।
एकाशीतिपदेऽर्कांशं + + वसंशकके पदे(?) ॥ २२½ ॥
प्रागुदक्सूत्रमानेन नीत्वाङ्घ्रिं भुजवंशयोः ।
अन्तरा स्थापयेद् गर्भं सस्वचिह्नं प्रयत्नतः ॥ २३½ ॥

इति शिल्परत्ने वास्तुमर्मविधानं नाम
त्रयोदशोऽध्यायः ।

---

अथ चतुर्दशोऽध्यायः ।

अथ प्रासादादिकरणे द्रव्यविधिः ।

शिलेष्टकासुधादारुमृत्स्नामृल्लोष्टलोहकाः ।
एते विमानकरणे दिव्यत्वेन निरूपिताः ॥ १ ॥

शिलालक्षणम् ।

चण्डालपुल्कसव्याधपुलिन्दाद्यैर्विदूषिताः ।
वल्मीकाहिश्मशानाढ्या निन्द्या भूरपि तच्छिला ॥ २ ॥
भूपरिग्रहणे पूर्वं निन्दिता याश्च भूमयः ।
तद्गताश्च शिलाः सम्यग्वर्जिता गृहकर्मणि ॥ ३ ॥

कोणशीर्षा शिला त्याज्या भर्तुर्दुःखकरी यतः।
अनिलानलभूयिष्ठां शिलां (लि)ङ्गादिषु त्यजेत् ॥ ४ ॥

वल्मीकचैत्यशवरोपितचत्वरस्था
क्षाराम्बुसिक्तशिखिसूर्यहता विदिक्स्था।
रेखान्वितान्यविनियुक्तविवर्णरूक्षा
निन्द्या शिलात्र बहुवर्णसमन्विता च ॥ ५ ॥

काकश्येनवृकोष्ट्रवानरनिभा मार्जारगृध्रोपमाः
सर्पोलूकसृगालकीटसदृशाः कोलप्लवभेकोपमाः।
रेखास्तिर्यगवस्थिताश्च सकलाश्चान्याश्च दोषावहाः
सन्त्यज्य प्रतिगृह्य शोभनशिलां लिङ्गादिकं कारयेत्॥

विच्छिन्नाभिर्वर्जनीया शिला स्याद्
रेखाभिः सा चान्विता सर्ववर्णैः।
वक्रा स्थूला चातिसूक्ष्मा कृशा च
रेखा यस्या वर्जनीया हि सा च ॥ ७॥

शस्त्रासहा पेलवकर्दमाभा मृद्वी च बाला तरुपल्लवाभा।
भुजङ्गनिर्मोकनिभातिरूक्षा वृद्धा शिला जर्जरसंस्थिता च ॥

नानावर्णा स्थूलरेखातिरूक्षा
धूम्राभा या स्थूलवर्णा शिला स्यात्।
चण्डाली सा सर्वतो वर्जनीया
शस्ता भूयः मर्तविष्ये (?) शिलाश्च ॥ ९ ॥

दुष्टोद्देशसमुद्भवा । परिशिष्टा दुर्गृहाद्याश्रिता
वाता+न्यकरागतातिविपुला बाला च वृद्धा सती।

दुर्लेखाक्षरगर्भमण्डलयुता रूक्षस्वरा जर्जरा
दुःस्पर्शापदिशं निवेशितशिरोदेशा विवर्ज्या शिला ॥ १०॥

सिद्धाद्याकरसम्भवा वसुमतीमग्ना स्ववर्णोचिता
स्निग्धा शस्त्रसहा गभीरनिनदा दिश्याहिताग्रा शिला ।
ग्राह्या बिम्बविधौ स्फुलिङ्गबहुला तस्याच्छिरोधोमुखा (?)
यत्काष्ठाभिमुखी समुत्थितवती स्थाप्या च तद्दिङ्मुखीम् ॥

पुण्योद्यानक्षेत्रतीर्थह्रदस्था
वृक्षच्छय्याशीतला श्लिष्टकाया ।
स्निग्धा घण्टानिःस्वनाप्याज्यगन्धा
विस्तीर्णा स्याल्लिङ्गकार्ये प्रसिद्धा ॥ १२ ॥

श्वेता पङ्कजसन्निभा द्विजशिला तस्याः शशी देवता
राजा रक्तशिला कुलस्थसदृशा शक्रस्तु तद्देवता ।
पीता वैश्यशिला तथैव हरिता तस्या भगो देवता
कृष्णा शूद्रशिला च मुत्+सदृशा तत्राश्विनौ देवता ॥

चतुर्णामपि वर्णानामेता मुख्याः स्वकाः शिलाः ।
अलाभे सर्ववर्णानामासामेकतमा भवेत् ॥ १४ ॥

गुर्वी धीररवा स्फुलिङ्गबहुला न्यग्रोधबोधिच्छद-
प्रख्या बिम्ब(विधौ) विशालबहुला ग्राह्या शिला पौरुषी।
रम्भापत्रनिभा न चातिबहुला स्निग्धस्वना शीतला
स्त्रैणी पीठविधौ द्विलक्ष्मभिदुरा क्लैबी पदाब्जार्पणे ॥१५॥

पूर्वोत्तराशिरोयुक्ता घण्टानादस्फुलिङ्गवत् ।
छेदे सा पुंशिला लिङ्गयोग्या वृत्ता तदायता ॥ १६ ॥

चतुरश्रा च दीर्घाश्रा स्त्रीशिला पीठिकोचिता।
त्र्यश्रा तदायता षण्डा ज्ञेया पादशिलोचिता ॥ १७ ॥
नन्द्यावर्तवसुन्धराधरहयश्रीवत्सकूर्मोपमाः
शङ्खस्वस्तिकहस्तिगोवृषनिभाः शक्रेन्दुसूर्योपमाः।
छत्रस्रग्ध्वजलिङ्गतोरणमृगप्रासादपद्मोपमा
वज्राभा गरुडोपमाश्च शुभदा रेखाः कपर्दोपमाः ॥ १८॥
विप्रादीनां वर्णभेदाश्च रेखा
श्वेता रक्ता पीतकृष्णे प्रशस्ताः।
रेखा यस्यां देवराजायुधाभा
ग्राह्या सा स्यात् सर्ववर्णैः शिला स्यात् ॥ १९ ॥
अग्नेश्च बीजं पवनस्य बीजं भूयः स्वराण्यत्र नपुंसकानि।
एताः प्रशस्ताः शुभदाः समस्ता रेखास्तु लिङ्गेक्षतुल्यताया(?) ;
एवं परीक्ष्य च शिलां समवेक्ष्य शस्तां
प्रक्षाल्य तोयैर्बहुशः प्रयत्नात्।
गर्भाणि लेप्यविधिनापि च मण्डलानि
तज्ज्ञो गुरुर्ज्ञातुमथार्हतीह ॥ २१ ॥
तुल्यांशः क्षीरपिष्टैस्तु विषकासीसगैरिकैः।
दृषदालिप्य निःशेषमेकरात्रोषितं ततः ॥ २२ ॥
प्रक्षाल्य गर्भान् दोषांश्च मण्डलैस्तत्र रक्षयेत्।
मञ्जिष्ठाभे मण्डले दुर्दुरः स्यात्
पीते गोधा कापिले मूषिकाश्च।
कृष्णे सर्पः पाण्डरे चेति केचित्
कापोताभे गौलिको वृश्चिको वा ॥ २३ ॥

रक्ते तु कृकलासः स्यात् खद्योतो मधुसन्निभे ।
मिश्रे पिपीलिका गर्भः शस्त्राभे धूसरे दृषत् ॥ २४ ॥
गौरे तु विमला धूम्रे पतङ्गः सिकताथवा ।
नीलपीते भवेत् कूर्मो गर्भदोषान् वदाम्यतः ॥ २५ ॥

कपोतवर्णे गृहगौलिका स्यादागुणश्च (?) गर्भः कपिले प्रशस्तः ।
रक्ते प्रदिष्टः कृकलासगर्भः पाषाणगर्भो गुळसन्निभे च ॥ २६ ॥

कुलीरगर्भो हरितालवर्णे स्याच्चम्पकाभे शबले कृमिश्च ।
गर्भस्य रूक्षे सिकतः प्रशस्तो वर्णे विचित्रे सति वृश्चिकश्च ॥

रक्ते विचित्रे शफरस्य गर्भः पीते विचित्रे पतगः प्रदिष्टः ।
गर्भः कुसुम्भप्रतिमे षडङ्घ्रिः भस्मोपमाने सुषिरं वदन्ति ॥

स्यान्मण्डले किंशुकपुष्पवर्णे वृत्रारिगोपश्च पिपीलिका वा ।
तत्रातसीपुष्पसमानवर्णे निपी(त)र्णे (?) सति माक्षिकाः स्युः ॥

छेदने दृश्यते यत्र मण्डलं तत्र निर्दिशेत् ।
मण्डलं यादृशं दृष्टं तादृशं गर्भमेव च ॥ ३० ॥

एवंविधैर्व्यापितलक्षणैश्च गर्भं विधायाविधिवत् परीक्ष्य ।
बाह्येऽप्यदृष्टे सति लक्षणेऽस्मिन् लेपं विदध्यात् प्रवदामि तत्तत् ॥

ब्रह्माणं चक्रपाणिं कुसुमशररिपुं वैष्णवं पेषयित्वा
क्षीरेणाज्येन सम्यक् समघृतमधुना लेपयेत् तं शिलां च
लिप्ता क्लिन्ना समस्ताद् भवति यदि शिला प्रोषिता चैकरात्रं
जानीयात् तत्र गर्भं फणिपतिरथवा वृश्चिको वाथ गोधा ॥

कासीतचोरौ गोक्षीरे पिष्टा चालिप्य या शिला।
त्रिरात्रमुषिता रक्ता स्याच्चेत् कूर्मोऽत्र निश्चयः ॥ ३३ ॥

मांसीकुष्ठगयारात्रिं त्रिफलावारिदाम्बुभिः।
पिष्ट्वा तस्यार्द्रितं लिम्पेत् त्रिरात्राद् विकृतिर्यदि ॥ ३४ ॥

गर्भे तु कालकूटाख्यं विषं तत्र विनिर्दिशेत्।
तस्य स्पर्शेन मृत्युः स्याद् यतोऽतस्तं न संस्पृशेत् ॥ ३५ ॥

मांसीरोगहयारिवारिदजलैः सार्धं पलानां त्रयं
पिष्ट्वा वामविलोचनास्तनभुवा क्षीरेण तां लेपयेत्।
लिप्त्वा सा च शिला यदि त्रिदिवसैर्वर्णान्तरत्वं व्रजेत्
तत्र स्याद् विषमाशुनाशजनकं हस्तेन तं न स्पृशेत् ॥ ३६ ॥

तोये भीतिं दर्दुरे संविधत्ते गोधा राज्ञो नाशनं गोक्षयं च।
कर्तुर्वंशं नाशयेन्नागगर्भो मारीं तस्मिन् संविधत्ते सदेशे ॥ ३७ ॥

कर्तुर्मृतिं गर्भविनाशनं च स्त्रीणां विधत्ते सलिलाख्यगर्भः।
खद्योतगर्भस्तु भयं च वह्नौ द्वैविध्यमुग्रं गृहगौलिकश्चेत् ॥

आखुर्भयं तस्करजं विधत्ते दुर्भिक्षमुग्रं कृकलासगर्भः।
नाशं च वृष्टेरुपलाख्यगर्भः सस्यप्रणाशं च कुलीरगर्भः ॥

कुष्ठं विधत्ते कृमिरेव कर्तुश्चौर्यं च कुर्यात् सिकता समन्तात्।
शूलं विदध्यादथ वृश्चिकाख्यो द्रव्यस्य नाशं शफरो विधत्ते ॥

स्थानस्य नाशं कुरुते पतङ्गो व्याधिं षडङ्घ्रिस्तु बहूंश्च रोगान्।
तद्वच्च कुर्यात् सुषिरो हि रोगं नाशं धनानामथ शक्रगोपः ॥

चिन्तां विधत्ते च पिपीलिकश्चेत् कर्तुः प्रवासं त्वथ माक्षिकश्च ।
कूर्मश्च रोगान् भयमप्युदग्रं वृष्टेर्विनाशं कुरुते विषश्च ॥ ४२॥
एवं परीक्ष्य बहुधा विहायांशुभलक्षणाम् ।
शुभां यथेष्टमानेन छित्वा पृष्ठं मुखं तथा ॥ ४३ ॥
मूलं चाग्रं च विज्ञाय अङ्कयित्वा नयेच्च ताम् ॥ ४४ ॥

अथेष्टकाविधिः ।

चिक्कणा पाण्डराख्या च सलोणा च विगर्हिता ।
चतुर्थी ताम्रफुल्ला तु कर्मयोग्यमृदिष्यते ॥ ४५ ॥
तुषाङ्गारास्थिपाषाणशर्कराकाष्ठलोष्टकैः ।
वर्जिता सूक्ष्मसिकता ताम्रफुल्लेष्टकोचिता ॥ ४६ ॥
तां प्रक्षिप्यावटे मृत्स्नां जानुदघ्नं जलं क्षिपेत् ।
आलोड्य पद्भिः संक्षोभ्य मर्दयेत् तां पुनः पुनः ॥ ४७॥
ततः क्षीरागगैरीषत्त्वक्क्वाथत्रिफलाम्बुभिः ।
मर्दयेन्मासमात्रं तु तत्कर्मकुशलैर्नरैः ॥ ४८ ॥
इष्टकाः कारयेत् सम्यग् द्वादशाङ्गुलकायताः ।
तदर्धविस्तृताः प्रायो व्यासरामांशकोन्नताः ॥ ४९ ॥
त्रिपादोनास्ततो वा स्युः पूर्वसौम्यदिगग्रकाः ।
अधः पृष्ठाश्चोर्ध्ववक्राः कुर्युस्ते शिल्पकोविदाः ॥ ५०॥
मूलाग्रादीन्यङ्कयित्वा घर्मे ताः परिशोषयेत् ।
अथ शुष्के सुलग्नादौ चुल्लीकृत्यानुमारुतम् ॥ ५१ ॥
तत्रेष्टकाः सुसन्दध्यात् सान्तरं क्रमशश्रिताः ।
काष्ठैः पलालभाराद्यैराचिताः स्युर्निरन्तरम् ॥ ५२ ॥

बहिराच्छादयेत् सम्यङ् मृत्स्नया मृदु लेपयेत् ।
तन्मुखेष्वग्निमाधाय दशाहं पक्षमेव वा ॥ ५३ ॥
संस्कृत्य ज्वलने शान्ते समुद्धृत्येष्टकास्ततः ।
प्रक्षिप्य सलिले वर्षमष्टौ मासान् षडेव वा ॥ ५४ ॥
उद्धरेदिष्टकास्ताः स्युर्विमानादिक्रियोचिताः ।
स्थूलमूलेष्टका स्त्री स्यादग्रस्थूला नपुंसकाः ॥ ५५ ॥
सर्वत्र समविस्तारास्तुल्याः स्युः पुरुषेष्टकाः ।
अथवा यमरेखाः स्युर्ऋजवश्चेत् पुमानथ ॥ ५६ ॥
वक्राश्चेद् युग्मरेखाः सा स्त्रीलिङ्गाख्या प्रकीर्तिता ।
युग्मरेखास्त्वयुग्मं वा कर्णाभाश्चेन्नपुंसकाः ॥ ५७ ॥
ईषदुन्नतगं मूलं नतं वाग्रमुदाहृतम् ।

## अथ सुधा ।

करालमुद्गीगुल्मासकल्कचिक्कणकाश्च याः ॥ ५८ ॥
चूर्णोपयुक्ताः पञ्चैते सुधाप्रकृतयो मताः ।
अभयाक्षबीजमात्राः शर्कराः सार्धचूर्णिताः ॥ ५९ ॥
ताः स्युः करालका मुद्गतुल्या याः क्षुद्रशर्कराः ।
सैव मुद्गीति कथ्यन्ते शिल्पशास्त्रविशारदैः ॥ ६० ॥
सार्धत्रिपादत्रिगुणकिञ्जल्कसिकतान्वितम् ।
चूर्णं तु शर्कराशुक्तयोर्यद् गुल्मासं तदुच्यते ॥ ६१ ॥
करालमुद्गयोः पूर्वोक्तमानेन सिकतान्वितम् ।
चणकस्य च चूर्णस्य यत् पिष्टं कल्कमिष्यते ॥ ६२ ॥

चिक्कणं केवलं क्वाथं बद्धोदकमिति द्विधा ।
निश्छिद्रमिष्टमानेन क्षेत्रे त्विष्टकयाचिते ॥ ६३ ॥
पूर्वोक्तानां तु पञ्चानां विधातव्यं पृथक् पृथक् ।
तत्र तत्र तदुक्तेन द्रवेण परिमर्दयेत् ॥ ६४ ॥
केवलेनाम्भसा पूर्वं पूर्वोक्तांस्त्रीन् प्रमर्दयेत् ।
क्षीरद्रुमामलाक्षाणां कदम्बाभययोरपि ॥ ६५ ॥
त्वग्जलैस्त्रिफलातोयं माषजूषं च तत्समम् ।
संयम्य शर्कराशुक्तयोश्चूर्णं तत्क्वाथवारिणि ॥ ६६ ॥
खुरसंघुट्टनं कृत्वा स्रावयित्वाथ वाससा ।
चिक्कणं कल्पयेत् तेन बद्धोदमथ चोच्यते ॥ ६७ ॥
दधिदुग्धं माषजूषैर्गुलाज्यकदलीफलैः ।
नालिकेराम्रफलयोर्जलैश्चैतत् प्रकल्पितम् ॥ ६८ ॥
बद्धोदकं भवेत् तच्च समभागं नियोजयेत् ।
लब्धचूर्णशतांशं तु क्षौद्रमंशद्वयं भवेत् ॥ ६९ ॥
आज्यं तु कदलीपक्वं नालिकेराम्बुमाषयुक् ।
क्षीराङ्गत्वक्कषायं च क्षीरं दधि ततो गुलम् ॥ ७० ॥
पिच्छिलं त्रिफलाम्भश्च त्र्यंशादिकमिदं क्रमात् ।
अंशवृद्ध्या समायोज्य पूतपक्वाम्बुशक्तितः ॥ ७१ ॥
एकीकृत्य करालं च प्रक्षिपेद् दृढवेष्टितम् ।
अतीत्यैकदिनं पश्चादथैव घनतां भवेत् ॥ ७२ ॥
नालिकेरस्य शाखाभिर्दण्डैः संताडयेन्मुहुः ।
अतीत्य दशरात्रं तु कुदीगुल्मासकल्ककैः ॥ ७३ ॥

युक्तं सङ्घट्टितं युक्तया सुधा भवति शोभना ।
पूर्वं ध्वंशं करालं मधुकुतकदलीनालिकेराम्बुमाष-
व्यूषं वाक्षाकषायस्तनजलधिगुलत्रैफलाम्भांसि वैवम् ।
वृद्धाग्न्यंशक्रमेण स्फुटशशिधवलं चूर्णयुक्तं शतांशं
पिष्टं सर्वं यथावद् भवति परसुधावज्रलेपस्तथैव ॥ ७४ ॥
चतुस्त्रिद्वयमासान्तमुष्टिका युक्तिमर्दिता ।
श्रेष्ठमध्योत्तमा ज्ञेया सुधा सौधादिबन्धिनी ॥ ७५ ॥

अथ दारु ।

वर्ज्यास्तु तरवः पूर्वं वक्ष्यन्ते ये सकोटराः ।
सवल्लिका लताश्लिष्टाः कीटजुष्टाः सकण्टकाः ॥ ७६ ॥
सत(त)पुष्पफलाढ्या वा नृदेवाश्रिताश्च ये ।
बहुपक्षिमृगैर्जुष्टाश्चैत्यमार्गश्मशानजाः ॥ ७७ ॥
वक्राः शुष्काश्च ये भग्नाः सर्पभूतादिसंश्रयाः ।
सनीराः क्षीरवृक्षाश्च वायुवह्निविदूषिताः ॥ ७८ ॥
दन्तिदन्ताहताश्चैव विद्युत्पातनिपीडिताः ।
देवालयसमुद्भूता नदीसङ्गमसम्भवाः ॥ ७९ ॥
तटाककूपमध्यस्था एते वर्ज्याः सुखार्थिभिः ।
पलाशाः कुटजा लोध्रा बिल्वपीलुशिरीषकाः ॥ ८० ॥
श्लेष्मातककदम्बाश्च कोविदाराः सकिंशुकाः ।
पथ्याक्षामलकाः पार्थः सुतिस्रवरणा (?) अपि ॥ ८१॥

१. 'शु' ख. पाठः.

अम्बष्ठाः सप्तपर्णाश्च कारस्करविकङ्कटाः ।
न्यग्रोधोदुम्बराश्वत्थप्लक्षशाल्मलितिन्दुकाः ॥ ८२ ॥

नन्द्यावर्तश्च बदराः करवीराः कपित्थकाः ।
सर्पमारारिमेदाश्च पुत्रंजीवाः सडुण्डुकाः ॥ ८३ ॥

तिन्त्रिणीपाटलाशोककर्पूरागरुरञ्जनाः ।
अर्काश्च वर्जनीयाः स्युर्देवमानुषधामसु ॥ ८४ ॥

असारशाखिनः सर्वान् वर्जयेद् गृहकर्मणि ।
ऋजवः सारवन्तश्च दृढाश्च चिरजीविनः ॥ ८५ ॥

वर्षवातातपसहा जलस्थलभवाश्च ये ।
तत्तद्देशोचिताः शस्ता ग्राह्याः स्युः शुभधामसु ॥ ८६ ॥

ये पूर्वं वर्जिता वृक्षास्ते सर्वे देवतालये ।
शुभाय स्युर्विशेषेण मानुषाणामनर्थदाः ॥ ८७ ॥

प्रायशः क्षीरतरवो न मानुषगृहोचिताः ।
देवधामसु ते योग्याः सर्वेषां लिङ्गपाः शुभाः ॥ ८८ ॥

शाकासनमधूकं च सालं सर्जं सचन्दनम् ।
पनसं देवदारुं च शंसन्ति गृहकर्मणि ॥ ८९ ॥

एकजात्या द्विजात्या वा त्रिजात्या वा महीरुहा ।
कारयेन्मन्दिरं राजा श्रियमिच्छन् महीयसीम् ॥ ९० ॥

अपत्रा निर्व्रणाः सर्वे ग्रहीतव्या महीरुहाः ।
पुण्याद्रिवनतीर्थस्था दर्शनीया मनोहराः ॥ ९१ ॥

सर्वसम्पत्समृद्ध्यर्थं भवेयुस्ते न संशयः ॥ ९२ ॥

खदिरः सालो मधुकः सबकस्तथैव शिंशपश्चैव ।
तथार्जुनाकणौ(?)किरीणी च पद्मचन्दनौ वृक्षौ ॥ ९३ ॥
विशिखो धन्वनः पिण्डी सिंहो राजादनः शमी ।
तलकं च द्रुमाश्चैते स्तम्भे वृक्षाः समीरिताः ॥ ९४ ॥
निम्बासनशिरीषाश्च शाखाकालं च कर्चलः ।
तिमिसो लिकुचश्चैते + + + + + + + + + ॥ ९५ ॥
होमाश्चैतेऽखिले योग्या भेद्याश्छेद्याश्च भूरुहाः ।
वृत्ताकारश्च मूलाग्राद् बहुशाखो दृढान्वितः ॥ ९६ ॥
पुंवृक्षः स्यात् तरोः स्त्रीत्वं मूलस्थूलकृशाग्रता ।
मूलाग्रयोः कृशाल्पत्वं मध्ये स्थौल्यं च षण्डता ॥ ९७ ॥
मुहूर्तगर्भस्तम्भादीन् पुंवृक्षेणैव कारयेत् ।
शेषकर्मसु सर्वेषु स्त्रीवृक्षश्चैव शस्यते ॥ ९८ ॥
एवमन्विष्य तत्कर्म योग्यवृक्षं सलक्षणम् ।
लब्ध्वा दद्याद् बलिं विद्वान् विधिवच्छेत्तुमारभेत् ॥ ९९ ॥
अपक्रामन्तु भूतानि देवताश्च सगुह्यकाः ।
युष्मभ्यं च बलिर्भूयात् तं मे दिशत पादपम् ॥ १०० ॥
शिवमस्तु महीपुत्रास्तुभ्यं देवाः सगुह्यकाः ।
कर्मैतत् साधयिष्यामि क्रियतां वासपर्ययः ॥ १०१ ॥
एवमुक्त्वा नमस्कृत्य पादपेभ्यो नमोऽस्त्विति ।
दुग्धं तैलघृतैः सम्यक् संमार्ज्य परशोर्मुखम् ॥ १०२ ॥
सोपक्रामतु तं छेत्तुं यथाकामं वनस्पतिम् ।
किष्कुमात्रं तरोर्मूलं त्यक्त्वा छिन्द्या(त् त)दूर्ध्वतः ॥ १०३ ॥

छेदे क्षीरस्रवे लभ्यै जलस्रावस्तु सौख्यकृत् ।
रुधिरस्रावो विनाशाय कर्तुश्छिन्द्याच्च तं तरुम् ॥ १०४ ॥

सिंहेभवृषभा शकलं तस्य निपते भूमौ पूर्वापरायतम्(?) ।
शुभमूर्ध्वमुखं छेत्तुं पूर्वाग्रमतिशोभनम् ॥ १०५ ॥

सवल्कलं विशेषेण सर्ववृद्धिप्रदं विदुः ।
अधोमुखं दक्षिणोत्तरायतं तं विवल्कलम् ॥ १०६ ॥

सर्वनाशकरं दक्षिणाग्रं चेत्तु विशेषतः ।
तदन्यथा निपतितं सर्वं मध्यममेव हि ॥ १०७ ॥

सिंहमातङ्गवृषध्वनात्(?) पतने तु शुभावहाः ।
हसिताक्रोशरुदितकूजितान्यशुभान्यतः ॥ १०८ ॥

तं वृक्षं वर्जयित्वान्यं गृहीत्वा शुभलक्षणम् ।
इन्द्रेशार्थदिक्पातमुखा (वृक्षाः) सुशोभनाः ॥ १०९ ॥

अन्यथापतितस्त्याज्यो वृक्षः सः सर्वगर्हितः ।
वृक्षान्तरादौ सङ्गोऽपि विघ्नक्लेशकरोऽशुभः ॥ ११० ॥

पाते विहाय तच्छङ्कुं यस्य मूलेन गच्छति ।
सोऽपि निन्द्यो विघ्नकारी छिन्ना भिन्नास्तथैव च ॥ १११ ॥

शुभच्छेदाग्रपतनदारुमूलाग्रयोः समम् ।
इष्टप्रमाणतश्छित्वा तुर्यश्रं वाथ तक्षयेत् ॥ ११२ ॥

स्तम्भमुद्दिश्य + + + शुक्लेनाच्छाद्य वाससा ।
शकटादौ समारोप्य यथोद्देशं समाहरेत् ॥ ११३ ॥

१. 'स्य' ख. पाठः.

देवद्विजनरेन्द्राणां विशां च शकटैर्गजैः ।
दार्वाहरणमिष्टं स्यादन्येषां नृभिराहरेत् ॥ ११४ ॥
प्रवेश्य शस्तद्वारेण शिल्पशालास्थले ततः ।
वालुकासञ्चये दारुं शाययेत् पूर्वमस्तकम् ॥ ११५ ॥

न परावर्तनं कुर्यादष्टपञ्चत्रिमासतः ।
पश्चादिष्टप्रमाणेन भित्त्वा क्रकचकोटिना ॥ ११६ ॥

अन्तर्मुखं बहिःपृष्ठं प्रकल्प्यात्राङ्कमुन्नयेत् ।
मूले चाग्रे तथा कृत्वा त्वान्तरमुन्नयेत्(?) ॥ ११७ ॥

मूले चाग्रे तथा कृत्वा तक्षणादि समाचरेत् ।

अथ मृत्स्ना ।

इष्टकालोष्टकरणप्रोक्ता (चो)न्मर्दिता मुहुः ॥ ११८ ॥

मृत्स्ना सा पूजिता तज्ज्ञैः सर्वकर्मसुखप्रदा ।

अथ मृल्लोष्टकरणम् ।

इष्टकोक्तमृदा तद्वन्मृल्लोष्टकरणं स्मृतम् ॥ ११९ ॥

लोष्टानि कल्पयेत् सम्यक् तेषां लक्षणमुच्यते ।
नीप्रलोष्टं तूर्ध्वलोष्टं तुर्यश्रं क्रूरलोष्टकम् ॥ १२० ॥

द्व्यश्रलोष्टं कीललोष्टं कृशस्थूलाग्रलोष्टके ।
गर्तकोणं कोणलोष्टं पुटलोष्टं तथैव च ॥ १२१ ॥

लोष्टान्येकादशैतेषामायामादिकमुच्यते ।
नीप्रपट्टयास्तु विस्तारचतुरङ्गुलसंयुतम् ॥ १२२ ॥
आयामं नीप्रलोष्टस्य कीर्तितं लोष्टवेदिभिः ।
विस्तारं द्व्यङ्गुलं कुर्याद् बहलं तारपादतः ॥ १२३ ॥

तदर्धमग्रबाहल्यं सर्वेषां पर्वतच्छिरः ।
स्वस्वा(ग्रब)हलैस्तुल्यं पर्योंच्चं बहलं तथा ॥ १२४ ॥
आयाममूर्ध्वलोष्टस्य द्वादशाङ्गुलमिष्यते ।
तत्रिभागैकविस्तारं षड्यवं बहलं विदुः ॥ १२५ ॥
क्षस्य मूलाग्रयोर्भेदं पर्व + चापि विद्यते ।
पुटाख्यगर्तकोणानां बहलं नीप्रलोष्टवत् ॥ १२६ ॥
आयामं वसुमात्रं स्याद् विस्तारमथ कथ्यते ।
युगाङ्गुलं पुटामूलं तदग्रं सार्धमात्रकम् ॥ १२७ ॥
मूलं तु गर्तकोटीनां सार्धमात्रमुदाहृतम् ।
चतुरङ्गुलमग्रं स्याद् व्यासमेवं प्रकीर्तितम् ॥ १२८ ॥
अष्टाङ्गुलं कोणमूलमग्रं सार्धाङ्गुलं विदुः ।
कूर(ज्य ? द्य)श्रकतुर्यश्रेष्वायामं वसुमात्रकम् ॥ १२९ ॥
विस्तारं द्व्यङ्गुलं प्रोक्तं बहलं त्रियवं मतम् ।
नीप्रादीनां तु पञ्चानां भेदाः कीलादिकं त्रयम् ॥१३०॥
स्वस्वताराधविस्तारं कीललोष्टमुदाहृतम् ।
तत्तत्ताराधताराग्रं कृशाग्रमिति कीर्तितम् ॥ १३१ ॥
तत्तत्ताराधमूलं यत् स्थूलाग्रं तदुदाहृतम् ।
अथ दारुमयं लोष्टमुक्तलक्षणसंयुतम् ॥ १३२ ॥
कृतमेकाङ्गुलघनं सर्वेषां साधनं तु तत् ।
आमूलाग्रं विधातव्यं सूत्रं कूरस्य मध्यमे ॥ १३३ ॥
मूलात् ताराधकं नीत्वा तिर्यक् सूत्रं समालिखेत् ।
तिर्यङ्मूलाग्रयोगेन मध्याग्रेण युतं लिखेत् ॥ १३४ ॥

कर्णयुग्मं तद्बहिष्ठं कूरे त्याज्यं तु पार्श्वयोः ।
द्व्यश्रव्यासेऽधिसम्भक्ते त्रीणि सूत्राणि पातयेत् ॥ १३५॥
मूलात् ताराङ्किकं नीत्वा तिर्यक्सूत्रं च पातयेत् ।
तिर्यङ्मूलाग्रयोगेन पार्श्वस्थाग्रयुतं लिखेत् ॥ १३६ ॥
कर्णं तदग्रादारभ्य तिर्यङ्मध्ययुतायुतम् ।
कर्णसूत्रं बहिर्भागं सर्वं द्व्यश्रे त्यजेदतः ॥ १३७ ॥
एवं कृत्वा साधनानि मृत्स्नां संपाद्य बुद्धिमान् ।
भस्मनोद्धूलितं कृत्वा फलकामपि साधनम् ॥ १३८ ॥
मृत्स्नां प्रसारयेत् तस्यां यथोक्तं बहलं पुनः ।
लोष्टायामततां तत्र यथालाभाय तां पुनः ॥ १३९ ॥
सन्ताड्य च समीकृत्य तस्यां विन्यस्य साधनम् ।
तिर्यक् तदग्रे कृत्वा च परितः शस्त्रधारया ॥ १४० ॥
छिन्द्यात् पार्श्वे च मूलं च सर्वत्रैवं विधिः स्मृतः ।
ईषच्छुष्कां तु चोद्धृत्य पश्चात् सन्ताडयेत् स्वयम् ॥ १४१ ॥
ऊर्ध्वलोष्टं कोणलोष्टमन्तर्वक्रं तु कारयेत् ।
गर्तकोणं बहिर्भागवक्रं वाथ विवक्रकम् ॥ १४२ ॥
कोणपारावतं कुर्यात् स्तूप्याच्छादनकानि च ।
कालपाकेन शुष्काणां तेषां दाहं च कारयेत् ॥ १४३ ॥
अविद्धर्क्षे सुलग्नादौ चुल्लीं कृत्वेष्टकोक्तवत् ।
अथवान्यप्रकारेण तेषां दाहं च कारयेत् ॥ १४४ ॥
अविद्धर्क्षे सुलग्नादौ चुल्लीं कृत्वेष्टकोक्तवत् ।
अथवान्यप्रकारेण लोष्टदाहो विधीयते ॥ १४५ ॥

शुष्कचिञ्चादिशाखाभिरास्तीर्य सुमुहूर्तके ।
इन्धनानि च विन्यस्य पलालानि च विन्यसेत् ॥१४६॥
तस्मिन् लोष्टानि विन्यस्य पलालैश्छादयेत् पुनः ।
पलालाभासकैः पश्चाद् व्रीह्याभासैस्तुषैस्तथा ॥ १४७ ॥
आच्छाद्याङ्गिरथासिञ्चेच्छाखाः प्रज्वालयेत् पुनः ।
उद्धृत्य ज्वलने शान्ते जले क्षिप्त्वोद्धरेत् क्रमात् ॥ १४८ ॥

अथ लोहाः ।

कीलशूलादिनिर्माणे लोहः कृष्णः प्रशस्यते ।
सुवर्णं रजतं ताम्रं पूजितं लोष्टकर्मणि ॥ १४९ ॥
कांस्यपित्तलकादीनि मध्यमानीरितानि हि ।
स्तूप्याच्छादनके सर्वमिष्टं कृष्णविवर्जितम् ॥ १५० ॥
वल्लीमुकुलपुष्पादिकरणे निखिलाः शुभाः ।
बिम्बपीठादिकरणे शस्तं वक्ष्यामि तद्विधौ ॥ १५१ ॥

इति शिल्परत्ने शिलादार्वादिसाधनलक्षणं नाम चतुर्दशोऽध्यायः ।

---

## अथ पञ्चदशोऽध्यायः ।

### अथायादिलक्षणम् ।

अन्यत्र कूपादिभ्योऽथ बहिर्योनिः प्रकीर्तितः ।
गृहाणां भित्तिमध्ये तु शालानां तु तथा भवेत् ॥ १ ॥
प्रासादानां तु बाह्ये तु मध्ये वा शयनासने ।
पादबाह्ये पादमध्ये सभामण्डपयोर्मितिः ॥ २ ॥

अन्तर्मध्ये च सालानां बाह्ये वा मानसूत्रकम् ।
भित्त्यन्तर(स्य) मानेन मानयेत् सर्वधामसु ॥ ३ ॥
तथा बाह्येन मानेन भित्तिमध्येन वा पुनः ।
भित्तिमध्यं द्विजातीनां न(रे)न्द्राणां तथैव च ॥ ४ ॥
विशामपि च शूद्राणामन्तर्भागमिति स्मृतम् ।
बहिर्भागं तु देवानां मानसूत्रं बुधैरिदम् ॥ ५ ॥
मानसूत्रात् तु बाह्ये तु कूटकोष्ठादिनीप्रकम् ।
एतद् विन्यससूत्राख्यं ह्योमाबाह्यगतं पुनः ॥ ६ ॥
अवसानाभिधं सूत्रमेवं सूत्रत्रयं स्मृतम् ।
सभामण्डपशालानां भित्तिमध्यावसानकम् ॥ ७ ॥
भित्तिमध्याङ्घ्रिबाह्ये तन्मध्ये चाभ्यन्तरेऽपि वा ।
भित्तिबाह्यगताङ्घ्रेस्तु बाह्य वाभ्यन्तरेऽपि वा ॥ ८ ॥
तदङ्घ्रिमध्यावधि वा मानसूत्रमुदाहृतम् ।
भित्तिव्यासे तु भान्वंशे बाह्ये धात्वंशकं व्रजेत् ॥ ९ ॥
अभ्यन्तरे युगांशं तु तच्छेषं विस्तृतं भवेत् ।
भित्तिमध्यगपादस्य पादस्थानेन संशयम् (?) ॥ १० ॥

नाहेऽष्टघ्ने हृतेऽर्कत्रिघनतिथियुगैः सप्तभिः शेष आयो
भान्यत्रावाप्तिरायुस्तिथिदिवसपती लोकनिघ्नेऽथ नागैः ।
योनिः स्याच्छैलयुग्मैर्व्यय उदधिहृते (गोर्कतो ?) भागराशी
तस्मिन्नृक्षघ्न(आयुरशताभिरथ?) नवघ्ने विप्रमुख्योऽब्धिभिः स्यात्

आयाधिक्यं व्ययतः संपाद्यं सर्वथान्यथापत्तिः ।
नक्षत्रादिशुभत्वं ज्योतिश्शास्त्रादिभिः सुविज्ञेयम् ॥ १२

जन्म सम्पद् विपत् क्षेमः प्रत्यरः साधको वधः ।
मैत्रं परममैत्रं च जन्मेत्याद्यं पुनः पुनः ॥ १३ ॥

कर्तुर्जन्मर्क्षमारभ्य गणयित्वा विचिन्तयेत् ।
सम्पत्साधकमैत्राणि क्षेमं परममैत्रकम् ॥ १४ ॥

जन्माख्यं च शुभानि स्युरशुभानीतराणि तु ।
जन्माष्टमं विनाशाय ऋक्षं तदपि वर्जयेत् ॥ १५ ॥

गण्डान्तप्रमुखान् दोषानपि सर्वान् विवर्जयेत् ।
बालत्वं कौमारं यौवनमथ वार्धकं च निधनं च ॥ १६ ॥

पञ्च वयांस्येष्वन्त्यं नेष्टं शिष्टानि वास्तुनीष्टानि ।
मध्यमे बाल्यवार्धक्ये मरणं त्वधमाधमम् ॥ १७ ॥

अनुत्तमे तु कौमारयौवने वेति केचन ।
नन्दा भद्रा जया रिक्ता पूर्णेति तिथयः क्रमात् ॥ १८ ॥

तत्र रिक्ता विवर्ज्या स्यात् पूर्णा गेहेषु पूजिता ।
करणेषु स्थिरा निन्द्या विष्टयस्तु तथैव च ॥ १९ ॥

पापवारोदयास्त्याज्याः शुभवारोदयाः शुभाः ।

वारजानि करणानि गर्दभव्याघ्रविष्टिगजसूकराः क्रमात् ।
(सू?स्म)र्यते मृगपतिः पशुस्तथा तत्र विष्टिरहितानि सन्तु वै ॥

एवमिन्द्रविधुवह्निराक्षसश्राद्धदेववृषवायुगा क्रमात् ।
योगिनी भवति सूर्यवारतो निन्दिता (हि) प्रतिमाप्रतिग्रहे ॥

ध्वजधूमसिंहकुक्कुरवृषखरगजवायसाः क्रमेण स्युः ।
प्रागादियोनयोऽष्टौ तेष्वयुजः संपदे युजो विपदे ॥ २२ ॥

ध्वजेऽर्थलाभः कलहश्च धूमे सिंहे जयः श्वान अनन्तरोगः ।
वृषे तु लाभः खर आन्तदुःखं गजे सुखं वायस एव निष्फलः ॥

पश्चिमाशाननः श्लाघ्यो ध्वजः सर्वमुखोऽथवा ।
उत्तराभिमुखः सिंहो वृषः प्राचीमुखः शुभः ॥ २४ ॥

दक्षिणाभिमुखो हस्ती समस्ते वास्तु(कर्मणि) ॥ २५ ॥

मूर्ध्नि ध्वजो घ्राणपुटे च धूमो
ह्यास्ये हरिः श्रोत्रदृशोः श्वसंज्ञः ।
स्कन्धे वृषः पाणियुगे खरः स्याद्
गजश्च हृद्यङ्घ्रियुगे च काकः ॥ २६ ॥

तस्करो भुक्तिशक्ती च धनं राजाभिधं पुनः ।
षण्डं चैव विपच्चैव ततस्तु चलसंज्ञकम् ॥ २७॥

समृद्धिरिति विख्यातान्यंशकानि नव क्रमात् ।
तस्कराख्यं विपत् षण्डं निन्दितं वास्तुपाठकैः ॥ २८ ॥

पापक्षेत्राणि निन्द्यानि लग्नान्यन्यानि सत्त्वतः ।
लग्नाष्टमं दुष्टयोगान् सकलान् परिवर्जयेत् ॥ २९ ॥

यत्र पूर्णशतायुः स्याद् वर्जयेत् तन्न संशयः ।
ध्वजे वृषे च वैश्यः स्याद् विप्रः सिंहे गजे तथा ॥ ३० ॥

धूमे च गर्दभे राजा वृषलः शुनि वायसे ।

अथान्यथा —

अष्टाहते रन्ध्रहृतेऽथ शेषस्त्वायोऽथवात्रापि तिथिस्तु तिथ्या ।
नागे नवमे व्यय एव दिग्भिर्भवेदिदं देशवशात् प्रवेश्यः ॥

अथ काश्यपक्षः ।

हर्म्यविस्तारहस्तं तु गुणद्धं वसुभिर्हरेत् ।
शेषो ध्वजादियोनिः स्याद् वृद्धं तं वसुभिर्भजेत् ॥ ३२ ॥
ऋक्षैर्ऋक्षं नवद्धं तं परिणाहं भजेदगैः ।
शेषः सूर्यादिवारः स्यात् तिथिस्त्रिंशद्विभाजिते ॥ ३३ ॥
शेषो हारफलं तत्र पञ्चधा विभजेदिदम् ।
बाल्यादीनि वयांस्यत्र व्ययो भानुविभाजिते ॥ ३४ ॥
व्यासायामकरारामवृद्धं तं विंशता हरेत् ।
तिथयस्तु तथा शेषास्तुङ्गकेऽष्टवृद्धिते ॥ ३५ ॥
नाडिभिस्तूनिते शेष आय इत्युच्यते बुधैः ।
तुङ्गं तु नवभिर्हत्वा प्राग्वद् वै नाडिभिर्हरेत् ॥ ३६ ॥
शेषं व्ययमिति ख्यातं सर्वप्रासादवास्तुषु ।
अथवा व्यासमानेन दीर्घमानं निहत्य तु ॥ ३७ ॥
भक्ते + भिः शेष आयः प्रोक्तो नामभिरष्टभिः ॥ ३८ ॥

अत्रायशब्देन योनिरुच्यते ।

एवं परीक्ष्य बहुधा शुभमानं तु संग्रहेत् ।

अथ ग्रहस्फुटानयनप्रकारः ।

गृहपरिणाहेऽर्कघ्ने भूताकाशाम्बुराशिभिर्विभजेत् ।
नरप्यकैर्हत्वा हत्वा राशिं रवेर्विधायैवम् ॥ ३९ ॥
शाङ्किरस्त्वथ षष्ट्या हत्वा भागाः कलादिकाः कल्प्याः ।
ताशोर्वेदकरैः (वि)निहत्येन्द्वष्टभिः स्फुटं कार्यम् ॥ ४० ॥

गुणयेदेकाम्बुधिभिः खाङ्गेन्दुकरैर्हरेत् कुजस्य तथा।
सौम्यादीनां गुणनं नैव स्याद्धारकाः क्रमादेते॥ ४१॥

खाकाशाम्बुधिभूताः शरशून्ययुगास्तथैव खाश्विभवाः।
युगलमहीधररन्ध्राः खखाङ्काः शिल्पशास्त्रनिर्दिष्टाः॥ ४२॥

एत एव कटपयादिभिः —

रम्योऽर्कस्य गुणः स्यान्मुनिभग्नो हारको ज्ञेयः।
वारश्चन्द्रस्य गुणो भवति विभाजको भवेत् पादः॥ ४३॥

करस्त्वं गुणकारकः स्यान्नीचपरो भूमिजे हारः।
सोमसुतादीनां को गुणकारो भवति सर्वेषाम्॥ ४४॥
सौम्ये नानावाणी हारो जीवस्य मानाभः।
आत्रेयोच्चस्य तथा भवति शनैश्चरस्य रसाळः॥ ४५॥
राहोरानर्तः स्यादानीतव्या ग्रहा एवम्।
विस्तारायतमानैरितीरितं शिल्पशास्त्रज्ञैः॥ ४६॥

प्रकारान्तरेण —

खण्डेन गुणयेद् भानोर्मानवेन विभाजयेत्॥ ४७॥
वृत्तेन गुणयेदिन्दोः कुजेन च विभाजयेत्।
गुणः कुजस्य वृन्ताको नीवाराङ्गो विभाजकः॥ ४८॥
किंगुणः सोमपुत्रस्य मन्त्रनिष्ठो विभाजकः।
जीवस्य गुणयेद् दानैः शङ्करोऽयं विभाजकः॥ ४९॥
भार्गवस्य गुणः शम्भुः मन्त्रनिष्ठो विभाजकः।
मन्दस्य गुणयेत् प्राज्ञैर्धीरसेन विभाजयेत्॥ ५०॥

गुणकारो धनं राहोर्मन्त्रनिष्ठो विभाजकः ।
इत्येतैर्गुणहारस्तु त्रिघ्ननाहाष्टमांशतः ॥ ५१ ॥

सूर्यादिराहुपर्यन्तग्रहाः कार्या गृहादिषु ।
ग्रहाणां गोचरादीनि तथा यो(गा)दिकानि च ॥ ५२ ॥

होराशास्त्रोक्तमार्गेण सम्यक् सञ्चिन्त्य बुद्धिमान् ।
दोषान् सर्वान् परित्यज्य गुणैर्युक्तान् परिग्रहेत् ॥ ५३ ॥

इति शिल्परत्ने आयादिलक्षणं नाम

पञ्चदशोऽध्यायः ।

---

अथ षोडशोऽध्यायः ।

अथ प्रासादलक्षणम् ।

देवादीनां नराणां च येषु रम्यतया चिरम् ।
मनांसि च प्रसीदन्ति प्रासादास्तेन कीर्तिताः ॥ १ ॥

नानामानविधानत्वाद् विमानं शास्त्रतः कृतम् ।
पादोनत्रिकरादिपञ्चदशहस्ताशाङ्गुलान्तोत्तरे-
ष्वष्टाष्टाङ्गुलवृद्धितोऽन्तरभवद्योनिप्रभेदेष्वथ ।
प्रत्यक्प्राग्वदनक्रमेण विहितेष्वल्पेषु वान्येषु वा
प्रासादेषु विशिष्टजातिषु निजेष्टं कारयेत् कारुभिः ॥ २ ॥

प्रासादांश्च कराङ्गुलेन शुचिहस्तादेवमष्टाङ्गुलै-
र्वृद्ध्या सौम्ययमाननाः कतम एव स्युर्मृगादे भजाः(?) ।
तेष्वेकं दशमात्रकोनतिथिहस्तान्तोश्च(?) वा कारयेत्
प्रोक्तं किष्कुमितं (वीतिह?) चरह्तेषूहयेद् बुद्धिमान् ॥

धाम्नो व्यासे शकरीद्वन्द्वभक्ते
मित्रेन्द्रेध्मांशैः समस्तांशतश्च।
विस्तृत्या संयुक्तया पादकादि-
स्तूप्यग्रान्तोऽप्युच्छ्रयं स्याच्चतुर्धा॥ ० ॥
अथवाल्पकनिष्ठानां व्यासे सप्तविभाजिते ॥ ५ ॥
षडंशाधिकमुच्चं स्यान्मध्यानां पञ्चकाधिकम्।
त्र्यंशाधिकं चोत्तमानां प्रासादानामिहोन्नतिः॥ ६ ॥

अथ शान्तिकादितुङ्गनियमः।

तत्रादित्यतलं श्रेष्ठं शतहस्तोच्छ्रितं भवेत्।
हस्तसप्ततिविस्तारं (सप्त?)त्रिभागाधिकमुच्छ्रयम्॥ ७ ॥
तच्छान्तिकं देवविमानमुत्तममध्यर्धतुङ्गं त्वथ पौष्टिकाख्यम्।
पादोनयुग्मं विजयस्य तुङ्गं + + + + + + + + + + + ॥८॥
विस्तारतो द्विगुणि(तुङ्ग?)तोन्नतमद्भुताख्यं
विस्तारतुल्यमुदयं यदि सार्वकामिकम्।
तारत्रिपादमुदयं पुनराभिचारं
तत्त स्मृतं त्वशुभकर्मणि चाभिचारे॥ ९ ॥

अथ महाप्रासादतुङ्गनियमः।

तत्रादित्यतलं श्रेष्ठं शतहस्तोच्छ्रितं भवेत्।
हस्तसप्ततिविस्तारं मुख्यजात्यापि च क्रमात्॥ १० ॥
त्रिषष्टिहस्ततारं च त्रिनवत्युन्नतं तु यत्।
उत्तमेन तु मानेन स्यादेकादशभूमिकम्॥ ११ ॥
तथा चतुरशीत्युच्चं सप्तपञ्चाशता ततम्।
दशभौमं स्मृतं धाम श्रेष्ठमानेन शोभनम्॥ १२ ॥

पञ्चसप्ततितुङ्गं यदेकपञ्चाशता ततम् ।
नवभौमं तु तन्मुख्यं यथायुक्ति नियोजितम् ॥ १३ ॥
उच्चं षडधिकं षष्ट्या चत्वारिंशच्च पञ्च च ।
कराणां विस्तृतं धाम भवेदष्टतलं शुभम् ॥ १४ ॥
सप्तपञ्चाशदुत्तुङ्गं त्रिंशता च (श)तेन च ।
कराणां विस्तृतं धाम सप्तभौमं प्रकीर्तितम् ॥ १५ ॥
त्रयस्त्रिंशत्करं व्यासं चत्वारिंशत्करैरपि ।
नन्दहस्तैश्च यत् तुङ्गं षट्तलं तत् प्रकीर्तितम् ॥ १६ ॥
कराणां सप्तविंशत्या चत्वारिंशत्करैरपि ।
सैकैर्यद् विस्तृतं तुङ्गं पञ्चभौमं तु तद् भवेत् ॥ १७ ॥
त्रिंशता चैकविंशत्या तुङ्गे व्यासे चतुस्तलम् ।
प्रकृत्या चातिशक्वर्या त्रिभौमं तुङ्गविस्तृतौ ॥ १८ ॥
एवं त्रितलमारभ्य यावद्द्वादशभूमिकम् ।
उत्तमानां प्रतितलं ह्रासयेद् द्विकरं क्रमात् ॥ १९ ॥
मध्यमानि विमानानि भवन्तीह दश क्रमात् ।
तद्वन्मध्यविमानानां ह्रासनं द्विकरं पृथक् ॥ २० ॥
कनिष्ठानि विमानानि भवन्त्याजगतीतलात् ।
अथवा युग्महस्तैस्तु विकारकरतः क्रमात् ॥ २१ ॥
सप्तत्यन्तं विमानानि जात्यादीनि भवन्ति हि ।
तान्यपि त्रितलादीनि भवन्त्यर्कतलान्तकम् ॥ २२ ॥
अत्यष्टिहस्तादारभ्य त्रिषष्टिककरात् तथा ।
छन्दानि पञ्चभौमादि भवन्त्यर्कतलान्तकम् ॥ २३ ॥

अत्यष्टिहस्तादारभ्य त्रिषष्टिककरात् ततः ।
छन्दानि पञ्च भौमादि भवन्त्यार्कतलादिह ॥ २४ ॥
द्विद्विहस्तविवृद्धानां कनिष्ठाद्यष्टकत्रयम् ।
त्रयोदशकरव्यासात् पञ्चपञ्चाशदन्तकम् ॥ २५ ॥
द्विहस्तवर्धनात् प्राग्वद् विकल्पान्येकविंशतिः ।
एकादशकरात् सप्तपञ्चाशत्क(क)रान्तकम् ॥ २६ ॥
द्विहस्तवर्धनात् प्राग्वदूनविंशतिसंख्यया ।
चतुर्भौमादार्कभौममाभासाख्यानि तानि वै ॥ २७ ॥
विस्तारस्तम्भतो बाह्ये जन्मस्तूप्यन्तमुन्नतम् ।
केचिदाशिखरान्तं तु प्रवदन्ति समुन्नतम् ॥ २८ ॥

अथवा —

प्रासादास्त्रितलादिभानुतलनिष्ठा जातयः स्थाणुसु-
र्यैश्चैरोजसमैः करैः परिमिताश्चासप्ततेर्वर्धिताः ।
षोढा वह्नितलादयो ह्यधममध्यश्रेष्ठक्लृप्त्या पृथग्
व्यासादर्धशराुणांशकाधिकसमुत्सेधाश्च ते प्रायशः ॥२९॥
विश्वेन्द्राद्येषु षट्षष्ट्यसमसमकरैरब्धिभौमादयः स्यु-
श्छन्दा हस्तैर्नवाशादिभिरिषुरसपञ्चाशदन्तैर्विकल्पाः ।
पञ्चक्ष्माद्याश्च सर्वे प्रतितलमृतुभिन्ना विवस्वत्तलान्ता
रुद्राद्येकोनतानावधिभिरुदधिभूम्याद्यथाभाससंज्ञाः ॥
आभासेऽत्र चतुस्तलादिशिवभूम्यन्तं पृथग् वेदभे-
दाढ्यं द्वादशमन्तिमं ह्यधममध्यादिक्रमात् षड्भिदम् ।
षष्टिर्जातिगृहे भिदाः करवशाच्छन्दे षडूनास्ततः
षट्कोनाश्च विकल्पधामनि तथाभासे दशोनास्ततः ॥

अथाल्पप्रसादः ।

युग्मायुग्मकरैः पङ्क्तिनवहस्तादितः क्रमात् ।
अष्टसप्तकरैः श्रेष्ठा कानि तु + + + + + + ॥ ३२ ॥
चतुस्त्रिद्वितलानि स्युः क्षुद्राख्यानि यथाक्रमम् ।
अथवा त्रिचतुर्हस्तव्यासात् क्षुद्रेषु धामसु ॥ ३३ ॥
एकभौमं द्विभौमं च यथायुक्ति नियोजयेत् ।
पाङ्क्तहस्ततत नन्दकरव्यासमिहोत्तमम् ॥ ३४ ॥
भवेदेकतलं हस्तैर्मध्यं वस्त्रृषिसं(स्य?)मितैः ।
कनिष्ठमृतुबाणैः स्यादित्थमेकतलत्रयम् ॥ ३५ ॥
व्याघाशाकरपश्चिमं शशितलं बाणादिमार्ताण्डदोः-
पर्यन्तं द्वितलं हयादिनृपहस्तान्तं त्रिभूम्यन्वितम् ।
कुर्याद् धाम निजोचितोच्छ्रययुतं प्रोक्तोच्छ्रयेष्वेष्वतो
युक्त्या पाददलत्रिपादकरसंयोगक्षयौ च कचित् ॥ ३६ ॥
हस्तच्छेदं तु वृद्धया वा हान्या वा पूर्णमाचरेत् ।
अथवा सर्वजात्यानां विमानानां समासतः ॥ ३७ ॥
स्वव्यासद्विगुणादुच्चमष्टां(शं) वाधिकं भवेत् ।
अथवाल्पकनिष्ठानां व्यासे सप्तविभाजिते ॥ ३८ ॥
षडंशादिकमुच्चं स्यान्मध्यानां पञ्चकाधिकम् ।
विमानं शतहस्तोच्चकांधि + न कलौ स्मृतम् ॥ ३९ ॥
महावातादिपीडाभिः पीड्यते यदतोऽधिकम् ।

अथ नागरादिविधिः ।

नागरं द्राविडं चैव वेसरं चेति तत् त्रिधा ॥ ४० ॥

प्रासादः सर्वदेवेषु सन्देश(?)मथुनोच्यते।
सात्त्विकं नागरं तत् स्याद् राजसं द्राविडं स्मृतम्॥
तामसं वेसरं चेति त्रयं ब्रह्मादिदैवतम्।
त्रियुगं तत् त्रिवर्णं च त्रिचक्रं च क्रमात् स्मृतम्॥ ४२॥
नागरस्य स्मृतो देशो हिमवद्विन्ध्यमध्यगः।
द्राविडस्योचितो देशो द्राविडः स्यान्न चान्यथा॥ ४३॥
आगस्त्यविन्ध्यमध्यस्थो देशो वेसरसम्मतः।
सर्वाणि सर्वदेशेषु भवन्तीत्यपि केचन॥ ४४॥

अन्यथा —

हिमाद्रिकन्ययोरन्तर्गतो देश उदाहृतः।
सोऽपि देशस्त्रिधा भिन्नस्तत्तद्देशभवैर्गुणैः॥ ४५॥
यथैव देहिनां देहं वातपित्तकफात्मकम्।
तथैवेदं जगत् सर्वं विज्ञेयं त्रिगुणात्मकम्॥ ४६॥
हिमवद्विन्ध्ययोर्मध्यं सात्त्विकं भूतलं स्मृतम्।
विन्ध्यशैलादिकृष्णान्तं राजसं परिकीर्तितम्॥ ४७॥
पुनः कृष्णादिकन्यान्तं तामसं भूतलं भवेत्।
नागरं सात्त्विके देशे राजसे द्राविडं भवेत्॥ ४८॥
वेसरं तामसे देशे क्रमेण परिकीर्तिताः।
विष्णुर्वेधाः शिवः साक्षात् क्रमात् तद्धामदेवताः॥ ४९॥
नागरं भूसुरो जात्या वेसरं वेश्य उच्यते।
द्राविडं तु नृपो ज्ञेय आकृतिः कथ्यतेऽधुना॥ ५०॥

मूलादाशिखरं युगाश्ररचितं गेहं स्मृतं नागरं
मूलादाशिखरक्रियं षडुरगाश्रोन्नेदितं द्राविडम् ।
मूलाद् वा गलतोऽथवा परिलसद्वृत्तात्मकं वेसरं
तेष्वेकं पृथगात्तलक्ष्म सुविदध्यादात्मनः सम्मतम् ॥ ५१ ॥

जन्मादिस्तूपिपर्यन्तं युगाश्रं नागरं भवेत् ।
वस्वश्रं शीर्षकं कर्ण द्राविडं भवनं विदुः ॥ ५२ ॥
वृत्तकर्णशिरोपेतं वेसरं हर्म्यमीरितम् ।
कूटकोष्ठादिहीनानां हर्म्याणां कथितं त्विदम् ॥ ५३ ॥
नानाधिष्ठानसंयुक्तं तलं प्रत्यङ्घ्रिभेदवत् ।
सर्वत्र वृत्तपादं वा वेसरे भवने कुरु ॥ ५४ ॥
कूटकोष्ठादिनिष्कान्तमृजुसूत्रे तु सम्मितम् ।
उन्नतोपानकोपेताः कूटकोष्ठा यथाक्रमम् ॥ ५५ ॥
एकाकारं तलं स्तम्भं पत्रतोरणसंयुतम् ।
क्षुद्रकोष्ठसमायुक्तं महानास्यवकाशके ॥ ५६ ॥
वेदिकाजालकोपेतं कूटं वेदाश्रशीर्षकम् ।
एकानेकतलं वापि सालिन्दं वा ब्यालिन्दकम् ॥ ५७ ॥
वेदाश्रं शीर्षकं कण्ठं शालाकारमथापि वा ।
नागरं भवनं ख्यातं तद्देशेषु प्रकल्पयेत् ॥ ५८ ॥
प्राग्वत् कूटादिनिष्कान्तं कारयेद् वाथवा पुनः ।
मानसूत्राद् बहिः कूटनीव्रं कूटात् तु कोष्ठकम् ॥ ५९ ॥
मध्ये कोष्ठं सभद्रं वा विभद्रं वा नियोजितम् ।
पञ्जरं मानसूत्रे वा कूटनिष्कान्तसादृशम् ॥ ६० ॥

उन्नता शालकोपाना सौष्ठिकौ च यथाक्रमम् ।
उन्नतं स्वान्तरं मञ्चमन्तन्(?) प्रस्तरहीनकम् ॥ ६१ ॥
चतुरष्टाश्रवृत्ताभं कूटं कुर्यात् तले तले ।
ना(सा)मसूरकस्तम्भतोरणैश्च समन्वितम् ॥ ६२ ॥
वृत्ताद्यस्फुटिकैर्हस्तितुण्डैः कुम्भलतादिभिः ।
हारान्तरेषु मध्योर्ध्वे क्षुद्रकोष्ठयुतं तु वा ॥ ६३ ॥
तत्रैव हस्तितुण्डं वा भद्रनास्यल्पनासि वा ।
निरन्तरं सान्तरं वा ह्येकानेक(त)लं तु वा ॥ ६४ ॥
शिरसो वर्तनं कर्णे वृत्तं वाष्टाश्रमेव वा ।
इत्येतैर्लक्षणैर्युक्तं विमानं द्राविडं भवेत् ॥ ६५ ॥
तदेव चरणाकारावेकाकारेण कल्पयेत् ।
हारान्तरे विशेषेण स्युर्वृत्तस्फुटिकादयः ॥ ६६ ॥
समानौ कूटकोष्ठौ द्वौ सान्तरप्रस्तरान्वितौ ।
हीनौ वान्तरमञ्चौ तौ नीप्रं वा समसूत्रकौ ॥ ६७ ॥
स्तम्भान्तरेषु कर्तव्यं भद्रं वा भद्रपञ्जरम् ।
कपोतपञ्जराढ्यं वा सान्तरप्रस्तरान्वितम् ॥ ६८ ॥
अन्या वान्तरमञ्चौ तौ नीप्रं च समसूत्रकौ ।
हारान्तरेषु कर्तव्यं सर्वेषां कर्णकूटकम् ॥ ६९ ॥
सर्वेषां कर्णकूटानां शीर्षकं तु युगाश्रकम् ।
वस्वश्र(क)शिरोपेतं वर्तुलं वा शिरोगलम् ॥ ७० ॥
वस्वश्रं वा शिरःकर्णे युगाश्रं वा प्रकल्पयेत् ।
एवं वा द्राविडं ख्यातं होमादाकुन्तलं ततः ॥ ७१ ॥

वस्वश्रं वा षडश्रं वा तदपि द्राविडं स्मृतम् ।
एवं त्रिविधनीत्या तु प्रोच्यते द्राविडालयम् ॥ ७२ ॥

वेसरे कूटकोष्ठानि नीप्रं स्यान्मानसूत्रगम् ।
वृत्ताकारशिरोपेतं कर्णकूटं प्रकल्पयेत् ॥ ७३ ॥

वृत्तं गजगृहाकारं बाह्यवृत्ताश्रमेव वा ।
वृत्तग्रीवशिरोपेतं यथेष्टशिखरेण वा ॥ ७४ ॥

सालिन्द्रं वा सभद्रं वाप्येकेनैकतलं तु वा ।
समाश्रमायताश्रं वा वृत्तं वृत्तायतं तु वा ॥ ७५ ॥

द्व्यश्रवृत्तं तु वा हर्म्यं कूटकोष्ठादिसंयुतम् ।
उन्नतोपानकोपेतौ कूटकोष्ठौ यथाक्रमम् ॥ ७६ ॥

समौ तु कूटकोष्ठौ तु बहलं तत्समं तु वा ।
वेसरं भवनं ख्यातमेवं वा तन्नयं भवेत् ॥ ७७ ॥

बिम्बं च पीठिकां चैव प्रासादं चैकजातिकम् ।
करोतु सर्वसम्पत्त्यै नृपराष्ट्रजनस्य तु ॥ ७८ ॥

विपरीतं विपत्त्यर्थं राजराष्ट्रभयङ्करम् ।
नागरे सकलं शान्तं वेसरे यानमूर्तिकम् ॥ ७९ ॥

भेवीरं च नृत्तं च द्राविडे भवने न्यसेत् ।
अन्यथा चेद् विपत्त्यै च कर्तुर्भर्तुस्तथैव च ॥ ८० ॥

अथ प्रासादनियमः ।

ब्रह्मविष्णुशिवानां चाप्युत्तमं चक्रवर्तिनाम् ।
शस्तं द्वादशभौमं स्यान्नान्येषां तद् विधीयते ॥ ८१ ॥

त्रयस्त्रिंशत्सुराणां च यक्षनागेन्द्रवेधसाम् ।
एकादशतलं शस्तं दिक्तलं शशिसूर्ययोः ॥ ८२ ॥

महाराजाधिराजानां विमानं नवभूमिकम् ।
अष्टभौमं तु गन्धर्वसिद्धविद्याधरोचितम् ॥ ८३ ॥

सप्तभौमं द्विजेन्द्राणां नृपाणां च समृद्धिदम् ।
षड्भौमं मण्डलेन्द्राणां युवराजेषु भूमिकम् ॥ ८४ ॥

सामन्तानां चतुर्भौमं पुरेशानां च शस्यते ।
श्रीमतां वैश्यशूद्राणां सेनेशानां त्रिभौमिकम् ॥ ८५ ॥

द्वितलं चैकभौमं च सर्वदेवनरोचितम् ।
हीनानां नाधिकोक्तं स्यादिति प्राह पराशरः ॥ ८६ ॥

अथ महाप्रासादभेदाः ।

भूतेशब्रह्मविष्णूनां मुख्यं मुख्यास्तु विंशतिः ।
नलिनं च प्रलीनं च स्वस्तिकं च चतुर्मुखम् ॥ ८७ ॥

ततः स्यात् सर्वतोभद्रं हस्तिपृष्ठं समुज्ज्वलम् ।
श्रीछन्दं वृत्तभद्रं च श्रीकान्तं श्रीप्रतिष्ठितम् ॥ ८८ ॥

शिवभद्रं शिवच्छन्दमष्टाङ्गं पर्वताकृति ।
विष्णुच्छन्दं च सौभद्रं छन्दे कैलासरुद्रके ॥ ८९ ॥

ततो ललितभद्राख्यं विमानं चेति विंशतिः ।
जातीतराणि द्वात्रिंशदथ सर्वदिवौकसाम् ॥ ९० ॥

मेरुर्मन्दरकैलासौ जयाङ्गविमलाकृति ।
कुम्भाख्यं विमलाङ्गं च वृषच्छन्दं सुदर्शनम् ॥ ९१ ॥

हसच्छन्दं पद्मकान्तं गरुडच्छन्दमेव च ।
भोगिच्छन्दं पद्मभद्रं ततः कैलासकान्तकम् ॥ ९२ ॥
भद्रशिखं रुद्रकान्तं योगभद्रं च मङ्गलम् ।
विन्ध्यच्छन्दं मेरुकूटं महेन्द्रं चित्रकूटकम् ॥ ९३ ॥
श्रीमण्डनं च सौमुख्यं नीलं निषधसंज्ञकम् ।
ततो ललितकान्ताख्यं विजयश्रीकरं तथा ॥ ९४ ॥
श्रीविशालं च कथितं तथैव जयमङ्गलम् ।
जातीतराणि द्वात्रिंशद्विमानानीरितानि तु ॥ ९५ ॥
अथ जातिविमानानि द्वादशैव द्विजन्मनाम् ।
नागभोगाह्वयच्छन्दे कुड्यावर्तं त्रिकूटकम् ॥ ९६ ॥
श्रीवर्धनं पद्मगृहं प्रेक्षागृहं मुखं तथा ।
अत्यन्तभानुचन्द्राणां कान्तानि ऋतुवर्धनम् ॥ ९७ ॥
वृत्तं च द्वादशैतानि विमानानि द्विजन्मनाम् ।
राज्ञां संकृतिसङ्ख्यानि कथितानि मुनीश्वरैः ॥ ९८ ॥
चतुष्कूटं मन्त्रपूतमावन्त्यं माहिषं तथा ।
तत्र कान्तं कर्णभद्रं विजयाङ्कं विशालकम् ॥ ९९ ॥
विशालभद्रं गणिकाविशालं कर्णशालकम् ।
पद्मासनं चेन्द्रकान्तं स्यात् सर्वललितं ततः ॥ १०० ॥
योगप्रत्ययकान्ताख्ये ततश्चोत्पलपत्रकम् ।
महाराजाह्वयच्छन्दं महागृहमतः परम् ॥ १०१ ॥
पृथिवीविजयं चाथ भवेन्नन्दिविशालकम् ।
सर्वाङ्गदर्शनं चापिच्छायागृहमतः परम् ॥ १०२ ॥

रतिवर्धनमित्येवं चतुर्विंशतिकं स्मृतम्।
तेषामेव विमानानां तथाष्टौ वैश्यशूद्रयोः॥ १०३॥

विशालालयसंज्ञं च चतुष्फाटिकमेव च।
तुरङ्गवदनं तद्वद् गणिकापिण्डिकं तथा॥ १०४॥
श्येनच्छन्दं चोत्पलाग्रं ततः कुक्कुटपुच्छकम्।
इत्यष्टौ जातिहर्म्याणि वासार्थं वैश्यशूद्रयोः॥ १०५॥
एतेषां तु विमानानां भेदाः संस्थानभेदतः।
शिखरस्य तु भेदेन सर्वेषां भेदमुद्दिशेत्॥ १०६॥
यथार्हं तु यथाशोभं सर्वमन्यत् समं स्मृतम्।
एभिरेवाप्यलङ्कारैः स्यात् कनिष्ठाल्पकेष्वपि॥ १०७॥
नामान्यपि च तान्याहुस्तत्तन्मण्डनभेदतः।

अथ पद्मप्रासादः।

पद्मगेहस्य वैशेष्यं शिवच्छन्दं चन्द्रकान्तकम्॥ १०८॥
ललितकान्ताभिधानं च कुड्यावर्तं चतुष्टयम्।
एवं शिवस्य विषये वैष्णवे प्रवदाम्यतः॥ १०९॥
अम्भोजालयवैशेष्यं श्रीकान्तं श्रीकरं ततः।
विष्णुच्छन्दाभिधानं च तथैवोत्पलपत्रकम्॥ ११०॥
अम्भोजचरणाख्यं च तथा कौमारमन्दिरे।
वृत्तभद्रं गोत्रकान्तं विघ्नेशे जयमङ्गलम्॥ १११॥
शास्तुर्धाम्नि द्विकूटाख्यमार्यायास्त्रितयं विदुः।
सौभद्रं च विशालं स्यात् प्रेक्षागृहमतः परम्॥ ११२॥

एते पञ्चदश प्रोक्ता वृत्ताकाराः सुरालयाः ।
अथो गृहलुपाकूटा अधःपद्मसमायुताः ॥ ११३ ॥
तेषां पृथक् पृथक् सन्ति भूषणादीन्यनेकधा ।

अथ प्रासादभेदः ।

प्रासादं पुरुषं मत्वा पूजयेन्मन्त्रवित्तमः ॥ ११४ ॥
कायश्चाप्यनुकायश्च प्रासादाङ्गं द्विधा स्मृतम् ।
अधिष्ठानं तथा स्तम्भो भित्तिः कुम्भश्च मण्डिका॥ ११५ ॥
पोतिका स्याद् भारतुला जयन्तय इति क्रमात् ।
अनुमार्गोश्च कायः स्यादनुकायोऽथ कथ्यते ॥ ११६ ॥
उत्तरं वाजनश्रेणी वलिकं कर्णपट्टिका ।
सन्धिद्वारकवाटानि योगः प्रच्छादनानि च ॥ ११७ ॥
कुम्भवल्ली तोरणानि मुष्टिबन्धाष्टमङ्गलम् ।
मृणालिका दण्डिका च नीप्रभाराश्च नासिकाः ॥ ११८ ॥
पट्टिका वलभिर्बन्धवेदिका जालकानि च ।
कर्णकूटं तथाकूटनीडं कोष्ठादयोऽपि च ॥ ११९ ॥
ऊर्ध्वप्रच्छादविन्याससुधालोष्टेष्टकादयः ।
अनुकायाभिधानानि सामान्येन भवन्ति हि ॥ १२० ॥

अथवा —

प्रपदं पादुकं विद्याच्छिखा स्तूपीति कथ्यते ।
लोहकीलकपत्रादि सर्वं दन्तनखादिकम् ॥ १२१ ॥
सुधा शुक्लं त्विष्टकौघमस्थि मज्जा च पीतरुक् ।
मेदः श्यामरुचिस्तद्वद् रक्तं रक्तरुचिस्तथा ॥ १२२ ॥

मांसं मेचकवर्णं स्याच्चर्म नीलं न संशयः ।
त्वक् कृष्णवर्णमित्याहुः प्रासादे सप्तधातवः ॥ १२३ ॥

इति शिल्परत्ने प्रासादलक्षणं नाम
षोडशोऽध्यायः

## अथ सप्तदशोऽध्यायः ।

### अथ पादाधिष्ठानविभागः ।

अधिष्ठानोच्छ्रयं पूर्वं हस्तमानेन वर्ण्यते ।
प्रासादस्तु निजैरङ्गैरधितिष्ठति यं सदा ॥ १ ॥
दृढं शिलादिघटितं तदधिष्ठानसंज्ञितम् ।
तैतिलानां चतुर्हस्तं त्रिहस्तार्धं द्विजन्मनाम् ॥ २ ॥
राज्ञां त्रिहस्तं सार्धद्विहस्तं चेत् + व राजकम् ।
द्विहस्तमेव वणिजां शूद्रस्यैककरं स्मृतम् ॥ ३ ॥
एवं जातिवशाद् भूमिवशादत्रैव कथ्यते ।
चतुष्करात् तु षण्मात्रहीनेनार्कतलात् क्रमात् ॥ ४ ॥
त्रितलस्योत्तमस्येष्टं पादेनोनद्विहस्तकम् ।
क्षुद्राणामुदयं नीत्वा विधातव्यं विचक्षणैः ॥ ५ ॥
मसूरकोन्नतं पञ्चहस्ते द्वात्रिंशदङ्गुलम् ।
त्रिंशदङ्गुलमुच्चं वा तस्यैव च पुनस्तथा ॥ ६ ॥
षडादीनां तु पञ्चानामेकत्रिंशतिमात्रकम् ।
एकादशेऽथ द्वात्रिंशद् द्व्यङ्गुलविवर्धनात् ॥ ७ ॥

अष्टत्रिंशतिमात्रोच्चं चतुर्दशविशालिनः ।
नवत्रिंशतिमात्रोच्चं चतुर्दशपरस्य च ॥ ८ ॥
त्रिचतुर्हस्तयोर्धाम्नोर्हस्तमेवेति निश्चितम् ।
इत्येवं क्षुद्रहर्म्याणामधिष्ठानोच्छ्रयक्रमः ॥ ९ ॥
आद्योत्सेधांशमानेनाप्यधिष्ठानोच्छ्रयं विदुः ।
कैश्चित् तेन प्रकारेण विधातव्यं विचक्षणैः ॥ १० ॥
तत्तत्पादोदयार्धेन तुल्यमानं करोति तम् ।
गेहे त्रिदोर्वर्गभवे द्विदोर्मितान्
स्तम्भांस्ततोऽभ्यङ्गुलवर्धितान् क्रमात् ।
चतुष्कराद्युत्तरवर्गजेष्टकान्
करोत्वधिष्ठानमतोऽर्धसम्मितम् ॥ ११ ॥
अङ्गाद्यैरुदयोत्तरान्तरगतोन्मानं विभज्य क्रमात्
संख्यानैः शिवपश्चिमैर्निगदिते स्तम्भोच्छ्रये स्वेच्छया ।
अंशं योजयतु क्वचित् त्यजतु वा मासूरके स्वोच्छ्रयं
भङ्क्त्वाङ्गादिनवान्तिमैर्विरहयेद् द्वारं यथोक्तोच्छ्रयात् ॥
अथाष्टहस्तात् पादोच्चद्वादशक्ष्मात्क्रमात् पुनः ।
तच्चद्वितस्तिहीनेन त्रिकरं च त्रिभूमिके ॥ १३ ॥
आत्ताधिष्ठानतुङ्गस्य द्विगुणं पादतुङ्गकम् ।
द्विगुणान्नाधिकोत्सेधः स्तम्भः प्रोक्तः स्वयम्भुवा ॥ १४ ॥

अथ सामान्यविधिः ।

उत्तरोपानयोर्मध्यं पादमानमिति स्मृतम् ।
त्रिकराद्यङ्गुलीषट्कं वर्धमानं ततस्ततः ॥ १५ ॥

यथाशोभं यथायोग्यं पादमानं करोतु वा ।
विस्तारेण समं पादमानमित्युच्यते बुधैः ॥ १६ ॥

विस्तारस्य चतुर्थांशयुतं वा वियुतं तु वा ।
षट्सप्ताष्टाङ्कभागेन युतं वा हीनमेव वा ॥ १७ ॥

भक्तेऽस्मिन् पादमाने त्रिचतुरिषुषडंशैरधिष्ठानमंशे-
नाष्टाभिः सप्तभिर्वा विकृतिविदलिते विश्वभक्ते चतुर्भिः ।
धृत्यंशे पञ्चभिर्वा तिथियुगलहृते वाष्टिभिः सप्तभक्ते
द्वाभ्यां वार्कद्वयांशे मुनिभिरपि दशांशैस्त्रयस्त्रिंशदंशे ॥

सप्ताष्टनवभिर्भक्ते तस्मिन्नाद्यङ्गमंशतः ।
पञ्चांशैर्वाथ कर्तव्यमतिधृत्यंशिते तथा ॥ २० ॥
द्वादशांशे तु पञ्चांशं चतुर्विंशांशिते तथा ।
एवं बहुविधं प्रोक्तं मसूरस्य समुन्नतम् ॥ २१ ॥
अथ तलान्तरपा + + + + + + + + + + ॥ २२ ॥

स्तम्भे प्राथमिकेऽनलादिशिवनिष्ठैरंशितेऽशैः क्रमा-
न्नेत्राग्नित्रिगुणेषुशैलशरनागाङ्कोन्मितैः सम्मितौ ।
ग्रीवोक्ता नवधा ततोऽपि तलकृतौ पूर्वपूर्वाङ्घ्रितः
प्रोन्नेया च तदुन्नतिः प्रतितलं स्यात् प्रस्तरप्रक्रिया ॥ २३ ॥

रुद्रांशे सुषिरा दशांशवसवो वेदत्रिसप्तेन्द्रिया
दिक्सप्तत्रितयद्वयं तु विधिवत् पञ्चाग्निभागोन्मितम् ।
पञ्चाशासुषिरे समुज्ज्वलतराः स्तम्भार्धतोऽपि क्रमा-
न्मूलस्तम्भसमुन्नतेस्तु नवधा ग्रीवा विमानाश्रया ॥ २४ ॥

अथोपपीठोक्तिः ।

अधिष्ठानस्य चाधस्तादुपपीठं प्रयोजितम् ।
रक्षार्थमुन्नतार्थं वा शोभार्थं च प्रकल्पयेत् ॥ २५ ॥

आद्यङ्घ्रितुङ्गपञ्चांशत्रिगुणं वोपपीठकम् ।
अधिष्ठानत्रिगुणं वा स्यादुपपीठसमुच्छ्रयः ॥ २६ ॥

मासूरोच्चे विसक्ते शिखिविशिखकरैः क्ष्मेक्षणेन्द्वंशतोऽर्धा-
शोर्ध्वे पादांशवृध्या द्विगुणितचरमं योजयेद् वोपपीठम् ।
दिग्भक्तेंऽशैः शशाङ्कादिभिरिषुचरमैरेकसार्धद्विलोकै-
र्दण्डैर्वा निर्गतं चारचयतु विलसत्स्वाङ्गभङ्ग्याभिरामम् ॥

जगतेर्नीप्रतुल्यं वा धामस्तत्पादुकस्य वा ।
तन्नीप्रमुपपीठस्य पादबाह्यं प्रकल्पयेत् ॥ २८ ॥

अधिष्ठानपादुकात्तस्य विधिः सर्वोपपीठके ।
अथवा दण्डमारभ्य नवदण्डावसानकम् ॥ २९ ॥

सभादीनां विशेषेण कथ्यतेऽस्य विनिर्गमः ।
अथाभ्यन्तरपादेन भवेत् तदुपपीठकम् ॥ ३० ॥

अष्टभागकभागं वा सप्तभागैकभागिकम् ।
षड्भागैकांशकं वाथ निर्गतिः पूर्वमुक्तवत् ॥ ३१ ॥

अथाभ्यन्तरपादः । अथ पद्मम् ।

इष्टाधिष्ठानोच्छ्रयं संविभज्य संख्याभिः श्रुत्यादिनन्दान्तिमाभिः
कुर्यादेकांशेन तूपानडन्ते पद्मं धामोत्सेधतोऽदोऽधिऽकं स्यात्॥

पद्मस्य तुङ्गे षड्भक्ते भागमूलेऽस्य पीठिका ।
अधश्छदं त्रिभागेन द्विभागेनोर्ध्वगच्छदम् ॥ ३३ ॥

अथ सप्तांशिते तस्मिन् पीठमंशेन पङ्कजम् ।
त्रिभिर्भागेन तत्कर्णं द्वाभ्यामूर्ध्वच्छदं विदुः ॥ ३४ ॥

पद्मोत्तुङ्गे षड्भिरंशैर्विभक्ते भागेन स्यात् पीठिका लोकभागैः ।
पद्मोत्सेधो द्व्यंशतः कर्णिकोच्चं युग्मैरोजैर्वाच्छदैर्भूषितं हि ॥

इति शिल्परत्ने पादाधिष्ठानाद्युन्नतिनियमं नाम
सप्तदशोऽध्यायः ।

## अथाष्टादशोऽध्यायः

### अथोपपीठावयवः ।

अर्कांशे तूपपीठोच्चे तूपानद् द्व्यंशमंशतः ।
पद्मं क्षेपणमर्धांशं ग्रीवा पञ्चांशतो भवेत् ॥ १ ॥
अर्धेन कम्पं तस्योर्ध्वगाब्जमंशेन शिष्टतः ।
सकम्पमूर्ध्वपदं चेदष्टाङ्गमुपपीठकम् ॥ २ ॥
षडङ्गं वा विधातव्यमूर्ध्वाधः पद्मकौ विना ।
वेदिभद्रमिदं प्रोक्तं सर्वहर्म्योचितं द्विधा ॥ ३ ॥
अच्छिद्रैरिच्छवभागै(?)र्भानुभागांशकांशकैः ।
रामांशांशकभागैस्तु द्वाभ्यामंशेन योजयेत् ॥ ४ ॥
जन्मतो वा(ज)नान्तं यत् तुङ्गे त्रिनवभाजिते ।
पादुकं पङ्कजं कम्पं कर्णमुत्तरमम्बुजम् ॥ ५ ॥
कपोतालिङ्गकर्णाश्च प्रतिं वाजनमित्यपि ।
प्रतिभद्राह्वयं ह्येतत सर्वालङ्कारसंयुतम् ॥ ६ ॥

प्रकृत्यंशे तदुत्सेधे भागाभ्यां जन्म चाम्बुजम् ।
गलमर्धेन भागेन पद्मद्व्यंशं तु वाजनम् ॥ ७ ॥

अर्धेनाब्जं तथा कम्पमष्टकर्णांशमुत्तरम् ।
अर्धेनाब्जं तु गोपानं त्रिभिः स्यात् कम्पमर्धतः ॥ ८ ॥

सुभद्रकमिदं नाम्ना कथितं ह्युपपीठकम् ।
सिंहेभमकरव्यालभूतभद्राद्यलङ्कृतम् ॥ ९ ॥

प्रतिवक्त्रं झषास्यं स्याद् बालेनारूढमस्तकम् ।
देवद्विजनरेन्द्राणां मकरास्यं प्रतेर्मुखम् ॥ १० ॥

स्वस्तिकं वाथ देवानामर्धेन्दुर्वैश्यशूद्रयोः ।
द्विभागं पादुकोत्सेधाद् द्विभागं पङ्कजादयम् ॥ ११ ॥

कम्पमेकेन कर्तव्यमेकेनान्तरिकं भवेत् ।
द्विभागं प्रतितुङ्गं तु तथैवैकेन वाजनम् ॥ १२ ॥

अष्टाङ्गलतुङ्गं तु पद्मकेन + कारयेत् ।
अब्जमेकेन कर्तव्यं कपोतोच्चं गुणांशकम् ॥ १३ ॥

एकेनालिङ्गपट्टं स्यादन्तरी चैकभागिनी ।
प्रतितुङ्गद्विभागं तु वाजनं चैकभागिकम् ॥ १४ ॥

सन्तविंशद्विभक्ते(?) तु नाम्ना तत् प्रतिसुन्दरम् ।
उपानं तु द्विभागं स्याद् रामांशं पद्ममुच्यते ॥ १५ ॥

एकांशं कन्धरं विद्यादंशाभ्यां पद्ममुच्यते ।
द्विभागं पट्टमानं स्यादध्यर्धं पद्ममानकम् ॥ १६ ॥

कम्पमर्धेन कर्तव्यं सप्तभागं गलं तथा ।
कम्पमर्धेन कर्तव्यमम्बुजं सार्धभागिकम् ॥ १७ ॥
महाभट्टिद्विभागेन पद्ममध्यर्धभागतः ।
कम्पमर्धेन कर्तव्यं पञ्चविंशतिभाजिते ॥ १८ ॥
कल्याणकारणं नाम्ना सर्वधामसु पूजितम् ।
अथवा मञ्चकाद्यङ्गैर्भूषयेद् वोपपीठकम् ॥ १९ ॥
अङ्गनिष्क्रान्तवेशान्यप्यधिष्ठान(क)वद् (भवेत्) ।
अधिष्ठानं चोपपीठं मृदा चेष्टकयापि वा ॥ २० ॥
शिलाभिर्वा विधातव्यं दारुणा वा यथाबलम् ॥ २०½ ॥

इति शिल्परत्ने उपपीठलक्षणं नाम
अष्टादशोऽध्यायः ।

---

## अथ एकोनविंशोऽध्यायः ।

### अथाधिष्ठानम् ।

अधिष्ठानं मयः प्राह चतुर्दशविधं पृथक् ।
पराशरोऽपि द्विविधं त्रिविधं च परे जगुः ॥ १ ॥
मञ्चकान्यधमान्याहुः पादबन्धाभिधानि वै ।
मध्यमान्युत्तमानि स्युः प्रतिबन्धान्यसंशयः ॥ २ ॥
उपानं जगतीकुम्भं कन्धरं प्रस्तरं तथा ।
पञ्चवर्गमिति ख्यातमाद्यङ्गानां विशेषतः ॥ ३ ॥
कुमुदेन विना कार्यं यत् तन्मञ्चकमुच्यते ।
पादबन्धतलानां तु वस्वश्रं कुमुदं भवेत् ॥ ४ ॥

सर्वेषां प्रतिबन्धानां कुमुदं वृत्तमुच्यते ।

अत्र पूर्वं मञ्चकानि —

मञ्चकस्योच्छ्रयं कुर्यान्नवभागं विचक्षणः ॥ ५ ॥

द्विभागं पादुकं तत्र सप्तांशं कुट्टिमं भवेत् ।
द्वादशांशकृतोत्सेधे द्विभागं पादुकं विदुः । ६ ॥

सप्तांशं कुट्टिमोत्सेधं रामांशं प्रतिरुच्यते ।
प्रतिमञ्चकनामैतन्नृणां साधारणं विदुः ॥ ७ ॥

पञ्चभागकृतोत्सेधेऽप्येकांशं पादुकोन्नतम् ।
द्विभागैर्जगतीं तस्य कर्णमंशेन कारयेत् ॥ ८ ॥

प्रतेरुच्छ्रयमेकेन नाम्ना तद् गलमञ्चकम् ।
सूर्यांशककृतोत्सेधे द्व्यंशं तत्पादुकं भवेत् ॥ ९ ॥

षडंशं कुट्टिमं विद्याद् गलं द्व्यंशं तु कारयेत् ।
द्व्यंशं तत्प्रस्तरं विद्याद् गलमञ्चकमीरितम् ॥ १० ॥

कुर्वीत स्फुटमिह जन्मकुट्टिमं (तत्)
तत्पट्टं गलमथ पट्टिकां प्रतिं च ।
नेत्राङ्कक्षितिनयनेन्दुनेत्रभागै-
र्मासूरैर्वलरिपुभाजिते क्रमोऽयम् ॥ ११ ॥

जन्म त्रिभागं वसुभिश्च जङ्घा तत्पाट्टिकांशेन गलं द्विभागम् ।
तदूर्ध्वपट्टं रजनीकरांशं प्रतिर्गुणांशैर्गलमञ्चकाख्यम् ॥ १२ ॥

नवभागकृतोत्सेधे शिवांशं पादुकोन्नतम् ।
जङ्घाकर्णौ + त्रिभागैर्गलमञ्चे प्रतिं दृशाम् ॥ १३ ॥

एकत्रिद्विद्विभागैः स्युर्गलमञ्चेऽष्टभाजिते ।
उपानजगतीकर्णप्रस्तराणि यथाक्रमम् ॥ १४ ॥

अष्टादशांशे त्रिभि(र? रेव) पादुकं
जङ्घाष्टाभिः पट्टमिलांशतो गलम् ।
द्वाभ्यां तदूर्ध्वगतमंशत एव पट्टं (?)
कर्णत्रिभागैर्गलमञ्चकाभिधे ॥ १५ ॥

अधिष्ठाने त्रिधा भक्ते पादुकं कुट्टिमं प्रतिम् ।
कुर्यादेकांशतः पद्माकारमेतैः करोतु वा ॥ १६ ॥

आद्यङ्गं दशधा कृत्वा कुर्यात् पादुकमंशतः ।
जङ्घामानं त्रिभिर्भागैः पट्टमानानिलाशकम् ॥ १७ ॥

द्विभागतो गलोत्सेधमेकाङ्गं पट्टिकोदयम् ।
द्वाभ्यां प्रस्तरमानं तु गलमञ्चविशेषकम् ॥ १८ ॥

अथ पादबन्धानि ।

अधिष्ठानोच्छ्रये द्वेधा भक्तेष्वंशेन कुट्टिमम् ।
अंशेन कुमुदोत्सेधमष्टधा विभजेत् परम् ॥ १९ ॥

पट्टिकांशेन कम्पांशकर्णांशौ तूर्ध्वकम्पकम् ।
अंशेनाथ त्रिभिर्भागैर्वाजनं परिकल्पयेत् ॥ २० ॥

पादबन्धमिदं ज्ञेयं मुख्यजात्याद्यदूषितम् ।
सप्तांशैर्जगती षड्भिः कुमुदं चैकमम्बुजम् ॥ २१ ॥

पट्टं च कम्पं चैकैकं कर्णौऽशावब्जमंशतः ।
द्वौ वाजनं चाब्जमेकमंशाभ्यामूर्ध्वपट्टिकाम् ॥ २२ ॥

पादबन्धमधिष्ठानमिदं साकृतिभेदितम् ।
अष्टसप्त (श)शिरामभागिकै-
श्चन्द्रलोकशशिभागकैः क्रमात् ।
वप्रकं कुमुदकम्प(क)न्धराः
कम्पवाजन(क)पट्टिकाः क्रमात् ॥ २३ ॥

पादबन्धमुदितं तदुच्छ्रये भास्करद्विगुणितांशिते तले ।
देवविप्रनृपवैश्यशूद्रकेष्वेवमुक्तमृषिभिः पुरातनैः ॥ २४ ॥

आत्ताधिष्ठानकोत्सेधे पञ्चविंशतिभाजिते ।
शिवांशपादुकं कुर्याज्जगतीं वसुभागतः ॥ २५ ॥

धात्वंशैः कुमुदोच्चं तु व्योमांशं कम्पमानकम् ।
अनलांशं गलोत्तुङ्गं शश्यंशं चोर्ध्वकम्पकम् ॥ २६ ॥
महाभट्टिं गुणांशैस्तु तदूर्ध्वेऽशेन कम्पकम् ।
पादबन्धमिदं ख्यातमुपानरहितं तु वा ॥ २७ ॥

अधिष्ठानस्य चोत्सेधेऽप्येकोनविंशदंशिते ।
उपानं चैकभागेन साब्जकम्पं षडंशकम् ॥ २८ ॥

षडंशं जगतेरुच्चमेकांशं गलमानकम् ।
कर्णमेकेन कर्तव्यमेकेनाब्जं तु कारयेत् ॥ २९ ॥

कुमुदोच्चं गुणांशेन पद्ममेकेन कारयेत् ।
कम्पमेकेन कर्तव्यं कर्णोच्चं तु द्विभागतः ॥ ३० ॥

एकांशं कम्पतुङ्गं तु तत्समं तु दलोदयः ।
महाभट्टिर्द्विभागेन दलमेकांशमानतः ॥ ३१ ॥

कम्पमेकेन कर्तव्यमष्टाश्रं कुमुदाकृति ।
अम्भोजकेसरं नाम्ना पादबन्धविशेषकम् ॥ ३२ ॥

त्रिसप्तांशे तलोत्सेधे पादुकं भूमिभागतः ।
षट्पञ्चांशौ क्रमात् कार्यौ वप्रकुम्भौ तथांशतः ॥ ३३ ॥

कम्पं गुणांशकं कर्णमूर्ध्वकम्पं शिवांशकम् ।
पद्ममंशेनाग्निभागैः कपोतं पादबन्धकम् ॥ ३४ ॥

श्रीकान्तमिति विख्यातं सर्वजात्यर्हकं भवेत् ।
अधिष्ठानस्य चोत्सेधे पञ्चविंशतिभाजिते ॥ ३५ ॥

शिवांशं पादुकोत्सेधं जगती वसुभागतः ।
धात्वंश कुमुदोत्सेध व्यामांश कम्पमानकम् । ३६ ॥

अनलांशं गलोत्तुङ्गं शर्य(शं) चोर्ध्वकम्पकम् ।
महापट्टिर्गुणांशैस्तु तदूर्ध्वे कम्पमंशतः । ३७ ॥

पादबन्धमिदं ख्यातमुपानरहितं तु वा ॥ ३८ ॥

वास्त्वाधारसमुच्छ्रये प्रकृतिभक्ते वा त्रिभिः पादुकं
छन्दोभिर्जगतीं रसैः कुमुदकं चैकेन तत्पट्टिकाम् ।
भागाभ्यां गलपादकान् विरचयेदर्धांशतः पट्टिकां
क्षुद्रां सार्धधरांशकेन महतीं स्वांशोल्लसद्वाजनाम् ॥ ३९ ॥

द्वादशांशे तलोत्सेधे वेदांशैर्जगतीं विदुः ।
कुमुदं तत्समं कम्पमंशं सार्धेन वाजनम् ॥ ४० ॥

प्रतिवाजनमर्धांशमंशतः प्रस्तरोच्छ्रयम् ।
पादबन्धमिदं सर्वदेवमानवयोग्यकम् ॥ ४१ ॥

इध्माहत्रेभिरुपानमतो धरित्रीं (?)
भागै रसैः कुमुदकं प्रकरोतु तुङ्गे ।
एकेन पट्टमथ कन्धरमीक्षणेन
तद्वत् प्रति पुनरिदं खलु पादबन्धम् ॥ ४२ ॥

तुङ्गे षड्विंशदंशे तु गुणांशं पादुकोन्नतम् ।
द्विभागं दलमानं तु कम्पोच्चं शशिभागतः ॥ ४३ ॥
षडंशं तु जगत्युच्चं चतुर्भागं घटोदयम् ।
कम्पमेकेन कर्तव्यं कर्णोच्चं तु द्विभागिकम् ॥ ४४ ॥
ऊर्ध्वकम्पमथैकांशं गलभागं द्विभागतः ।
वाजनं चैकभागेन सार्धांशं कमलोदयम् ॥ ४५ ॥
कम्पमर्धेन कर्तव्यं श्रेणीबन्धमिदं भवेत् ।

अष्टसप्तशशियुग्मभागकैश्चन्द्रयुग्मशशिभागकैः क्रमात् ।
वप्रकं कुमुदकम्पकन्धराः कम्पवाजनमथोर्ध्वकम्पकम् ॥ ४६ ॥

पादबन्धमुदितं तदुच्छ्रये रुद्रयुग्म(क)विभाजिते तले ॥ ४७ ॥
द्व्येकैकांशैः ःरांशैर्युगश(शधर)दृक्चन्द्रभूम्यश्विनीभि-
र्भागेनोपानकाब्जं तदुपरि (च) तथा कम्पवप्रे च कुम्भे ।
पद्मं पट्टं च कर्णं तदुपरि + गतं कम्पमब्जं च पट्टी-
पट्टं तद्वप्रबन्धं द्विसहितकृतिना भाजिते पादबन्धे ॥ ४८ ॥

त्रिसप्तांशे तलोत्सेधे कृतेंऽशेनैव पादुकम् ।
अम्बुजं सार्धभागेन कम्पमर्धांशमुच्यते ॥ ४९ ॥

सप्तांशं जगतेरुच्चं रसांशं कुमुदोदयः ।
आलिङ्गमेकभागेन गलमग्न्यंशकं विदुः ॥ ५० ॥

ऊर्ध्ववाजनमेकांशं महापट्टिर्गुणांशतः ।
तदूर्ध्वकम्पमेकांशं पादबन्धमिदं विदुः ॥ ५१ ॥
षड्विंशद्विभजेदुच्चमुपानं चैकभागतः ।
द्विभागेन दलं कुर्यात् कम्पमेकेन कारयेत् ॥ ५२ ॥
षडंशं जगतेरुच्चमेकांशं दलमानकम् ।
कर्णमेकेन कर्तव्यमेकेनाब्जं तु कारयेत् ॥ ५३ ॥
कुमुदोच्चं गुणांशेन पद्ममेकेन कारयेत् ।
कम्पमंशेन कर्तव्यं कर्णोच्चं तु द्विभागतः ॥ ५४ ॥
एकांशं कम्पतुङ्गं तु तत्समं तु दलोदयम् ।
महापट्टिर्द्विभागेन दलमेकांशमानतः ॥ ५५ ॥
कम्पमेकेन कर्तव्यमष्टाश्रं कुमुदान्वितम् ।
अम्भोजकेसराख्यातं पादबन्धविशेषकम् ॥ ५६ ॥

अथ प्रतिबन्धानि ।

चन्द्रदृक्शशिशिवांशकै रसैर्धातुभिश्च समभागिकैः क्रमात् ।
वाजनं प्रतिमुखत्रिकश्रुतौ कर्णवृत्तकुमुदे च वप्रकम् ॥ ५७ ॥
षड्त्रिभागसमभागिके तले नागवक्त्रसदृशं मुखद्वयम् ।
देवविप्रनृपमन्दिरेषु तद् योग्यकं ह्युरगबन्धकं भवेत् ॥ ५८ ॥
तुङ्गे षड्विंशदंशे खुरमथ जगतीं कैरवं कम्पकर्णे
कम्पं पद्मं कपोतं तदुपरि + तथा निम्नदन्तादिवक्त्रम् ।
कम्पं भागेन षड्भिः शरशशिगुणचन्द्रैकवेदांशकांशै-
र्द्वाभ्यामेकेन कुर्यादमरनरपतेर्मन्दिरे मञ्चबन्धम् ॥ ५९ ॥
आद्याधिष्ठानतुङ्गे तु चतुर्विंशतिभाजिते ।
स्यादष्टभागैर्जगती सप्तांशैः कुमुदं भवेत् ॥ ६० ॥

पद्मं च पट्टिका कम्पश्चैकैकांशैर्गलः करैः ।
भागेनैवोर्ध्वकम्पं स्यात् त्रिभिर्भागैश्च वाजनम् ॥ ६१ ॥
वप्रबन्धमिदं प्रोक्तं विप्रजात्यर्हकं भवेत् ।
अधिष्ठानस्य चोत्सेधे षड्विंशतिविभाजिते ॥ ६२ ॥
उपानकैकभगेन जगत्युच्चं रसांशकम् ।
कुमुदं पञ्चभागेन कम्पमेकेन कारयेत् ॥ ६३ ॥
गुणांशं गलमानं तु कम्पमेकेन कारयेत् ।
पद्ममेकेन कर्तव्यं कपोतोच्चं गुणांशतः ॥ ६४ ॥
आलिङ्गमेकभागेन तत्समं त्वन्तरी भवेत् ।
प्रतितुङ्गं द्विभागेन शिवांशं वाजनोदयम् ॥ ६५ ।
प्रतिबन्धस्य भेदं तत् पद्मबन्धमुदाहृतम् ।
नक्षत्रैः पादुकोच्चं रचयतु जगतीं पङ्क्तिमातङ्गसंख्यैः
सप्तत्या कैरवोच्चं त्रितयसहितया कर्णमष्टि उयाशैः ।
कम्पोत्सेधं समिद्भिः पुनरपि मनुभिः कन्धरं पट्टिकोच्चं
त्विध्माशैः कुट्टिमोच्चे शतयुगयुतपञ्चाशदंशैर्विभक्ते ॥ ६६ ॥
शमानतः —
आलिङ्गमेकभागेन तत्समं त्वन्तरी भवेत् ॥ ६७ ॥
प्रतेरुच्चत्रिभागेन वाजनं चैकभागतः ।
अब्जबन्धमिदं नाम्ना भेदं तत्प्रतिबन्धके ॥ ६८ ॥
उपानरहितं सर्वं यथोक्तं प्रकरोतु वा ।
चतुर्विंशतिभागेन तलोत्सेधे विभाजिते ॥ ६९ ॥

उपानं त्वेकभागेन द्विभागं तु दलोदयम् ।
तदूर्ध्वकम्पमेकांशं जगत्युच्चं शरांशकम् ॥ ७० ॥
वेदांशं कुमुदोत्सेधं पद्ममंशेन कल्पयेत् ।
कर्णमेकांशमित्युक्तमूर्ध्वपद्मं शिवांशकम् ॥ ७१ ॥
वाजनोच्चं द्विभागेन भूम्यंशं पद्मतुङ्गकम् ।
आलिङ्गमेकभागेन तत्समं कन्धरं भवेत् ॥ ७२ ॥
प्रतिमानं द्विभागं स्याद् वाजनं त्वेकभागतः ।
स्कन्दकान्तमिदं नाम्ना प्रतिबन्धस्य भेदकम् ॥ ७३ ॥

मासूरे मिहिरद्वयांशि(नि) ततोंऽशैः पादुकं पावकै-
रष्टाभिर्जगतीं स्वरैः कुमुदकं शेषे दशांशेंऽशकैः ।
त्रिद्व्यग्न्यश्विमितैर्गलं विरचयेत् कम्पं गलं पट्टिकां
प्रत्युचन्मकरास्यकादिरुचिरां सिंहादिभिश्चोज्ज्वलाम् ॥
मासूरेंऽशैर्दिनेशांशिनि सति जगतीकैरवे श्रुत्युपायै-
स्तच्छिष्टैः पट्टिकामन्तरिमपि रचयेद् वाजनं च प्रतिं च ।
प्रत्युत्पन्नक्रमाख्ये क्रम इति कथितः सर्वदेवालयेषु
संपूज्यो मानवानामपि गृहकरणेष्वेष आद्यङ्गमुख्यः ॥
अधिष्ठानस्य चोत्सेधे षड्विंशतिविभाजिते ।
उपानं त्वेकभागेन जगत्युच्चं रसांशकम् ॥ ७६ ॥
कुमुदं पञ्चभागेन कम्पमेकेन कारयेत् ।
गुणांशं गलमानं तु कम्पमेकेन कल्पयेत् ॥ ७७ ॥
पद्ममेकेन कर्तव्यं कपोतोच्चं गुणांशकम् ।
आलिङ्गमेकभागेनाप्यन्तरीं तु शिवांशतः ॥ ७८ ॥

प्रतितुङ्गं द्विभागेन शिवांशं वाजनोदयम् ।
प्रतिबन्धविशेषोऽयं मयबन्ध इति स्मृतः ॥ ७९ ॥

त्रिषडंशकृतोत्सेधे जङ्घे सार्धांशकं खुरम् ।
कम्पमर्धांशकं प्रोक्तं भूतांशैः पङ्कजोदयम् ॥ ८० ॥

तुङ्गे षड्विंशदंशे खुरमथ जगतीकैरवं कम्पकर्णे
कम्पं पद्मं कपोतं तदुपरि + पथा निम्नमन्तादिवक्रम् ।
कम्पं भागेन षड्भिः शरशशिगुणचन्द्रैकबन्धाशकाशे
द्वाभ्यामेकेन कुर्यादमरवरपतेर्मन्दिरे मञ्चबन्धम् ॥ ८१ ॥

अधिष्ठानस्य चोत्सेधे त्रयोविंशतिभाजिते ।
उपानमेकं द्वाभ्यां तु पद्ममेकेन (कल्पयेत्) ॥ ८२ ॥

कर्णं द्विभागमंशेन कम्पमेकेन कम्पकम् ।
द्व्यंशेन पट्टिकां विद्यात् कम्पमेकेन कल्पयेत् ॥ ८३ ॥

पद्ममेकेन कर्णं तु एकांशेनैव कल्पयेत् ।
एकांशेनाम्बुजं कुर्याद् गुणांशं कुमुदोदयम् ॥ ८४ ॥

पद्ममेकेन कर्तव्यमालिङ्गं त्वेकभागया ।
त्रिभट्टिमिन्दुभागेन द्विभागं प्रतिमानकम् ॥ ८५ ॥

वाजनं त्वेकभागन कल्पयेत् तु यथाक्रमम् ।
प्रतिबन्धविशेषः स्यात् त्रिकर्णं तत् प्रकीर्तयेत् ॥ ८६ ॥

द्वाविंशद्भाजितोत्सेधे पादाभ्यां पादुकं शरैः ।
जगतीं कुमुदं वेदैः पट्टमंशेन कारयेत् ॥ ८७ ॥

एकेन कर्णमंशाभ्यां सवलभ्युत्तरं त्रिभिः ।
कपोतं चतुरंशेन श्रीबन्धे प्रस्तरोच्छ्रयम् ॥ ८८ ॥
अष्टादशकृतोत्सेधे पूर्वोक्तक्रममाचरेत् ।
नाम्ना कपोतबन्धं तत् प्रस्तरेण विना कृतम् ॥ ८९ ॥
तुङ्गेऽप्येकोनविंशांशे द्वाभ्यां पादुकमाशुगैः ।
जगतीं च चतुर्भागैः कुमुदं पट्टमंशतः ॥ ९० ॥
अंशाभ्यां कर्णमर्धांशेनोत्तरं वलभिं भुवा ।
सार्धास्त्रिभिः कपोतोच्चं कुर्यात् कलशबन्धके ॥ ९१ ॥
त्रयोविंशत्कृतोत्सेधे सार्धद्व्यंशेन पादुकम् ।
वेदैर्वप्रं कैरवं तु त्रिभिरेकेन तद्दलम् ॥ ९२ ॥
भूम्यंशेनोत्तरं सार्धभागेन वलभिं तथा ।
कपोतं गुणभागेन प्रस्तरं चतुरंशकैः ॥ ९३ ॥
नागबन्धमिदं नाम्ना कारयेत् सर्वधामसु ।
पादबन्धेऽपि दृश्यन्ते (?) श्रीबन्धादिचतुष्टयम् ॥ ९४ ॥
अथ क्षुद्रसभादीनामायङ्गोच्चे त्रिभाजिते ।
पीठमंशेन पद्मं च कर्णिकामंशतोंऽशतः ॥ ९५ ॥
अथवा भित्तिवत् कुर्यादुपानाद्यङ्गवर्जितम् ।
सप्ताष्टनवभिर्भक्ते मासूरोच्चेंऽशतः खुरम् ॥ ९६ ॥
क्रमाद् वेदशशाङ्कादिभागैः कर्णसमुन्नतिः ।
वलभ्युत्तरमंशेन प्रस्तरोच्चं तु तत्समम् ॥ ९७ ॥
कपोतं वा प्रतिस्थाने कुर्यादेतेऽपि मञ्चकाः ।

अथ कुमुदकरणम् ।

कुमुदोच्चे षडंशे तु पादबन्धतले पुनः ॥ ९८ ॥

अधःपट्टं तदेकांशं मध्यपट्टं त्रिभागतः ।
ऊर्ध्वपट्टं तथा द्वाभ्यामेवं वाष्टाश्रमाचरेत् ॥ ९९ ॥
यथा तुल्यत्वमश्राणां तथा वा कारयेत् पुनः ।
संपूर्णगर्भिणीक्रोडतुल्यं स्यात् प्रतिबन्धके ॥ १०० ॥
सिंहव्यालगजेन्द्रादिमृगैर्नानारसान्वितैः ।
भूषयेत् प्रस्तरं भूतैर्वलाभिं च विभूषयेत् ॥ १०१ ॥
यत्र प्रासादकरणं तले तत्र समीकृते ।
होमां विन्यस्य परितस्तत्तद्द्रव्यैर्यथोदितैः ॥ १०२ ॥
भित्तिपादस्य विष्कम्भं द्विगुणं त्रिगुणं तु वा ।
होमानीप्रमिति ख्यातं तद्वा(ह)ल्यं तदर्धतः ॥ १०३ ॥
मानसूत्राद् बहिर्नीप्रं द्वित्रिदण्डमथापि वा ।
होमानीप्रं पुनः प्रोक्तमुपपीठं गलात् तु वा ॥ १०४ ॥
अधिष्ठानजगत्या वा पादुकाद् वा विमानके ।
होमोर्ध्वेऽब्जे प्रकर्तव्ये तत्पीठाद्धोमनिष्क्रमः ॥ १०५ ॥
पद्मस्य वेशरस्योच्चं समं पादोनमेव वा ।
तदूर्ध्वे वापि चाचङ्गं होमोर्ध्वं वोपपीठकम् ॥ १०६ ॥
तदूर्ध्वेऽब्जमधिष्ठानं वा करोतु यथारुचि ।

अथ समभूकरणसाधनावनतलक्षणम् ।

अथ कुर्यादवनतं पट्टिकाभिस्त्रिभिः पुनः ॥ १०७ ॥
साङ्गुलीकरमानाभिस्त्र्यश्रं सम्बन्ध्य निश्चलम् ।
वापीं कुर्याज्जलैः पूर्णां तस्यां शङ्कुद्वयं न्यसेत् ॥ १०८ ॥

तोयोर्ध्वगतशृङ्गं तु तयोर्मूर्ध्नोः पदद्वयम् ।
निधाय त्र्यश्रकस्यैतदूर्ध्वांश्राबद्धलम्बकम् ॥ १०९ ॥
तिर्यक्पट्टयाश्च लम्बेन सङ्गदेशेऽङ्कमालिखेत् ।
एवं कृत्वा ह्यवनतं तेन निम्नादि नीयताम् ॥ ११० ॥
अङ्कात् सूत्रगतिर्यत्र तन्निम्नं चान्यदुन्नतम् ।
पट्टिकाङ्के सलम्बस्य संयोगे समभूतलम् ॥ १११ ॥

अथ गृहारम्भः ।

गृहाणां करणे शस्ते मुहूर्ते स्थपतिः स्वयम् ।
नीत्वाथ वाससी श्लक्ष्णे नवीने परिधाय च ॥ ११२ ॥
उत्तरीयानुलेपादिभूषणैश्च विभूषितः ।
सम्पूज्याथ गणेशानं विप्रेभ्यो दीयतां वसु ॥ ११३ ॥
मुहूर्तदक्षिणां कृत्वा वाससाच्छाद्य पादुकम् ।
आद्यङ्गार्थं तु तं तक्षणाप्याशीर्वादैर्द्विजेरितैः ॥ ११४ ॥
सहितं प्राङ्मुखः स्थित्वा विन्यसेत् तत्र पादुकम् ।
जन्मादिस्तूपिपर्यन्तं बुद्धा निश्चित्य मन्दिरम् ॥ ११५ ॥

अथ पत्रमानादिकम् ।

यावत्स्वायोच्चमानं गमयतु जगती बाह्यतो मानसूत्रात्
तत्तुल्यं कैरवं चोच्छ्र्यसमचरणेनोर्ध्वपादांशकं च ।
शिष्टं तत्पट्टिकाब्जादिकमपि गमयेन्मानसूत्रात् समन्तात्
तत्तच्छोभानुरूपं गमयतु जगतीसूत्रतः पादुकं च ॥

अम्बुजानां तु सर्वेषां निर्गमं तूच्चसंमितम् ।
वेत्राणामपि सर्वेषां चतुर्भागैकनिर्गमम् ॥ ११७ ॥

व्यात्तव्यालास्यमध्यप्रसृमरनिजमूलोज्ज्वलं गोमुखं त-
न्मुक्तादामादिवल्लीवलयपरिगतं शुण्डुभिर्मण्डितं च ॥ २ ॥

अथवान्यप्रकारेण नाललक्षणमुच्यते —

प्रतिबन्धे प्रतेरन्ते तदन्ते पट्टिकान्तके।
गलान्ते कुमुदान्ते वा वप्रान्ते पादुकान्तके ॥ ३ ॥

छिद्रं कुर्यादधश्चोर्ध्वे नालं तस्मिन् सुयोजयेत्।
जान्वङ्गुलं समारभ्य गुणाङ्गुलविवर्धनात् ॥ ४ ॥
चतुर्विंशाङ्गुलान्तं तु नालायामं हि पञ्चधा।
भित्तिबाह्यगतं तत्तत्स्यार्धं गर्भगेहके ॥ ५ ॥
वेशयित्वाथवा भित्तेरभ्यन्तरसमं तु वा।
वस्वङ्गुलं समारभ्य द्व्यङ्गुलविवर्धनात् ॥ ६ ॥
कलाङ्गुलावसानं तु विस्तारं पञ्चधा क्रमात्।
तन्मूलतारपञ्चांशे त्र्यंशं स्यादग्रविस्तृतम् ॥ ७ ॥
तद्विस्तारसमं वाथ त्रिपादं वा दलं घनम्।
विस्तारस्य त्रिभागैकं छिद्रे तारं नतं तथा ॥ ८ ॥
नालमध्ये तु कर्तव्यं निम्नोन्नतविवर्जितम्।
मूलादग्रनतं किञ्चिन्मूलं सिंहास्यबन्धितम् ॥ ९ ॥
गजोष्ठसदृशालंब्य (?) यथासुन्दरमग्रकम्।
व्यालेभसिंहभूताद्यैर्वृतं नालं करोतु वा ॥ १० ॥
जगत्यङ्गुलमारभ्य द्व्यङ्गुलविवर्धनात्।
आसंकृत्यङ्गुलं नालस्यायामं पञ्चधा स्मृतम् ॥ ११ ॥

मयोऽष्टाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात् ।
नालं षोडशमात्रान्तं पञ्चधेति जगाद ह ॥ १२ ॥
त्रिचतुष्पञ्चषण्मात्रं तारं तस्य समं घनम् ।
तारात् पञ्चत्रिभागं स्यादग्रं नालस्य वा पुनः ॥ १३ ॥
नालं पुंशिलया कार्यं नालस्य वरुणोऽधिपः ।
अथवा पीठनालेन समायामादिसंयुतम् ॥ १४ ॥
शुण्डुभिश्चित्रवल्ल्यादिभूषणैश्च विभूषितम् ।
एवं तले तले कार्यं गोमुखं प्रस्तरान्तरे ॥ १५ ॥
दक्षिणोदङ्मुखेष्वत्र विमानेषु महामतिः ।
प्रणालं प्राङ्मुखं कुर्यात् पूर्वसूत्रेऽथवा पुनः ॥ १६ ॥

इति शिल्परत्ने नाललक्षणं नाम
विंशोऽध्यायः ।

## अथ एकविंशोऽध्यायः ।

### अथ भित्तिः ।

चित्वेत्यधिष्ठानमिहानुरूपं समं तलीकृत्य शिलाप्रतानैः ।
विभज्य गर्भान्तरबाह्यभित्तिं तन्मध्यनाडीं रचयेद् यथार्हम् ॥
वह्न्यादितिथ्यत्र्यधिकौजविभागभक्ते
व्यासे गृहस्य नयनाद्युरगान्तिमांशैः ।
पञ्चांशतश्च वसुभागयुतेऽर्धतश्च
गर्भालयस्य विततिं नवधोदितेति ॥ २ ॥
बाह्या गृहव्यासगजांशतः स्याद् भित्तिः परा गर्भगजांशतश्च ।
नाडी समन्तादुभयान्तराले सम्मेल्य वा भित्तियुगं गृहेऽल्पे ॥

विस्तारेऽल्पगृहे क्वचिद् विशिखभक्ते (वा?)ऽन्तःपदे पीठिकां
पङ्क्त्या गर्भगृहं करोतु परितः पङ्क्त्या च भित्तिं घनाम् ।
तस्मिन् नन्दविभाजिते सति विधायैवं ततो वीथिकां
भित्तिं चोभयपङ्क्तितो विरचयेद् द्वारं च कोष्ठेऽग्रतः ॥ ४ ॥

प्रासादस्य त्रिभागैकं सप्तभागानलांशकम् ।
विशेषाद् गर्भगेहस्य विस्तारं प्राह काश्यपः ॥ ५ ॥

भित्तिस्तम्भस्य तारो यस्तेन द्वित्रिचतुर्गुणम् ।
पञ्चषड्गुणकं वाथ भित्तिविष्कम्भमिष्यते ॥ ६ ॥

क्वचित् तद्द्वारबहलतुल्यं भित्तेर्विशालकम् ।
अष्टाङ्गुलं समारभ्य द्व्यङ्गुलाविवर्धनात् ॥ ७ ॥

यावद् द्विहस्तकं तावत् कुर्याद् वा भित्तिविस्तृतम् ।
स्वस्योत्सेधशतांशैकहीनं कुड्याग्रविस्तृतम् ॥ ८ ॥

स्तम्भवद् वा बहिर्भागमन्तर्भागं समं भवेत् ।
तत् कुड्यं पञ्चधा प्रोक्तं तत्तद्द्रव्यविशेषतः ॥ ९ ॥

शिलामयं चेष्टकं च जालकामयमित्यपि ।
फलकामयमप्येतन्मृन्मयं च परं पुनः ॥ १० ॥

यथार्हव्यासतुङ्गं च कुड्यं शैलं शिलामयम् ।
तथैवेष्टकया कार्यं कुड्यं स्यादिष्टकामयम् ॥ ११ ॥

नानाजालकनिष्पाद्यं कुड्यं यज्जालकामयम् ।
यथार्हस्तम्भविन्यासं शस्तदारुमयक्रियम् ॥ १२ ॥

फलकाभिश्रितं मध्ये कुड्यं स्यात् फलकामयम् ।
सार्धाङ्गुलं समाराभ्य यवैकैकविवर्धनात् ॥ १३ ॥

फलकाया घनं प्रोक्तं त्र्यङ्गुलान्तं मनीषिभिः ।
मृत्तिकाभिः प्रशस्ताभिः कषायसलिलादिभिः ॥ १४ ॥
मर्दिताभिश्च रचितं यत् कुड्यं तत् तु मृन्मयम् ।
कुड्यव्यासत्रिवेदांशबहलां वाग्रपङ्कजाम् ॥ १५ ॥
पट्टिकां चतुरश्रां वा कुड्योपरि नियोजयेत् ।
प्रत्युत्तरान्तर्विरचय्य भित्तिं ततः समन्तात् सुदृढैः शिलाद्यैः ।
तां भूषयेद् वेदिकयाङ्घ्रिमूले तदूर्ध्वतश्चोज्ज्वलपञ्जराद्यैः ॥
यज्ञभूमिमन्त्रबिम्बस्य प्रतिष्ठापि निरूपिता ।
तद्भूम्यन्तं घनं कुर्यादिति शास्त्रविदो विदुः ॥ १७ ॥
प्रत्युत्सेधेन पादायतिवसुमुनिषड्भागतोत्स्यर्धकेन(?)
द्वित्रिभ्रेनाङ्घ्रितारेण च भवति समोऽत्युच्छ्रयो वेदिकायाः ।
उत्सेधे द्व्यंशितेऽधोवधिगुणरशनान्तर्यथाष्टाद्रिषड्भा-
गेऽशैः कम्पाब्जकम्पाः शशिकरशशिभिः शेषतोऽधोगलं च ॥
अध्यर्धदण्डमानं तु कन्यसा वेदिका मता ।
पादोनकलिदण्डं तु वेदिका मध्यमा स्मृता ॥ १९ ॥
त्रिदण्डं वेदिकातुङ्गं श्रेष्ठमित्याह काश्यपः ॥ २० ॥
(प)ङ्क्त्या प्रत्युत्तरान्तर्गतचरणमितिं भोगिभिर्भागतोऽधो-
वेदिं वेदैश्च पादानलरचितवलभ्युत्तरं भागतोऽथ ।
यावत् स्वोत्सेधनीप्रप्रसरवलभिभिः स्वाहनीप्रं कपोतं
गेहे + सप्तमेनोज्ज्वल + + गृहँपिण्डिं करोत्वष्टमेन ॥
ऊर्ध्वभूमौ पादतुङ्गे सप्तभागविभाजिते ।
एकांशं खण्डहर्म्याणां वेदिकोभयमीरितम् ॥ २२ ॥

त्रिचतुष्पट्कभागैर्वा गलोत्सेधे विभाजिते ।
गलमूलगवेद्युच्चमंशं श्रेष्ठान्तराधमम् ॥ २३ ॥
कर्णमाने तु तन्मूले कम्पमेकेन कल्पयेत् ।
शेषं कर्णोदयं प्रोक्तं तत्कम्परहितं तु वा ॥ २४ ॥
पुष्पखण्डा चित्रखण्डा शैवला चित्रशैवला ।
इति नाम्ना भवेद् वेदी तद्भूषणभेदतः ॥ २५ ॥
कम्पनिद्राकम्पयुता पुष्पवत्खण्डमण्डिता ।
मूले पादान्विता या सा पुष्पखण्डेति कथ्यते ॥ २६ ॥
सैव निद्राकम्पपट्टपद्मपद्मविचित्रिता ।
पादपादान्तरे चित्रा चित्रखण्डाभिधीयते ॥ २७ ॥
स्तम्भकम्पाब्जपट्टाढ्या पट्टे शैवलचित्रिता ।
ऊर्ध्वाधः पद्मपत्राढ्या पादे पादान्तरेऽपि च ॥ २८ ॥
नरनारीपत्रचित्रा शैवलाख्या हि वेदिका ।
सैवाधरोर्ध्वाम्बुजयोः वेत्रयुग्ममनोरमा ॥ २९ ॥
प्राग्वद् विचित्रवेषा स्यात् सा वेदी चित्रशैवला ।
अध्यर्धांशं तु वा पद्ममाद्यं द्व्यंशमथापि वा ॥ ३० ॥
चित्रशैवलविख्यातवेदिकाया विशेषतः ।
पुष्पखण्डा चित्रखण्डा नृणां देवादिके स्मृते ॥ ३१ ॥
वेदीचतुष्कं स्तभादौ देवागारेषु सम्मतम् ।
अथवा क्षुद्रहर्म्याणां वेदिकोत्सेधमानतः ॥ ३२ ॥
षड्भक्ते पट्टमंशेन कर्णं द्वाभ्यां प्रकल्पयेत् ।
ऊर्ध्ववाजनमेकांशेनाब्जमंशेन कारयेत् ॥ ३३ ॥

तदूर्ध्वपट्टमेकेन कर्णं चरणभूषितम्।
सर्वासां वेदिकानां तु गलमङ्घ्रिविभूषितम्॥ ३४॥
मध्यस्तम्भसमं व्यासं नीव्रकं वेदिकाङ्घ्रिणः।
गर्भभित्तित्रिभागैकमङ्घ्रेर्वेद्यङ्घ्रिवेशनम्॥ ३५॥
चतुर्भागैकभागं वा पञ्चभागैकमेव वा।
अथवान्यप्रकारेण भवेद् वेद्यास्तु निर्गमः॥ ३६
कुड्यपाद्बाह्यमानं तु पार्श्वयोः प्रस्तरान्तकम्।
तेन षट्सप्तरन्ध्राष्टदशभागैर्विभाजिते॥ ३७॥
एकांशरहितं शेषं वेदिकायास्तु निर्गमः।
सर्वत्र प्रस्तरस्योर्ध्वे वेदिका स्याद् यथार्हकम्॥ ३८॥
जालार्थे वेदिका नैव छिन्द्यादन्यत्र तोरणात्।
द्वारार्थं वा यथोद्देशं वेद्याश्छेदो न दुष्यति॥ ३९॥
प्रस्तरोत्तरयोर्मध्यं झषालस्तम्भमीड्यते।
उपानोत्तरयोर्मध्यं निध + स्तम्भमुच्यते॥ ४०॥
प्रासादः सकलोऽङ्घ्रितोरणचतुर्द्वारान्वितो माण्डितः
स्तम्भाभ्यन्तरजालपञ्जरयुतो वा पञ्चहस्तादितः।
युक्तो मूलतले विदि + + + + + + + + + + + +
+ + + + + + + + + + + + + + + + + + + + + + + + ॥ ४१॥
मूलभूस्तम्भविस्तारो ह्यष्टाविंशतिकाङ्गुलः।
द्व्यङ्गुलद्व्यङ्गुलह्रासाद् व्यासं (व)प्रतलक्रमात्॥ ४२॥
षण्मात्रं पादविस्तारं भवेद् द्वाशके तले।
तद्व्यासादर्कभागाद्यापड्भागोनाग्रविस्तरम्॥ ४३॥

अथवा चरणायामे षट्सप्ताष्टनवांशिते ।
पङ्क्तिरुद्रार्कभागैर्वा भक्ते भागाङ्घ्रिविस्तरे ॥ ४४ ॥
स्तम्भमूलविशालं स्यादेवं सकलभूमिषु ।
तस्मादग्रविशालं तु कारयेत् पूर्वमुक्तवत् ॥ ४५ ॥
कुड्यस्तम्भाग्रविपुलं यत् तद्दण्डमिति स्मृतम् ।
तेन मेयानि सर्वाणि विमानांशानि सर्वशः ॥ ४६ ॥
प्रत्युत्तरान्तर्गतचरणसमुन्मानकेष्टंकदिभि(?)
स्त्वेष्वेकांशाच्च मूलप्रततितदुरगांशादिहीनाग्रतानान् ।
दारुस्तम्भांस्तदर्हे विहिततिदलाग्न्यब्धिभागोनतानान्
कुड्यस्तम्भांश्च कुड्ये रचयतु चरणाग्रप्रतानोऽत्र दण्डः ॥
स्तम्भोत्तरादिकाङ्गानां द्रव्यं दारूपलेष्टकाः ।
स्तम्भान्तरं द्विहस्तादि भवेत् पञ्चकरान्ततः ॥ ४८ ॥
स्तम्भयोरन्तरं हस्ताद्धीनं नैव समाचरेत् ।
+ + + + यशः कुर्याच्चतुर्हस्तावसानकम् ॥ ४९ ॥
षडङ्गुलप्रवृद्ध्या तु नव भेदाः प्रकीर्तिताः ।
गृहीतांशवशाद् वापि यथायुक्तया प्रयोजयेत ॥ ५० ॥
प्रासादः सकलोऽङ्घ्रितोरणचतुर्द्वारान्वितो माण्डित-
स्तम्भाभ्यन्तरजालपञ्जरयुतो वा पञ्चहस्तादितः ।
युक्तो मूलतले विदिक्स्थितचतुष्कूटैः परं तत्परः
शालः कूटकनासिकादिविलसज्जालोज्ज्वलत्पञ्जरम् ॥
स्तम्भाः कोणचतुष्कमध्यविनिवेश्याः स्युः प्रतेरूर्ध्वतः
सामान्येन समान्तराः सुरविमानेषूदिता द्वादश ।

एके विंशतिरीशदोःप्रभृतिकेष्वेतेषु ते नैकधा
चोक्ताः स्वाकृतिभूषणक्रमवशादेष्वर्चयेच्चोत्तरम् ॥ ५२ ॥

युग्मं वा(स्यादयुग्मं वा)पादं देवालयादिषु ।
युग्ममेव नृणां शस्तमयुग्मं नैव कारयेत् ॥ ५३ ॥

मूले चाग्रे च पादानां तत्तद्विस्तारभागतः ।
चतुष्पञ्चांशतो वाथ शिखा स्यादुचितायता ॥ ५४ ॥

तदर्धं वा त्रिभागोनं चतुर्भागोनमेव वा ।
कुड्यस्तम्भविशालः स्यात् तदर्धं वास्य निष्क्रमः ॥ ५५ ॥

विस्तारस्य त्रिपादं वा चतुर्भागैकमेव वा ।
अष्टाश्रवृत्तवेदाश्रेष्वथ साधारणं तु वा ॥ ५६ ॥

नामान्येतेष्वनेकानि भवन्त्याकारभूषणैः ।
कार्याः स्युश्चरणा युगाष्टनृपकोणाः सर्वतो वर्तुला
विस्तारत्रिगुणोपरित्रिगुणविस्तारोन्मिताष्टाश्रकाः ।
मूलोद्धावितकर्णसूत्रचतुरश्रोर्ध्वांशवृत्ताः पुनः
शुण्डून्नेदविचित्रवृत्तिरुचिरा वारभ्यगेहोचिताः ॥ ५७ ॥

मूलादग्रं युगाग्रं तु कु(म्भ)मण्ड्यादिसंयुतम् ।
ब्रह्मकान्तमिति ख्यातं वस्वश्रो विष्णुकान्तकः ॥ ५८ ॥

षडश्र इन्द्रकान्तः स्यात् सोऽयं वा स्कन्दकान्तकः ।
द्वादशाश्रो भानुकान्तश्चन्द्रकान्तः कलाश्रकः ॥ ५९ ॥

वर्तुलश्चेदीशकान्तः अथवा स्वस्य दीर्घतः ।
आयत्रिभागो वेदाश्रो वृत्तिस्त्वग्रत्रिभागतः ॥ ६० ॥

तयोर्मध्ये तु वस्वश्रः स भवेद् रुद्रकान्तकः ।
मूले पद्मासनश्चाथ चक्रवाकैरलङ्कृतः ॥ ६१ ॥
सभद्रमध्यभागस्तु भद्रकान्तो विमण्डितः ।
व्यालेभभूतसिंहैस्तु मूले यः परिमण्डितः॥ ६२ ॥
इष्टका(न्तः) तथैवोर्ध्वे तत्तत्कान्ताह्वयो भवेत् ।
वृत्त एव स्वदीर्घेण शुण्डुभेदेन संयुतः ॥ ६३ ॥
शुण्डुपादः पिण्डिपादः स चेन्मुक्ताविचित्रितः ।
मूले वेदाश्रकश्चोर्ध्वे षोडशाश्राद्यलङ्कृतः ॥ ६४ ॥
स्यान्मूलचतुरश्राख्यं पद्मं पद्मासनं स्मृतम् ।
मूलाग्रयोस्तु वेदाश्रो मध्येऽष्टाश्राद्यलङ्कृतः ॥ ६५ ॥
वज्रकान्तस्तु विज्ञेयो भक्तास्तम्भः समौक्तिकः ।
यद्रत्नचित्रितस्तम्भस्तत्तद्रत्नाभिधो भवेत् ॥ ६६ ॥
मूले पद्मासनो मध्ये षोडशाश्रैरलङ्कृतः ।
ऊर्ध्वाश्रचतुरश्रोऽङ्घ्रिश्चित्रखण्डाह्वयः स्मृतः ॥ ६७ ॥
स एवाष्टाश्रको मध्ये श्रीबन्धः पट्टबन्धवान् ।
विष्कम्भकर्णमानेन स्तम्भाग्रे चतुरश्रकम् ॥ ६८ ॥
तदधस्त्वर्धदण्डेनाप्यब्जमष्टाश्रसंयुतम् ।
दण्डमानेन तस्याधो वस्वश्रं परिकल्पयेत् ॥ ६९ ॥
तदधः पूर्ववत्पद्मं तस्याधो दण्डमानकम् ।
चतुरश्रसमायुक्तं तदधः पद्ममुक्तवत् ॥ ७० ॥
मूलेऽवशेषं वेदाश्रं चित्रखण्डाह्वयस्स च ।
मध्ये कलाश्रः पट्टेन बन्धः श्रीवत्ससंज्ञकः ॥ ७१ ॥

पट्टक्षेपणसंज्ञः स्याच्चतुरश्रत्रिपट्टवान् ।
मूलाग्रयोस्तु विपुलो मध्ये रामांशतः कृशः ॥ ७२ ॥
वृत्तिश्चेद् दण्डपादाख्यो मूलशोलूखलासनः (?) ।
मूलव्यासे तु सप्तांशे स्तम्भानामथवा पुनः ॥ ७३ ॥
द्व्यंशोनो मध्यभागः स्यादेकांशोनोऽग्रविस्तरः ।
इत्युक्ता निखिलाः स्तम्भाः कुम्भमण्ड्यादिभूषणैः ॥ ७४ ॥
संयुक्ता वा वियुक्ता वा भवन्त्यखिलवेश्मसु ।

ओमां कुर्वीत दण्डद्वयततचरणोच्चां घटं दण्डयुग्म-
व्यासं साङ्घ्र्यादिदण्डोच्छ्रयमुदधिततां दण्डतोऽङ्घ्र्यूनदीर्घाम्
मण्डीं दण्डप्रथाङ्घ्र्यंशकरहितघनं वीरकाण्डं त्रिसार्धे-
षूदन्वद्दण्डदीर्घा चरणततदर्घोच्छ्रयां पोतिकां च ॥ ७५ ॥

कुम्भाः स्युः पादविष्कम्भाच्चतुर्थांशाधिकोन्नताः ।
सार्धा वा सत्रिपादा वा द्विगुणा वा भवन्ति हि ॥ ७६ ॥
श्रीकरं चन्द्रकान्तं च सौमुख्यं प्रियदर्शनम् ।
इति कुम्भाश्चतुर्धा स्युर्वृत्तानां श्रीकरो भवेत् ॥ ७७ ॥
पादानां वसुकोणानां कुम्भः स्यात् प्रियदर्शनः ।
अथवा दण्डमानेन कुर्यादेवं घटोन्नतम् ॥ ७८ ॥
घटोच्छ्रये नवांशे धृग् भागेन परिकल्पयेत् ।
चतुर्भिः कुम्भ एव स्यात् कर्णोऽशेनांशतो मुखम् ॥ ७९ ॥
भागेन पद्ममेकेन पीठिकोर्ध्वादधोगतम् ।
स्तम्भाग्रकर्णमानेन यो व्यासः समविस्तृतः ॥ ८० ॥

१. 'द' ख. पाठः.

तस्य कर्णेन सदृशं कुम्भविस्तारमेव वा ।
स्तम्भव्याससमं प्रोक्तं तारं धूक्कर्णयोः स्मृतम् ॥ ८१ ॥
तदधो लशुनमूलं तत्तुङ्गं दण्डमानतः ।
स्वाष्टांशाधिकविस्तारं तस्याधः पङ्कजं पुनः ॥ ८२ ॥
पादतारसमं तारमर्धदण्डमथापि वा ।
त्रिपादं वाब्जकस्योच्चं तस्याधः कल्पयेत् पुनः ॥ ८३ ॥
मालास्थानं तदुत्सेधं दण्डार्धं दण्डमेव वा ।
तस्याधो दण्डमानेन मुक्तादामविभूषणम् ॥ ८४ ॥
एतेषां स्तम्भविस्तारतुल्यं व्यासमुदाहृतम् ।
दण्डं वा सार्धदण्डं वा मूले पद्मासनोदयम् ॥ ८५ ॥
द्विगुणं तस्य विस्तारं पद्माकारं तु कारयेत् ।
तत्पद्मासनतुङ्गे तु चरणाना षडंशिते ॥ ८६ ॥
ऊर्ध्वपट्टं तदेकांशमूर्ध्वपद्मं तथांशतः ।
कर्णमर्धेन कर्तव्यमधःपद्मं द्विभागिकम् ॥ ८७ ॥
तदधःपट्टमेकांशमधस्तादर्धमम्बुजम् ।
स्तम्भानां कुम्भतश्चोर्ध्वे सर्वेषां फलका भवेत् ॥ ८८ ॥
त्रिदण्डं फलकाव्यासं कन्यसं सार्धलोकतः ।
चतुर्दण्डविशालं तु मण्ड्याश्चोत्तममुच्यते ॥ ८९ ॥
अथवा फलकाव्यासः कुम्भकर्णसमो भवेत् ।
सर्वेषां फलकानां तु तुङ्गं पादोनदण्डतः ॥ ९० ॥
स्तम्भाग्रतुल्यं मण्ड्युच्चं पञ्चभागोनमेव वा ।
पञ्चभागं त्रिभागं वा यथायोग्यं करोतु च ॥ ९१ ॥

तदुत्सेधं त्रिधा भङ्क्त्वा भागेनोत्सन्धिरूर्ध्वतः।
तदधो वेत्रमेकांशं तस्याधोऽम्बुजमंशतः ॥ ९२ ॥
अथवा फलकातुङ्गे पञ्चभागविभाजिते।
सार्धेन फलकातुङ्गं तत्समो वेत्रनिर्गमः ॥ ९३ ॥
द्वाभ्यामब्जं प्रकर्तव्यं तदाकरोऽधुनोच्यते।
नागपत्रसमाकारमावेत्रादब्जपद्मवत् ॥ ९४ ॥
अथ नागफणाकारमब्जं कुर्यान्मनोहरम्।
विपरीतं विरूपं च वर्ज्यं तदशुभं यतः ॥ ९५ ॥
मण्ड्यूर्ध्वे वीरकाण्डः स्यात् तत्तुङ्गं फलकोक्तवत्।
अग्रपादविशालं तु विशालं तद्युगाश्रकम्(?) ॥ ९६ ॥
तदूर्ध्वे पोतिकां कुर्यान्नानाभेदविचित्रिताम्।
मूलपादसमव्यासा पोतिका चर उत्तमा(?) ॥ ९७ ॥
पादमध्यविशालेन समव्यासा च मध्यमा।
अग्रपादविशालस्य समा कन्यसबोधिका ॥ ९८ ॥
विस्तारसदृशोत्सेधा पञ्चदण्डायतान्विता।
उत्तमा बोधिका ख्याता तारत्रिंशकोन्नता ॥ ९९ ॥
चतुर्दण्डायतोपेता मध्यमा सा प्रकीर्तिता।
विस्तारार्धसमुत्सेधा गुणदण्डायतान्विता ॥ १०० ॥
कन्यसा बोधिका ख्याता तारे वाथाशुगांशिते।
एकोनमुच्चं मध्याया नीचायास्त्र्यंशमुन्नतम् ॥ १०१ ॥
बोधिकोच्चे त्रिभागे तु भूम्यंशेनोर्ध्वपट्टिका।
मध्येंऽशेन तरङ्गः स्याच्छताद्यैर्भूषितं तु वा ॥ १०२ ॥

तदधस्त्वेकभागेन मुष्टिबन्धं तु कारयेत् ।
त्रिभागे बोधिकोत्सेधे सार्धांशेनाग्रपट्टिका ॥ १०३ ॥
तदर्धार्धेन तदधः क्षेपच्छायान्वितं भवेत् ।
तदुच्चार्धात् त्रिभागानामंशाभ्यां वात्र कल्पयेत् ॥ १०४ ॥
सव्यासार्धात् त्रिपादात् कुर्याद् वा तास्वग्रमण्डनम् ।
दण्डं त्रिपादमर्धं वा छायामानं तदग्रयोः ॥ १०५ ॥
ऊर्ध्वस्थपट्टिकाधस्थाच्छायाकारं प्रकल्पयेत् ।
अधस्थाद् बोधिकायां तु स्वाकारं प्रवदाम्यहम् ॥ १०६ ॥
मुष्टिबन्धं त्रिभागैकं विस्तारादर्धमेव वा ।
पार्श्वयोरुभयोः शेषं छायाकारं भवेदिह ॥ १०७ ॥
समुद्रक्षेपणं मध्यपट्टं पत्राद्य(म?)लङ्कृतम् ।
पार्श्वयोस्तु तरङ्गाः स्युः समाश्चान्यो(न्य)हीनकाः ॥ १०८ ॥
तरङ्गाश्चात्र वेदर्तुवस्वाशादित्यसंख्यकाः ।
बहवोऽपि समाश्चैके तुल्या उभयपार्श्वयोः॥ १०९ ॥
सागरे वीचिकाकाराः पट्टिकारछन्नमध्यमाः ।
पार्श्वयोर्मुष्टिबन्धाग्रं व्यालरूपादिकल्पितम् ॥ ११० ॥
महार्णवी च पत्री च चित्री चेति त्रिधैव सा ।
भूतेभमकरव्यालरत्नबन्धविचित्रिता ॥ १११ ॥
वल्लीचित्राग्रपट्टा च सा ख्याता चित्रपोतिका ।
केवलं पत्रवल्लीभिर्विचित्रा पत्रपोतिका ॥ ११२ ॥
तरङ्गमात्रचित्रा या पोतिका स्यान्महार्णवी ।
शोधीमूलाग्रयोः कार्यावग्रौ कीलसमन्वितौ ॥ ११३ ॥

बोधिकारार्धकं वाथ त्रिपादं वाग्रनीप्रकम्।
तन्नीप्रसदृशं तारमम्भोजाकारकल्पितम् ॥ ११४ ॥
अग्रमध्यगतं कीलं तन्निभागविशालकम्।
अम्भोजमुकुलाकारं कीलपृष्ठं प्रकल्पयेत् ॥ ११५ ॥
बोधिकाखण्डमण्डीनि कुम्भं लशुनमूलकम्।
अम्भोजमालां चानानि(?) पादपीठं पुनः क्रमात् ॥ ११६ ॥
क्रमेण योजयेदग्रात् सर्वस्तम्भेषु बुद्धिमान्।
तत्र बोधिकया हीनं कारयेद् वापि पीठकम् ॥ ११७ ॥
दारुपाद इति प्रोक्तं तद्विस्तारसमं तु वा।
अध्यर्धं द्विगुणं वाथ विस्तारं त्विष्टकाङ्घ्रिषु ॥ ११८ ॥
पादे शिलामये चैव कारयेत् सर्ववेश्मसु।
मिश्रपादं न कुर्वीत मानुषाणां गृहे पुनः ॥ ११९ ॥
देवागारे न दोषाय मिश्रपादा भवन्ति हि।
अथवा क्षुद्रहर्म्याणामन्यथा चरणाः स्मृताः ॥ १२० ॥
मूलतारेण तन्मूलत्रिगुणा वाथ सार्धकम्।
चतुर्गुणं च कुर्याद्वा चतुरश्रं तथाग्रतः ॥ १२१ ॥
मूलतारसमं मध्यं तयोरष्टाश्रमाचरेत्।
अष्टाश्रमध्ये तत्तारं तुल्यं वेदाश्रखण्डकम् ॥ १२२ ॥
मध्यखण्डं विना वात्र मानुषाणां निकेतने ॥ १२३ ॥

इति शिल्परत्ने भित्तिवेदिकास्तम्भलक्षणं नाम
एकविंशोऽध्यायः।

---

## अथ द्वाविंशोऽध्यायः ।

### अथ द्वाराणि ।

गर्भागारप्रताने शिववसुदिनकृच्छैलतिथ्यंशितेंऽशै-
र्बिम्बद्वारोच्छ्रयः स्याद् गिरिशरतुरगाम्नायमातङ्गसंख्यैः ।
उत्सेधेऽष्टैकविंशत्यतिधृतितिथिविश्वाङ्कभक्ते प्रक्लृप्ते
व्यासो दिङ्नन्दशैलोर्म्युदधिपरिमितांशैः क्रमात् कल्पनीयः॥

व्यासे गर्भनिकेतनस्य दहनेषुद्वारनेत्रांशिते
लिङ्गद्वारसमुच्छ्रयं वितनुयाद् द्वित्रीषुचन्द्रांशकैः ।
तस्मिन् द्वारसमुच्छ्रयेऽथ नयनात्यष्टीशशैलांशिते
तद्विस्तारमिलामहोरगशराग्न्यंशैः क्रमात् कल्पयेत् ॥

कुर्यात् सर्वसुरेषु शैलवसुनन्दाशांशितेऽङ्घ्र्युच्छ्रये
द्वारोत्सेधमिहैकभागरहितं विस्तीर्णमात्मार्धतः ।
योगौ स्तम्भसमाधिपादवलविस्तीर्णौ स्फुरद्राजनौ
विस्तारार्धघनौ भुजङ्गमपतङ्गाढ्यौ च मूलाग्रयोः॥ ३ ॥

अथवा पादतुङ्गस्य दशांशाष्टांशकं तु वा ।
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टनवाङ्गुलैः ॥ ४ ॥

तुङ्गार्धादधिकं हीनं द्वारविस्तारमुच्यते ।
द्वारायामे तु नन्दांशे पञ्चांशं वास्य विस्तृतम् ॥ ५ ॥

लब्धोत्सेधे तु दिङ्नन्दवसुसप्तांशके क्रमात् ।
सप्तषट्पञ्चवेदांशो द्वारव्यासस्तु मानुषे ॥ ६ ॥

स्वस्वयोन्या गृहादीनां कल्प्यन्तां द्वारयोनयः ।
दीर्घाच्छेषं तु वा तत्र द्वाराणां विस्तृतं भवेत् ॥ ७ ॥
अथवा गुणतारं वा कुर्याद् द्वारविधौ बुधः ।
द्वारव्यासोच्चमखिलमङ्गुलिच्छेदवर्जितम् ॥ ८ ॥
यथा तथा प्रकर्तव्यं विस्तारायामकल्पने ।
गर्भागारस्य विस्तारे मनुभक्तेऽर्कभागतः ॥ ९ ॥
द्वारायामं तदिध्मांशं दशभागं विशालकम् ।
इदं तु वैष्णवं द्वारमथ शैवालये पुनः ॥ १० ॥
गर्भव्यासार्कनागांशं लिङ्गद्वारायतं पुनः ।
आयतार्धं तु विस्तारमथवा गर्भविस्तरे ॥ ११ ॥
सप्तांशे सति वेदांशं द्वारदीर्घमुदाहृतम् ।
तद्विश्वांशषडंशं स्याद् विस्तृतिः शिवमन्दिरे ॥ १२ ॥
नवपञ्चांशमुच्चं स्याद् गर्भगेहविशालकम् ।
दीर्घाद् रुद्रांशबाणांशं शैवद्वारे विशालकम् ॥ १३ ॥
गर्भगेहविशालाष्टपञ्चांशं द्वारतुङ्गकम् ।
तुङ्गादर्धं तु विस्तारं स्मृतं स्याच्छङ्कराच्युते ॥ १४ ॥
गर्भभूताग्निभागोच्चमुच्चेऽत्यष्टिविभाजिते ।
नवभागं स्मृतं तारमथवा गर्भगेहतः ॥ १५ ॥
भानुसप्तकमायामं तस्मिंस्तिथिविभाजिते ।
द्वारे सप्तांशकं तारमेतौ साधारणौ मतौ ॥ १६ ॥
अथ पादसमुत्सेधादष्टसप्तायतं ततः ।
नवपञ्चविशालं तु गजपञ्चकमेव वा ॥ १७ ॥

अथवा विश्वषट्तारं द्वारं वैष्णवमीरितम् ।
तत्र सप्ताब्धिविस्तारं द्वारं कृष्णस्य पूजितम् ॥ १८ ॥

तत्रापि तिथिनागांशविस्तृतं द्वारमुत्तमम् ।
अशेषसुरसामान्यमिति पूर्वैरुदाहृतम् ॥ १९ ॥

सर्वेषामपि हर्म्याणां द्वारं मध्ये तु योजयेत् ।
तले तले विमानानां दिक्षु द्वाराणि विन्यसेत् ॥ २० ॥

प्रदक्षिणवशादेकं मात्रं नीत्वाथवा पुनः ।
मार्गकूपतरुस्तम्भकोणपीडमशोभनम् ॥ २१ ॥

मुख्यद्वारस्य देवानां नराणां च विशेषतः ।
स्वस्य विस्तारतोऽर्धं वा साष्टार्धांशमथापि वा ॥ २२ ॥

त्रिपादं वाथ कर्तव्यं द्वारं योगघनं पुनः ।
योगोत्सेधे तु वेदांशे चतुरश्रमधोगतम् ॥ २३ ॥

एकांशमूर्ध्वगं त्र्यश्रं बाह्येऽब्जक्षेपणान्वितम् ।
पतङ्गे योगवत्कार्यं घनं क्षेपणकाम्बुजम् ॥ २४ ॥

तारं भुजङ्गमस्यापि तत्राब्जक्षेपणे विना ।

द्वारोत्सेधनियुक्तशेषचरणोत्सेधे शरांशीकृते
द्व्यंशेनाधरपट्टिकामितघनां सार्धे नवाङ्कांशिते ।
हीनां वा जनकेन योगविततां शिष्टांशितः पट्टिका-
मूर्ध्वस्थामथ मङ्गलाढ्यफलकां युक्त्यूर्ध्वपट्ट्यूर्ध्वतः ॥

द्वारोच्चे शेषपादोच्चे द्वादशांशविभाजिते ।
शिरोन्मानं तु सप्तांशं पञ्चांशं गुल्फमिष्यते ॥ २६ ॥

कवाटं चैव योगं चाप्येकजातिमहीरुहैः ॥ २७ ॥
कारयेद् योगमथवा शिलयेष्टकयापि वा।
कवाटं सारवृक्षेण सार्गलं नान्यथाचरेत् ॥ २८ ॥

भित्तिव्यासमितैर्विभज्य बहिरन्तः पञ्चसप्तांशकान्
कृत्वा कल्पितसूत्रसंस्थनिजमध्यं + + योगान्यथ।
मध्यान्मध्यमतीत्य दिक्षु रचयेद् द्वाराणि तूर्ध्वे प्रते-
रग्रयद्वारमृते घनानि कृतशोभान्यूर्ध्वतस्तोरणैः ॥ २९ ॥

अथवा भित्तिमध्ये वा योगमध्यं नियोजयेत्।
सप्तांशे भित्तिविष्कम्भे पञ्चांशेऽध्यमिभागतः ॥ ३० ॥

क्रमाच्छराग्निभागे वा स्थाप्यो योगाधिकोऽन्तरे।
देवानां च नराणां च मध्यद्वारेऽप्ययं विधिः ॥ ३१ ॥

शेषाणामपि मध्ये स्यादिति शास्त्रविदो विदुः।
द्वारस्य योगयोः पार्श्वे भूषणार्थं समाचरेत् ॥ ३२ ॥

अर्धमण्डनकस्तम्भौ युक्तभूषणभूषितौ।
कुड्यपादविशालार्धे त्रिपादं वास्य विस्तृतम् ॥ ३३ ॥

कवाटानि चतुर्धा स्युः युगं चायुगमेव वा।
संहारं धावनं चैव तद्विशेषमथोच्यते ॥ ३४ ॥

योगद्वयान्तर्घटितकवाटद्वितयं यदि।
तद् युग्मं वामयोगान्तर्घटितं त्वेकं कवाटकम् ॥ ३५ ॥

यद्ययुग्मं कवाटं तत् कथ्यते शिल्पवित्तमैः।
दृढप्रवेशनिर्यूहं स्तम्भे वाप्युत्तरेऽपि वा ॥ ३६ ॥

संहाराख्यं कवाटं स्याद्भित्तिकूटं च धावनम् ।
फलकाभिरयुग्माभिर्युग्माभिश्च सुरालये ॥ ३७ ॥
कवाटं तु मनुष्याणां स्यादयुग्माभिरेव हि ।
दण्डाब्ध्यङ्गमतङ्गांशबहलतालवद्युत द्वार्दल-
व्यास (?) मूलशिखायुतं दृढतरं कार्यं कवाटद्वयम् ।
कार्यो वामकवाटरोचितपराग्भागर्धतीव्रात्ततः
तद्विघ्नप्रतता च सूत्रफलका सूचक्तनाद्युज्ज्वलाम् (?) ॥
वस्वादिसंकृत्यन्तासु संख्यास्वेकोनभाजिते ॥ ३९ ॥
द्वारतारे तदेकांशं कवाटबहलं विदुः ।
कवाटफलकायामं भुजङ्गमपतङ्गयोः ॥ ४० ॥
घनादिकं द्वारदीर्घसमं तत्र प्रकल्पयेत् ।
रङ्गपादौ च कर्तव्यौ सुवृत्तावग्रमूलयोः ॥ ४१ ॥
स्वबाहुल्यसमायामं सार्धं वा मूलभागगम् ।
भारबाहुल्यसद्दशमग्रं रङ्गपादकम् ॥ ४२ ॥
कवाटद्वितयं कुर्यान्मातृपुत्र्यभिधं बुधः ।
पट्टिकाव्यासचतुरंशैकांशेन समन्वितम् ॥ ४३ ॥
स्वबाहुल्येन सहितं तद्वारततो दलम् ।
व्यासं मातृकवाटस्य पट्टिकाविस्तृतार्धतः ॥ ४४ ॥
रहितं पुत्रिकाव्यासमेवं वा परिकल्पयेत् ।
योगयोः पार्श्वयोः पश्चात्कवाटौ योगमाश्रितौ ॥ ४५ ॥
प्रत्येकमेकं पद्मं वा द्वित्रिपद्ममथापि वा ।
द्वारतारचतुष्पञ्चषट्सप्ताष्टविभाजितः ॥ ४६ ॥

व्यासमेकांशतः कार्यं मात्रैर्वा त्र्यब्धिबाणकैः ।
तत्सूत्रपट्टिकायास्तु घनं तारसमं भवेत् ॥ ४७ ॥
अर्धं वा पादहीनं वा त्रिभागैकमथापि वा ।
कवाटघनयुग्मं वा द्वारोच्चसममायतम् ॥ ४८ ॥
अश्व्यादिवेश्मकृत्यन्ताः पङ्क्तयस्तत्र कल्पयेत् ।
अग्न्याद्यत्यष्टिसंख्यान्तं पङ्कजान्यग्रसन्धिषु ॥ ४९ ॥
अग्न्याद्याः पङ्क्तयो वाथ धृत्यन्ताश्चतुरादिकाः ।
स्तना वा स्युः प्रकर्तव्या ओजयुग्मक्रमेण तु ॥ ५० ॥
ओजयुग्मस्तना पट्टी निर्विशेषामरालये ।
वर्ज्या नरालये युग्मपङ्कजा सूत्रपट्टिका ॥ ५१ ॥
तारार्धमुच्छ्रयं तेषां त्रिभागैकं तु वा भवेत् ।
बहलार्धं तु वा कुर्यादुच्छ्रये दर्शनांशिते ॥ ५२ ॥
द्व्यंशं तदूर्ध्वपट्टं स्यात् पद्मं तु त्रिभिरंशकैः ।
दलाष्टकयुतं वापि वृत्तं केसरसंयुतम् ॥ ५३ ॥
अधःपट्टं तदेकांशं तदधः पद्मपीठिकाम् ।
चतुरश्राकृतिं कुर्यादधःपट्टसमोन्नताम् ॥ ५४ ॥
मूलाग्रपङ्कजे कार्ये ह्यर्धवृत्तविचित्रिते ।
पङ्क्तयः पुष्पदामाद्यैः मुक्ताद्यैश्च विचित्रिताः ॥ ५५ ॥
पट्टिकाव्यासतः पादभागं नीत्वाथ पार्श्वतः ।
मातृसंज्ञकवाटस्य मूले चाग्रे महामतिः ॥ ५६ ॥
भुजङ्गमघनं नीत्वा पतङ्गस्य घनं तथा ।
तयोर्मध्ये द्वारसूत्रे तन्मध्यं च यथा भवेत् ॥ ५७ ॥

तथा विन्यस्य तां कीलैः पङ्कजाभागकल्पितैः ।
सरोजमुकुलाग्रैर्वा कांस्यैर्वायसकल्पितैः ॥ ५८ ॥
पट्टिकापद्ममध्येषु विद्धैः कुर्याच्च निश्चलाम् ।
कवाटयोस्तारसमं भारायाममुदीरितम् ॥ ५९ ॥
भारतारं प्रकर्तव्यं पतङ्गवितते: समम् ।
सपादं वाथ सार्धं वा तुङ्गतुल्यं घनं तु वा ॥ ६० ॥
व्यासादर्धं त्रिपादं वा पुच्छतारसमायतौ ।
भारतारेऽङ्घ्रिसंभक्ते त्रीणि सूत्राणि पातयेत् ॥ ६१ ॥
तिर्यक्सूत्रद्वयं कार्यं द्वारव्यासाग्रमध्यतः ।
अन्त्यसूत्रयुतिर्यत्र तिर्यक् सूत्रत्रयस्य तु ॥ ६२ ॥
तत्स्थपृष्ठपदव्यासतुल्यं कर्कटकेन तु ।
भ्रामयित्वा करोत्वत्र वृत्तं खण्डीत्रयं पुनः ॥ ६३ ॥
खण्ड्यन्तराग्रमूलेषु तृतीयात् सूत्रयोर्बहिः ।
त्यक्त्वा निम्नं प्रकर्तव्यं निम्नखण्डियुतौ तथा ॥ ६४ ॥
शिल्पिभिश्चित्रसंयुक्तं चित्रकारैः करोतु वा ।
कार्ये च सुषिरे वृत्ते ह्याद्यसूत्रबहिःपदे ॥ ६५ ॥
मूलागततत्तिर्यक्सूत्रयोर्बाह्यदेशतः(?) ।
ऊर्ध्वस्थरङ्गपादस्य प्रमाणेन विचक्षणः ॥ ६६ ॥
युज्यतां द्वारपादाभ्यां अन्तराद्यं पदं यथा ।
शूलकीलादिवेधैश्च प्रतेरूर्ध्वेऽर्धपाणिना ॥ ६७ ॥
अधोभारं त्वेवमेव मध्यखण्डिविवर्जितम् ।
पादमाद्यं परित्याज्यं द्वितीयस्थावटद्वयम् ॥ ६८ ॥

रङ्गपादप्रमाणेन वर्तुलं त्वर्धनिम्नकम् ।
द्वारोत्सेधशरांशैकमरमायाममीरितम् ॥ ६९ ॥
युगवह्नयेकभागं वा षट्पञ्चैकांशविस्तृतम् ।
व्यासपादोनमर्धं वा समं वा बहलं विदुः ॥ ७० ॥
अधोभारसमाकारा कीर्तिता शिल्पवित्तमैः ।
तदायामेऽब्धिसंभक्ते त्यजेन्नैकैकमग्रयोः ॥ ७१ ॥
मध्ये निधाय द्वितयं तत्सन्धावर्गलस्य च ।
कुर्याच्च कबलीं तत्र ह्यर्गलस्य प्रमाणतः ॥ ७२ ॥
कैवा(ट)व्या(स)सदृशमर्गलस्यायतं विदुः ।
पादोनं वा तदष्टांशादेकतत्तारमुच्यते(?) ॥ ७३ ॥
तारार्धं बहलं कुर्यात्पृष्ठं विस्तारतुल्यकम् ।
अग्रे रमाया विस्तारतुल्यं नीत्वात्र कारयेत् ॥ ७४ ॥
पृष्ठार्धं वा त्रिपादं वा खण्डं पृष्ठस्य तस्य च ।
अर्गलस्य च विस्तारसममुन्नतमुच्यते ॥ ७५ ॥
अर्धवृ[२]त्तं तु वा पृष्ठमष्टाश्रं चारु कारयेत् ।
ऊर्ध्वार्गलं पुत्रिकायामन्यस्यामधरार्गलम् ॥ ७६ ॥
ऊर्ध्वाग्रमरमां चापि विन्यसेत्तद्बहिः पुनः ।
द्वारसूत्रादर्गलार्धमानीयि[३]त्वा च दक्षिणे ॥ ७७ ॥
विन्यसेदरमां तत्र त्वन्यस्यान्यदिशि स्मृतम् ।
द्वारायामस्य मध्ये तत्कुर्याच्छास्त्रविशारदः ॥ ७८ ॥

१. 'कवाव्यौस', २. 'द्ध'. ख. पाठः. ३. 'नं नीत्वा' क. पाठः.

अरमामूलाग्रगैः शूलैः कीलैर्वा दृढतां नयेत् ।
एका वा स्यादुपद्वारे कवाटमिति केचन ॥ ७९ ॥
द्वारतारं कवाटस्य बहलद्वयसंयुतम् ।[1]
कवाटफलकाव्यासं रङ्गपादौ च वामके ॥ ८० ॥
द्वारव्यासार्धमानं वा त्रिभागैकमथापि वा ।
भारस्यायाममेवं स्यात्खण्डीशेषं यथा पुनः ॥ ८१ ॥
अधोभारस्तु वा गर्तशङ्कुं वा कारयेदधः ।
कवाटबहलद्विघ्नबहलं व्यासमेव च ॥ ८२ ॥
तत्स्थाने निखनेद्भूमौ तदितरस्यायतात्मकम् ।
विभजेदूर्ध्वविस्तारे द्विधा चैकतमे पदे ॥ ८३ ॥
रङ्गपादप्रमाणेन गर्तं कुर्याद् यथाविधि ।
पृष्ठमष्टाश्रकं कुर्यादर्धवृत्तमथापि वा ॥ ८४ ॥
अस्यारमार्धभाराभा कवाटघनमानतः ।
त्रिगुणं वास्य विस्तारमायामं तद्वयं भवेत् ॥ ८५ ॥
तत्तारस्य त्रिभागेन तन्मध्ये गर्तमाचरेत् ।
समतुर्यश्रकं वा स्याद् वृत्तं वा तद्यथोचितम् ॥ ८६ ॥
कवाटघनतुल्यं स्यात्तदर्गलघनं पुनः ।
आयामत्रिगुणं वा स्याच्चतुर्गुणमथापि वा ॥ ८७ ॥
पृष्ठं बहलतुल्यं वा त्रिपादं वा यथोचितम् ।
बहलस्य त्रिभागैकं नीत्वा तस्याग्रमूलयोः ॥ ८८ ॥

---

१. 'सां' ख. पाठः.

तदन्तरायतं गर्तं कुर्याद्दृजुतरं तु वा ।
स्वबाहल्यत्रिभागैकं व्यासं तस्य प्रकीर्तितम् ॥ ८९ ॥
निम्नता च तथा कार्या विन्यसेदर्गलं पुनः।
स्वाभ्यन्तरस्थकीलेन विद्धगर्तं यथा तथा ॥ ९० ॥
अरमासुषिरे सम्यग्वामाग्रं शिल्पवित्तमैः ।
अरमान्तां द्वारपादे दक्षिणेऽन्तर्गपार्श्वतः (?) ॥ ९१ ॥
कवाटबहलं नीत्वा तन्मध्ये विन्यसेद्बहिः ।
शूलवेधैर्दृढीकृत्य द्वारविन्यासमाचरेत् ॥ ९२ ॥
कवाटं मातरं वामे पुत्रिकां दक्षिणे तथा ।
ऊर्ध्वाधोभारयोः पद्भ्यां यथायोगं तथा न्यसेत् ॥ ९३ ॥
तत्कर्मकुशलैः सम्यग् घाटनोद्घाटनक्षमम् ।
एके सति कवाटे तु वामे पार्श्वे सुयोजयेत् ॥ ९४ ॥
गेहान्निर्गमतो ज्ञेयमत्र सव्यमसव्यकम् ।

ऊर्ध्वाधरभ्रमरकार्गलसन्धिपाल-
प्रक्षेपणीयवलयान्यपि पत्रकाणि ।
तिर्युङ्ग्युदक्षि पुलकार्तवकुड्मलानि
सश्रीमुखेन्दुशकला हि कवाटयोः स्युः ॥ ९५ ॥

लोहजा दारुजा वा (बा ? स्युर्बा)ह्याभ्यन्तरयष्टयः ॥ ९६ ॥
तासां (त्र्य ? त्रि)द्व्यङ्गुलं व्यासं तारार्धं वा घनं स्मृतम्।
कवाटयोरूर्ध्वगाश्च तिर्यग्गाश्च भवन्ति ताः ॥ ९७ ॥
त्रिपञ्चसप्तसंख्या वा नवरुद्रत्रयोदश।
दिग्गसप्तदशो + + यष्टयोऽत्र विशेषतः ॥ ९८ ॥

तथा कवाटे विन्यस्य संविध्य दृढतां नयेत् ।
प्रधानद्वारमेकं वा द्वयं वान्यं तु जालकम् ॥ ९९ ॥
घनद्वारं तु वा कुर्यात् प्रासादानां विशेषतः ।
अग्रयद्वारप्रततिमहिभिः संविभज्याशुगांशैः
क्लृप्तं व्यासं रचयतु घनद्वारमन्यत् त्रिदिक्स्थम् ।
द्विघ्नव्यासायतमधिदलद्विघ्नतत्या ततं वा
सूद्यद्योगप्रकटितकवाटादिकस्वागदीप्तम् ॥ १०० ॥
प्रासादमण्डपादीनां चतुर्दिक्षु विदिक्षु वा ॥ १०१ ॥
तयोर्मध्येऽन्तराले वा व्योमाभित्तिस्तु यत्र वै ।
तत्रैव कल्प्यते सम्यक् कम्पद्वारं विचक्षणैः ॥ १०२ ॥
भुवङ्गं च पतङ्गं च योगं प्राग्वद् घनं ततः ।
कृत्वा दृढतरं बद्ध्वा योजयेदन्तराङ्घ्रयः ॥ १०३ ॥
यथा नरैर्गजैर्वापि घाटनोद्घाटनक्षमम् ।

अथ सोपानम् ।

अग्रद्वारभुवङ्गमस्थलसमारब्धान्यधोधः क्रमात्
सोपानानि समा[२]नि सारशिलया चिन्वीत यावत्तलम् ।
अध्यर्धद्विगुणात्तदण्डविपुला निद्वारशाखाद्वयी
पार्श्वोयन्मकरास्यनिःसृतलतारुद्धोभयानाञ्चिचम् (?)॥
अग्रसोपानकरणं गुह्यागुह्यमिति द्विधा ॥ १०५ ॥
वेदाश्रं दीर्घवेदाश्रं वृत्तं चेति त्रियोनिकम् ।
चतुर्विधं प्रकारैः स्यात् त्रिखण्डं शङ्खमण्डलम् ॥ १०६ ॥

१. 'मः', २. 'न' ख. पाठः.

अर्धगोमूत्रकं चाथ वल्लीमण्डलमित्यपि ।
त्रिखण्डाकाररचितं यत्सोपानं त्रिखण्डकम् ॥ १०७ ॥

मूलादग्रं तु संक्षिप्तं क्रमाद्यच्छङ्खमण्डलम् ।
तद्विखण्डं च सोपानमर्धगोमूत्रसंज्ञकम् ॥ १०८ ॥

वृक्षारोहिलताकारं वल्लीमण्डलसंज्ञकम् ।
शयितं व्यासपादार्धत्रिपादोच्चानि वै पृथक् ॥ १०९ ॥

समखण्डानि कुर्वीत सोपानानि यथाक्रमम् ।
द्विदण्डं वा द्व्यर्धदण्डं भवेत्तद्बहलं ततः ॥ ११० ॥

त्रिपादं वाथ चार्धं वा हस्तनीव्रं विधीयते ।
स्थितस्य शयितस्यापि प्रवेशः स्याद्यथाबलम् ॥ १११ ॥

अश्व्यग्निवेदबाणर्तुस्वरदण्डान्तविस्तृतिः ।
सोपानानां भवेद् द्वित्रिचतुर्दण्डाश्च पादके ॥ ११२ ॥

अर्धचन्द्रसमाकारं तत्संस्थानं प्रकल्पयेत् ।
तच्च हस्तं घनं वा स्यात् त्रिपादं वास्य चोपरि ॥ ११३ ॥

स्थित्वा तले तले शस्तं प्रादक्षिण्याधिरोहणम् ।
तदप्ययुग्ममेव स्यात्प्रासादे मण्डपेऽपि वा ॥ ११४ ॥

शालादिषु च रङ्गेषु सोपानं प्रमुखं स्मृतम् ।
पार्श्वयोर्मुखसोपानादन्यत्र परिकल्पयेत् ॥ ११५ ॥

इति शिल्परत्ने द्वारलक्षणकथनं नाम
द्वाविंशोऽध्यायः ।

---

तथा कवाटे विन्यस्य संविध्य दृढतां नयेत् ।
प्रधानद्वारमेकं वा द्वयं वान्यं तु जालकम् ॥ ९९ ॥
घनद्वारं तु वा कुर्यात् प्रासादानां विशेषतः ।
अग्रद्वारप्रततिमहिभिः संविभज्याशुगांशैः
क्लृप्तं व्यासं रचयतु घनद्वारमन्यत् त्रिदिक्स्थम् ।
द्विघ्नव्यासायतमधिदलद्विघ्नतत्या ततं वा
सूत्रद्योगप्रकटितकवाटादिकस्वागदीप्तम् ॥ १०० ॥
प्रासादमण्डपादीनां चतुर्दिक्षु विदिक्षु वा ॥ १०१ ॥
तयोर्मध्येऽन्तराले वा व्योमाभित्तिस्तु यत्र वै ।
तत्रैव कल्प्यते सम्यक् कम्पद्वारं विचक्षणैः ॥ १०२ ॥
भुवङ्गं च पतङ्गं च योगं प्राग्वद् घनं ततः ।
कृत्वा दृढतरं बद्ध्वा योजयेदन्तराङ्घ्रयः ॥ १०३ ॥
यथा नरैर्गजैर्वापि घाटनोद्घाटनक्षमम् ।

अथ सोपानम् ।

अग्रद्वारभुवङ्गमस्थलसमारब्धान्यधोधः क्रमात्
सोपानानि समानि[२] सारशिलया चिन्वीत यावत्तलम् ।
अध्यर्धद्विगुणात्तदण्डविपुला निद्वारशाखाद्वयी
पार्श्वोन्मकरास्यनिःसृतलतारुद्धोभयानाञ्चिचम् (?)॥
अग्रसोपानकरणं गुह्यागुह्यमिति द्विधा ॥ १०५ ॥
वेदाश्रं दीर्घवेदाश्रं वृत्तं चेति त्रियोनिकम् ।
चतुर्विधं प्रकारैः स्यात् त्रिखण्डं शङ्खमण्डलम् ॥ १०६ ॥

१. 'मः', २. 'न' ख. पाठः.

अर्धगोमूत्रकं चाथ वल्लीमण्डलमित्यपि ।
त्रिखण्डाकारैरचितं यत्सोपानं त्रिखण्डकम् ॥ १०७ ॥

मूलादग्रं तु संक्षिप्तं क्रमाद्यच्छङ्खमण्डलम् ।
तद्विखण्डं च सोपानमर्धगोमूत्रसंज्ञकम् ॥ १०८ ॥

वृक्षारोहिलताकारं वल्लीमण्डलसंज्ञकम् ।
शयितं व्यासपादार्धत्रिपादोच्चानि वै पृथक् ॥ १०९ ॥

समखण्डानि कुर्वीत सोपानानि यथाक्रमम् ।
द्विदण्डं वा द्व्यर्धदण्डं भवेत्तद्बहलं ततः ॥ ११० ॥

त्रिपादं वाथ चार्धं वा हस्तनीव्रं विधीयते ।
स्थितस्य शयितस्यापि प्रवेशः स्याद्यथाबलम् ॥ १११ ॥

अश्व्यग्निवेदबाणर्तुस्वरदण्डान्तविस्तृतिः ।
सोपानानां भवेद् द्वित्रिचतुर्दण्डाश्च पादके ॥ ११२ ॥

अर्धचन्द्रसमाकारं तत्संस्थानं प्रकल्पयेत् ।
तच्च हस्तं घनं वा स्यात् त्रिपादं वास्य चोपरि ॥ ११३ ॥

स्थित्वा तले तले शस्तं प्रादक्षिण्याधिरोहणम् ।
तदप्ययुग्ममेव स्यात्प्रासादे मण्डपेऽपि वा ॥ ११४ ॥

शालादिषु च रङ्गेषु सोपानं प्रमुखं स्मृतम् ।
पार्श्वयोर्मुखसोपानादन्यत्र परिकल्पयेत् ॥ ११५ ॥

इति शिल्परत्ने द्वारलक्षणकथनं नाम
द्वाविंशोऽध्यायः ।

---

## अथ त्रयोविंशोऽध्यायः ।

### अथ तोरणानि ।

स्तम्भे दिङ्नन्दनागांशिनि झषमनलांशेन शेषेण पादौ
व्यासं स्तम्भार्धतोऽध्याशुगरसमितदण्डेन वा तत्र कुर्यात् ।
पत्राविद्धार्धचन्द्रात्म(क)मथ मकरास्यादिमत् पञ्चभुग्नं
कर्तव्यं तोरणं तद् वि(धि?विध)खगलसन्नक्रतुण्डोज्ज्वलं च ॥

प्रासादमध्ये कर्तव्यं मण्डपे भित्तिबाह्यके ।
द्वारासु वलभीमध्ये प्रमाणं भवनेऽपि वा ॥ २ ॥
तोरणं तत्सभादीनां द्वारे वा तल्पिऽथवा ।
पादोच्चे पञ्चषट्सप्तभागे वा तोरणाग्रकम् ॥ ३ ॥
शेषं पादोदयं ख्यातमेवं च त्रिविधं भवेत् ।
तोरणाग्रविशालं तु कुड्यस्तम्भोदयार्धकम् ॥ ४ ॥
कुड्यस्तम्भद्वयो(?)रन्तर्व्यासं वा तोरणाग्रकम् ।
स्वाङ्घ्रिवेत्रावसानं वा तस्माद् दण्डाधिकं तु वा ॥ ५ ॥
अर्धपादोक्तविधिना कारयेत् तोरणाङ्घ्रिकौ ।
उत्तरं कारयेत्पादस्योर्ध्वे चैव सवाजनम् ॥ ६ ॥
अब्जं क्षेपणकं पश्चात् तथैव क्षुद्रवाजनम् ।
तच्छिष्टं झषमानं तु तोरणावयवं स्मृतम् ॥ ७ ॥
तोरणाङ्घ्रिविशालं वा त्रिपादं वोत्तरोदयम् ।
तदर्धं वाजनोत्तुङ्गं तस्यार्धं दलमानकम् ॥ ८ ॥
दलार्धं क्षेपणं ख्यातं तस्यार्धं क्षुद्रवाजनम् ।
उत्सन्ध्यन्तनताग्रौ तु कुर्यान्मकरपृष्ठकौ ॥ ९ ॥

पत्राख्यं तोरणं त्वादौ द्वितीयं मकराभिधम् ।
तृतीयं चित्रसंज्ञं तु त्रिविधं तोरणाकृति ॥ १० ॥
अर्धचन्द्रसमाकारं पत्रजातिविराजितम ।
पत्रतोरणमाख्यातं तच्छूद्राणां गृहोचितम् ॥ ११ ॥
पञ्चवक्रसमायुक्तं पार्श्वयोर्मकरास्यकम् ।
मध्ये पूरिमसंयुक्तं नानाचित्रसमन्वितम् ॥ १२ ॥
नानालङ्कारसंयुक्तं यत्तन्मकरतोरणम् ।
देवद्विजनृपाणां तु शस्तं मकरतोरणम् ॥ १३ ॥
तदेव पार्श्वयोर्मध्यपूरिमस्य द्वयोरपि ।
नक्रतुण्डसमायुक्तं भूतविद्याधरान्वितम् ॥ १४ ॥
सिंहेभव्यालहंसाद्यैः बालस्रङ्मुक्तदामकैः ।
अन्यैश्च विविधैश्चित्रैः चित्रबन्धैश्च भूषितम् ॥ १५ ॥
चित्रतोरणमेवं तु विशा वेश्मसु पूजितम् ।
प्रस्तरोत्तरयोर्मध्ये योज्यान्येतानि सर्वशः ॥ १६ ॥
गुहासु तोरणानां तु यथार्हं प्रतिमां तथा ।
न्यस्येन्नारी नरादिर्वा यथाशोभविचित्रितम् ॥ १७ ॥
शिलादार्विष्टका मृत्स्ना द्रव्याणि स्युश्च तोरणे ।
कुड्यतोरणमेवं स्याद्यथाशोभविचित्रितम् ॥ १८ ॥
द्वारे द्वारे च कर्तव्यं गृहेषु द्वारतोरणम ।
द्वारतुल्योन्नतं व्यासं तोरणाङ्घ्र्यन्तरं ततः ॥ १९ ॥
उत्तरं वाजनं त्वब्जं क्षेपणं चाष्टमङ्गलम् ।
वलका पञ्चवक्राद्या प्रागुक्तविधिना भवेत् ॥ २० ॥

पत्राख्यं मकराख्यं वा चित्रतोरणमेव वा ।
मध्योर्ध्वे शूलसंयुक्तं पार्श्वयोश्च विशेषतः ॥ २१ ॥
लोहैर्दारुशिलाभिर्वा कर्तव्यं द्वारतोरणम् ।
वृत्तौ तोरणपादौ तु कर्तव्यौ वा यथारुचि ॥ २२ ॥
दिङ्नन्दवसुभागेन शिखावन्तौ स्वदीर्घतः ।
तदूर्ध्वे चोत्तरं कार्यं तदुच्चं दण्डमानकम् ॥ २३ ॥
दण्डत्रिपादमर्धं वा तद् वाजनमिदं विदुः ।
दलं तत् त्रिचतुर्भागं क्षेपणं तद्दलं भवेत् ॥ २४ ॥
सार्धदण्डं सपादं वा स्यादूर्ध्वे वलकोदयम् ।
तस्यां स्युर्मङ्गलान्यष्टौ तदूर्ध्वे त्रिशिखान्यपि ॥ २५ ॥
पञ्चवक्त्राणि तानि स्युः द्विदण्डोच्चानि मध्यतः ।
समं त्रिपादतुङ्गानि पार्श्वपत्राणि वा भवेत् ॥ २६ ॥
द्वित्रिवेदाङ्गुलं युक्त्या पत्राणां विस्तृतिः स्मृता ।
स्वोत्सेधाष्टनवांशं वा पत्राणां बहलं स्मृतम् ॥ २७ ॥
शिलादृढप्रवेशेन पादमूलेन निश्चलम् ।
तोरणानि युगहस्तमितानि क्ष्मोर्ध्वमर्धविततानि भवन्ति।
केतवः सुरगृहोत्तरदैर्घ्याः स्वोक्त + + + विचित्रपताकाः ॥
स्तम्भे स्तम्भे प्रकर्तव्यं सर्वेषां स्तम्भतोरणम् ॥ २९॥
पादोच्चं तु त्रिधा भङ्क्त्वा त्रिभागं चरणोदयम् ।
उत्तरं वाजनं त्वब्जं क्षेपणं क्षुद्रवाजनम् ॥ ३० ॥
तदूर्ध्वे झषबन्धं तु शेषभागेन कारयेत् ।
स्तम्भविस्तारमानेन झषविस्तारमाचरेत् ॥ ३१ ॥

दण्डपादादिमानेन तत्पादं बहलं विदुः ।
पूर्वोक्तक्रमतः कार्यं तोरणत्रयमत्र तु ॥ ३२ ॥

अथ मङ्गलानि ।

न्यस्येच्छङ्खारिकेतून् मुकुरवृषसृणीश्चामरं मत्स्ययुग्मं
दिक्श्रीशे व्याघ्रवत्सं मुकुरवृष + + द्वन्द्वकुम्भांस्त्रिधाम्नि ।
श्रीशेशे स्वस्तिकाब्जं दरघट(मु)कुरं सोत्पलावर्तवत्सं
वत्सं कुम्भं सभेरीमुकुरझषसृणीं शंखनाद्यौ(?) च चण्ड्याम् ॥

पूर्णघटध्वजवज्रौ स्वस्तिकशक्ती च चामरद्वितयम् ।
नागमयूर(क)मष्टौ स्कन्देऽपि करोतु मङ्गलान्यत्र ॥ ३४ ॥

दर्पणं पूर्णकुम्भं च वृषभं चामरद्वयम् ।
श्रीवत्सं स्वस्तिकं शङ्खं दीपं विघ्ने सशास्तरि ॥ ३५ ॥

पीठं खड्गं सुधाकुम्भं कौ + व्यादरपुस्तकान्(?) ।
काल्यां सह स्रक्ताम्बूलमिक्षुदण्डमिति क्रमात् ॥ ३६ ॥

दीपिका दर्पणं हेम धान्यपात्रं फलं दधि ।
पुस्तामङ्गलपात्राणि लौकिकं मङ्गलाष्टकम् ॥ ३७ ॥

इति शिल्परत्ने तोरणलक्षणं नाम
त्रयोविंशोऽध्यायः ।

---

## अथ चतुर्विंशोऽध्यायः ।

### अथ जालकम् ।

पादवर्गे गले चैव प्रासादानां तु जालकम् ।
प्रासादेषु महाशास्त्रप्यन्तरालस्य मध्यमे ॥ १ ॥
योजयेद् वेदिकोर्ध्वे तु सर्वेषामुत्तरादधः ।
चतुर्दण्डविशालं तदुत्तमं परिकीर्तितम् ॥ २ ॥
त्रिदण्डं वा द्विदण्डं वा मध्यमं त्वधमं क्रमात् ।
विस्तारसदृशोत्सेधादेकदण्डविवर्धनात् ॥ ३ ॥
विस्ताराद्विगुणं यावत् नाव्रद् वै जालकोदयम् ।
तारात्सपादं सार्धं वा यथायोग्यं समाचरेत् ॥ ४ ॥
अथवा जालकानां तु तुङ्गं वेत्युत्तरान्तरम् ।
उच्चत्रिपादं विपुलं त्रिभागोनमथापि वा ॥ ५ ॥
स्तम्भव्यासार्धमानं तु व्यासं जालाङ्घ्रिकम्पयोः ।
घनं तत्सममर्धं वा त्रिचतुर्भागमेव वा ॥ ६ ॥
युग्मपादसमायुक्तं युग्मकम्पसमन्वितम् ।
मध्ये स्तम्भं च कम्पं च वर्जे जालकमाचरेत् ॥ ७ ॥
युग्मायुग्माङ्घ्रिभिः कम्पैरुक्तं तुङ्गे च वैपुले ।
भित्तिमध्याद् बहिस्तस्य स्तम्भमध्यं न योगवत् ॥ ८ ॥
गवाक्षं कुञ्जराक्षं वा नन्द्यावर्तमृजुक्रियम् ।
पुष्पखण्डं सकर्णं च जालकं षड्विधं भवेत् ॥ ९ ॥
दीर्घाश्रं कर्णगं छिद्रं गवाक्षमिति कथ्यते ।
युगाश्रं कर्णगं छिद्रं कुञ्जराक्षमुदाहृतम् ॥ १० ॥

पञ्चसूत्रमयं छिद्रं प्रादक्षिण्यक्रमेण तु ।
नन्द्यावर्तस्य पुष्पाभं नन्द्यावर्तमिति स्मृतम् ॥ ११ ॥
आर्जवौ[1] स्तम्भकम्पौ चेज्जालकं तदृजुक्रियम् ।
पुष्पखण्डं सकर्णं च नन्द्यावर्तमिवाचरेत् ॥ १२ ॥
गुणिकाजालकं धाम विन्यासाकृतिरन्धकम् ।
स्वस्तिकं वर्धमानं च सर्वतोभद्रमित्यपि ॥ १३ ॥
कवाटयुगलं वैकं घाटनोद्घाटनक्षमम् ।
जालकाकृति चेत् तत्तु वातायनमिति स्मृतम् ॥ १४ ॥
लोहैर्द्रुमोपलैर्द्रव्यैर्वेष्टकाभिस्तु जालकम् ।

इति शिल्परत्ने जालकलक्षणं नाम
चतुर्विंशोऽध्यायः ।

---

## अथ पञ्चविंशोऽध्यायः ।

### अथ कूटकोष्ठादि ।

कुड्ये पङ्क्त्यादिभक्ते विदिशि विरचयेत् कूटमेकांशविस्ता-
रायामं विंशदीर्घां दिशिदिशि विशतामेकभागेन शालाम् ।
शालाकूटान्तराले चरणविरहितांशोन्मितां नासिकां तत्
पार्श्वद्वन्द्वे सजालं चरणविरहितांशादितः पञ्जरं च ॥ १ ॥
प्रासादादिविशाले तु दशभागकृते पुनः ।
नन्दाष्टसप्तभक्ते वा रुद्रभास्करभाजिते ॥ २ ॥
त्रयोदशहृते वाथ कूटमेकांशमानतः ।
शालामानं द्विभागं वा त्रिचतुर्भागमेव वा ॥ ३ ॥

१. 'वा स्तम्भकम्पा चे' क. पाठः

कोणेषु कूटं तुर्यश्रं दिक्षु शालायताश्रका ।
अधिष्ठानं स्तम्भवर्गं प्रस्तरं कर्णशीर्षकौ ॥ ४ ॥
स्तूपिकां च विशेषेण बिभ्रतौ कूटकोष्ठकौ ।
धाम्नोष्टां(शा)मितोऽथवा प्रतिमुखैः स्तूप्यन्तिमैस्संयुतः
प्रासादाकृतिकश्च कूट उदितो मध्यस्फुरन्नासिकः ।
शाला तत्समसूत्रगा मुखपटी शक्तिध्वजाद्युज्ज्वला
स्तूपित्रय्युपशोभिता परिलसन्नासा च सङ्कीर्तिता ॥ ५ ॥
एवं चादितले कुर्यादूर्ध्वभूमिषु तौ पुनः ॥ ६ ॥
अधिष्ठानं विना सर्वैरङ्गैः स्यातां समन्वितौ ।
ऊर्ध्वपादोदयं सप्तभागं कृत्वा विशेषतः ॥ ७ ॥
एकांशं वेदिकोत्सेधं सार्धांशं गलमानकम् ।
शीर्षकं तु गुणांशेन शेषं स्तूप्युदयं भवेत् ॥ ८ ॥
अथवा रुद्रसंभक्तेऽप्येकांशं वेदिकोन्नतम् ।
गुणांशं चरणोत्सेधं पादोनद्व्यंशमुत्तरम् ॥ ९ ॥
सपादांशं दलोत्सेधं पादोनाग्न्यंशकं शिरः ।
स्तूप्युत्सेधं सपादांशं क्रमशः परिकल्पयेत् ॥ १० ॥
एवं हि कूटकोष्ठौ द्वौ कल्पयेत् सर्वभूमिषु ।
कूटस्य तद्दिशालं वा त्रिपादं वार्धमेव वा ॥ ११ ॥
पादं सार्धं सपादं वा मानसूत्राद्बहिर्गतिः ।
दण्डं सार्धद्विदण्डं वा द्व्यर्धं वाथ त्रिदण्डकम् ॥ १२ ॥
मानस्याभ्यन्तरे वेशं विपदामास्पदं विदुः ।
यावत्कूटस्य निष्क्रान्तं तावच्छालाविनिर्गतिः ॥ १३ ॥

कूटव्यासत्रिभागैकं स्वनासेर्विस्तृतं भवेत् ।
तद्व्यासे त्रिचतुष्पञ्चभागे भागं तु नीप्रकम् ॥ १४ ॥
कर्णकूटकपोतात्तु नासिकानिर्गमं भवेत् ।
चतुर्दिक्षु चतुर्नासीसंयुतं कूटमुच्यते ॥ १५ ॥
एकस्तूपिसमायुक्तं नीप्रं वेशं विमानवत् ।
वेदाश्रं वसुकोणं वा वृत्ताभं वा गलं शिरः ॥ १६ ॥
नागराद्युचितं कल्प्यं कर्णकूटं विशेषतः ।
शालानां पार्श्वयोः कुर्याल्ललाटाख्यं तु नासिकम् ॥ १७ ॥
स्वस्तूप्यग्रसमं प्रोक्तं ललाटस्याग्रसीमकम् ।
शालादीर्घत्रिभागैकं मुखे नासिविशालकम् ॥ १८ ॥
गले वा कूटकोष्ठानां देवताद्यास्तु कल्पयेत् ।
कोणे मध्येऽन्तरे भित्तौ बाह्ये वा मानसूत्रतः ॥ १९ ॥
निर्गतैरुक्तमानेन कूटकोष्ठकपञ्जरैः ।
संयुक्तं सदनं कार्यं देवमानुषयोरपि ॥ २० ॥
कूटं कोष्ठं पञ्जरं (च) निवृत्तस्फुटितं तथा ।
गृहपिण्डेरधस्तात् स्युः तथा कुम्भलतादयः ॥ २१ ॥

इति शिल्परत्ने कूटकोष्ठविधानं नाम
पञ्चविंशोऽध्यायः ।

## अथ षड्विंशोऽध्यायः ।

### अथ पञ्जराणि ।

शालाकूटान्तरालं तद्धारान्तरमिति स्मृतम् ।
पञ्जरं तत्र कुर्वीत तदनेकविधं भवेत् ॥ १ ॥

दण्डैर्द्वित्रिचतुर्मितैर्मितवितानातानकं पञ्जरं
नासाद्युज्ज्वलितं च जालकमधो वेद्यूर्ध्वतः संस्थितम् ।
दण्डैर्द्व्यादियुगान्तिमैस्ततमतो दण्डर्द्धितं चायतं
कर्तव्यं द्विगुणान्तिमं सुषिरितं गोमूत्रिकादिक्रमात् ॥ २ ॥
पञ्जरं नासिकाकारं कूटकोष्ठाभमेव वा ।
हस्तपृष्ठविमानस्य शिखराकृति वा पुनः ॥ ३ ॥
द्वितलं त्रितलं चैव चतुस्तलमिति क्रमात् ।
हारान्तरत्रिभागं तु वेदं पञ्जरविस्तृतम् ॥ ४ ॥
पञ्चभागत्रिभागं वा त्रिभागद्वयमेव वा ।
सप्तभागत्रिभागं वा नवभागचतुष्ककम् ॥ ५ ॥
सप्तभागचतुर्भागं पञ्चभागद्विभागिकम् ।
एवं सप्तविधं प्रोक्तमथवा दण्डमानतः ॥ ६ ॥
द्वित्रिवेदमिदं वा स्यात्पञ्जराणां विशालकम् ।
यथावकाशं तत्पार्श्वे तत्तदन्तरमानतः ॥ ७ ॥
एवमेव प्रकर्तव्यं धीमता पञ्जरान्तरम् ।
व्यासतुल्यं त्रिपादं वाप्यर्धं वा भित्तिबाह्यतः ॥ ८ ॥
निष्क्रमं पञ्जरादीनां त्रिभागद्वयमेव वा ।
यत्स्तम्भबहलार्धं तत्सर्वभूषणनिष्क्रमम् ॥ ९ ॥
महानास्युदयं तावद् यावत्प्रत्युत्तरान्तरम् ।
तत् पञ्चषट्सप्तनागभागोनं पञ्जरोदयम् ॥ १० ॥

१. 'नः । सप्तभागत्रि' क. पाठः.

दृश्यतेऽत्र महानासिरधिष्ठानसमन्वितम् ।
आदिभूततले तत्र पञ्जरं प्रस्तरान्वितम् ॥ ११ ॥
एतेषां स्वस्वदीर्घार्धमादिपादोदयं स्मृतम् ।
एवमादितले कुर्यान्महानास्यविशेषतः ॥ १२ ॥
कूटकोष्ठाकृतिर्वा स्यात् पञ्जराकृतिरेव वा ।
आदिपादे पञ्जराणामर्धमण्डितयोस्ततः ॥ १३ ॥
पादयोरन्तरे कुर्याज्जालकं पूर्वमुक्तवत् ।
सिंहपञ्जरमादौ स्यात् तत्परं चार्धपञ्जरम् ॥ १४ ॥
निर्यूहपञ्जरं चैव कथितं लम्बनासिकम् ।
सिंहश्रोत्रं तथा खण्डनिर्यूहं झषपञ्जरम् ॥ १५ ॥
द्विदण्डादाचतुर्दण्डविस्तृतं जालकान्वितम् ।
चित्रपादद्वयोपेतं श्लिष्टप्राकारनीप्रकम् ॥ १६ ॥
षड्वर्गसहितं व्याससमनिर्गममेव वा ।
शक्तिध्वजयुतं चापि तथा सम्मुखपट्टिकम् ॥ १७ ॥
वेदिकाजालकस्तम्भयुक्तं(वा)सिंहपञ्जरम् ।
प्रासादनीप्रसंश्लिष्टनीप्रादर्ध(वि)निर्गमः ॥ १८ ॥
अधिष्ठानाङ्घ्रियुक्तं च प्रस्तरग्रीवसंयुतम् ।
तद्वत्साशिखरं शक्तिध्वजं समुखपट्टिकम् ॥ १९ ॥
वेदिकाजालकर्णाढ्यं सार्धपञ्जरसंज्ञितम् ।
प्राग्वच्छेषं च विस्तारपादसम्मितनिर्गमम् ॥ २० ॥
व्यासत्रिभागनिर्यूहं वृत्तस्फुटितकर्मवत् ।
पञ्जराख्यं स्मृतं चाथ स्वतुल्यशिखराग्रकम् ॥ २१ ॥

अष्टनीप्रांशकर्णं च कपोताद्यग्रसंयुतम् ।
निर्यूहपञ्जरं चैतल्लम्बनासिकमुच्यते ॥ २२ ॥
संश्लिष्टनीप्रकर्णाङ्घ्रिकृतनागदलादपि ।
+ + निर्यूहितं युक्तं सर्वाङ्गैर्लम्बनासिकम् ॥ २३ ॥
सिंहश्रोत्रशिखायुक्तमेतदेव तु पादवत् ।
नीप्रसंश्रितकर्णांशं सिंहश्रोत्रविधानकम्(?) ॥ २४ ॥
यत् स्वविस्तारपञ्चांशद्व्यंशनिर्गमसंयुतम् ।
नीडाधस्तात्कपोताद्यैः खण्डनिर्यूहकं युतम् ॥ २५ ॥
दण्डदण्डार्धनिष्क्रान्तनीप्राधस्तात् ततोपरि(?) ।
कर्णोर्ध्वेतोरणोपेतं कपोताद्यङ्गसंयुतम् ॥ २६ ॥
झषपञ्जरसंज्ञः स्यात्पञ्जरं त्वेवमष्टधा ।
पञ्जरोच्चे शरांशे वा सपादांशेन चाङ्घ्रिकम् ॥ २७ ॥
तदर्धं प्रस्तरोत्सेधं तत्समं कर्णमानकम् ।
शेषार्धे मञ्चकर्णाख्यौ शेषं शीर्षोदयं स्मृतम् ॥ २८ ॥
तत् स्तम्भार्धादधिष्ठानं शेषेणाप्युपपीठकम् ।
एवमुक्तं हि सर्वेषां पञ्जरावयवं बुधैः ॥ २९ ॥
अन्यथाह विशेषेण काश्यपः पञ्जरोदयम् ।
उपानाद्युत्तरान्तं तु नवभागविराजिते ॥ ३० ॥
उपपीठमथांशेन पक्षांशं तु धरातलम् ।
वेदांशं चरणायामं मञ्चमध्यर्धभागतः ॥ ३१ ॥

१. 'थ' क. पाठः.

अर्धांशं वेदिकामानं प्रत्यन्तं पञ्जरं स्मृतम् ।
तस्माद् गृहकपोतान्तं गलोदयमिवाचरेत् ॥ ३२ ॥
प्रासादस्य कपोतात्तु यथाशोभं विनिर्गतिः ।
तलान्तरेऽपि कर्तव्यं पादोच्चे तु नवांशिते ॥ ३३ ॥
गुणांशघनाभित्तिः स्याच्छत्रशीर्षं तु संयुतम् ।
पादायामं चतुर्भागमध्यर्धं प्रस्तरोदयम् ॥ ३४ ॥
अर्धांशं वेदिकामानं कपोतान्तं गलोदयम् ।
प्रतिवाजनसीमान्तं पञ्जरोदयमीरितम् ॥ ३५ ॥
गोपानाधारतः कल्प्यान् महाबलपराक्रमान् ।
हस्तपादद्वयोपेतान् दंष्ट्राकीर्णान् सटान्वितान् ॥ ३६ ॥
रौद्रदृष्टिसमायुक्तान् सिंहान्वा कुञ्जरानपि ।
हंसव्यालादिभूतान्वा गले वा धारयेद् दृढम् ॥ ३७ ॥
धृत्वा हस्तेन गोपानं यथाशोभं पदाथवा ।
अथ पादौ च हस्तौ च यथायुक्ति निधाय च ॥ ३८ ॥
गोपानं शिरसावाह्य रचयेद्वा मनोहरम् ।
अथवा पञ्जरोत्सेधादाद्यर्धं पादमुच्यते ॥ ३९ ॥
तच्छेषपञ्जरोत्सेधेऽप्यष्टादशविभाजिते ।
कुर्यादेकांशमानेन तूत्तरोच्चं विचक्षणः ॥ ४० ॥
वलभिं त्वेकभागेन द्विभागं तु कपोतकम् ।
प्रस्तरोत्सेधमध्यर्धांशं तत्समं वेदिकोदयम् ॥ ४१ ॥
सार्धद्विभागं पादोच्चं तत्पादं तूत्तरोदयम् ।
तत्समं वलभेरुच्चं पञ्चांशं शिखरोदयम् ॥ ४२ ॥

वेदांशं वा त्रिभागं वा कुर्यादौचित्यभेदतः ।
शेषं शक्तिध्वजोत्सेधं भवेद् द्वितलपञ्जरे ॥ ४३ ॥
अथवात्र त्रिभागार्धं सवलभ्युत्तरोदयम् ।
तत्समं तु कपोतोच्चं द्विभागं प्रस्तरोदयम् ॥ ४४ ॥
त्रिभागं स्यात् पादतुङ्गं सवलभ्युत्तरं द्वशम् ।
पञ्चांशं शिखरोत्सेधं शेषं शक्तिध्वजं स्मृतम् ॥ ४५ ॥
एवं वा पञ्जरं कुर्याद् द्वितलं सर्वमन्दिरे ।
षट्त्रिंशद्भाजिते तुङ्गे सवलभ्युत्तरं त्रिभिः ॥ ४६ ॥
तत्समं तु कपोतं स्याद् द्व्यर्धांशं प्रस्तरोदयम् ।
तत्समं वेदिकामानं चतुर्भिः पादमुच्यते ॥ ४७ ॥
अर्धाधिकद्विभागेन वलभ्यन्वितमुत्तरम् ।
तत्समं तु कपोतोच्चं तत्समं प्रस्तरोदयम् ॥ ४८ ॥
तत्समं चरणोत्सेधमुत्तरोत्सेधमंशतः ।
वलभ्युन्नतमेकांशं + + + शिखरोन्नतम् ॥ ४९ ॥
शक्तिध्वजं द्विभागं स्यादित्युक्तं त्रितलं बुधैः ।
चतुश्चत्वारिंशदंशे तुङ्गे पादावशेषिते ॥ ५० ॥
सवलभ्युत्तरं लोकैः कपोतं तत्समं स्मृतम् ।
त्रिभागं प्रतितुङ्गं स्यात् तत्समं वेदिकोदयम् ॥ ५१ ॥
चतुर्भिः पादमानं स्याद् द्वाभ्यां वलभिकोत्तरम् ।
तत्समं तत्कपोतोच्चं द्विभागं प्रस्तरोदयम् ॥ ५२ ॥
तत्समं वेदिकामानं पादोत्सेधं त्रिभागतः ।
वलभ्युत्तरमध्यर्धांशं तत्समं तु कपोतकम् ॥ ५३ ॥

प्रत्युत्सेधं द्विभागं स्याद् द्विभागं पादमानकम् ।
सवलभ्युत्तरं द्वाभ्यां षड्भागैः शिखरं स्मृतम् ॥ ५४ ॥
शेषं शक्तिध्वजं प्रोक्तं चतुस्तलमिदं स्मृतम् ।
अथाष्टचत्वारिंशद्भिः पञ्जरैरंशितोदये ॥ ५५ ॥
सवलभ्युत्तरं चैव कपोतं प्रस्तरं तथा ।
वेदिका च त्रित्रिभागैः पादोत्सेधं शरांशकम् ॥ ५६ ॥
सवलभ्युत्तरं तत्र कपोतं प्रतिवेदिके ।
पृथक् सार्धद्विभागेन पादोच्चं चतुरंशतः ॥ ५७ ॥
वलभ्युत्तरमानं च कपोतं प्रस्तरं तथा ।
पृथक् पृथग्विभागेन पादं वलभिकोत्तरम् ॥ ५८ ॥
पञ्चांशं शिखरोत्सेधं शेषं शक्तिध्वजोन्नतम् ।
एवं वा पञ्जरं कुर्याच्चतुस्तलविभूषितम् ॥ ५९ ॥
चतुर्मुखं तु तुर्यश्रं पञ्जरं शिखरोदयम् ।
तदायामत्रिभागैकं भद्रनासिविशालकम् ॥ ६० ॥
गले गले बालनासी तद्व्यासाग्र्यंशविस्तृता ।
तारात्पञ्चांशविस्तारा बालनासिद्वयेऽथवा ॥ ६१ ॥
तत्समं पादहीनं वाप्यर्धं वा नासिनिर्गमम् ।
दामैर्मुकुलवल्लीभिर्भूषयेच्छिखरं तथा ॥ ६२ ॥
पादोपरि कपोतेषु नासिकापत्रचित्रिता ।
वेद्यूर्ध्वे पञ्जराधस्ताज्जालकं पूर्वमुक्तवत् ॥ ६३ ॥
नानाचित्रविचित्रं वा भवेत्कुम्भलतान्वितम् ।
नानापत्रमृगाकीर्णं नाटकोक्तकथान्वितम् ॥ ६४ ॥

अथ तत्पार्श्वतः कार्यं चरणं त्वर्धमण्डितम् ।
दण्डं सपादं सार्धं वा सत्रिपादं द्विदण्डकम् ॥ ६५ ॥
द्विदण्डं वा प्रकर्तव्यं तज्जालकविशालकम् ।
उपपीठोक्तमार्गेण कारयेदुपपीठकम् ॥ ६६ ॥
तथाचङ्गं तथाकारं पादं पादोक्तमार्गतः ।
तथोत्तरं च वलभिस्तत्तद्भूषान्वितं स्मृतम् ॥ ६७ ॥
अन्तरप्रस्तरयुतं गलकं बालनासिकम् ।
तिलपुष्पसमाकारं शीर्षं तिलकपञ्जरम् ॥ ६८ ॥
ग्रीवायां निर्मिते तार्क्ष्ये गरुडाभिधपञ्जरम् ।
कपोते वा गले वा स्यात्कपिश्चेत्कपिपञ्जरम् ॥ ६९ ॥
प्रत्यूर्ध्वे सिंहपादश्चेत्सिंहपञ्जरनामकम् ।
कपोते शिखरे कर्णे नानाचित्रविभूषितम् ॥ ७० ॥
चित्रपञ्जरमित्युक्तं शिल्पशास्त्रविशारदैः ।
महाप्रासादयोग्यं स्यात् त्रिचतुर्भूमिपञ्जरम् ॥ ७१ ॥
महागोपुरमुख्ये वा नैव क्षुद्रविमानके ।
अन्यदल्पविमानेषु योज्यं तदनुसारतः ॥ ७२ ॥

इति शिल्परत्ने पञ्जरकरणविधानं नाम
षड्विंशोऽध्यायः ।

---

## अथ सप्तविंशोऽध्यायः ।

### अथ वृत्तस्फुटितकम् ।

षडङ्गुलं समारभ्य द्व्यङ्गुलविवर्धनात् ।
(तावत्)कलाश्रधिर्यावद् व्यासः स्यात् षड्विधोऽस्य तु ।
विस्तारार्धे तु तन्नीव्रं त्र्यंशं वा त्रिभागिकम् ।
वृत्ताकारं समाद्यन्तं तोरणाङ्घ्रिवदायतम् ॥ २ ॥
सकलं तत्तदूर्ध्वे तु शुकनास्यन्वितं तु वा ।
कर्णकूटाकृतिर्वाथ वृत्ताकारं प्रकल्पयेत् ॥ ३ ॥
स्तम्भोत्सेधयुगांशे तु द्विभागं चरणायतम् ।
कन्धरोदयमेकांशं शुकनास्यंशतो भवेत् ॥ ४ ॥
तदेव कूटमानं तु तत्तद्योग्यवशान्नयेत् ।

इति शिल्परत्ने वृत्तस्फुटितकलक्षणं नाम
सप्तविंशोऽध्यायः ।

---

## अथ अष्टाविंशोऽध्यायः ।

### अथ कुम्भलता ।

स्तम्भान्तरे महति धामनि पादविस्ता-
रोच्चाधिपादततपद्मगकुम्भसंस्थाम् ।
पादायतां घटमुखोद्गतपत्रचित्र-
मूलां प्रकल्पयतु कुम्भलतां समन्तात् ॥ १ ॥
कुड्यस्तम्भस्य विस्ताराद् द्विगुणं चार्धमुच्छ्रयम् ।
अथ पद्मासनं कुर्यात् तत्तदूर्ध्वे यथारुचि ॥ २ ॥

---

१. 'यु' ख. पाठः.

विनिर्गतोन्नतिं कुम्भं पार्श्वयोस्तस्य तन्मुखात् ।
पत्रैर्विनिर्गतैश्चित्रं यथाशोभं नियोजयेत् ॥ ३ ॥

तदूर्ध्वे कुड्यचरणसमपादाम्बुजासनम् ।
अखण्डकलशं कुर्यात् पद्मं कुम्भलतान्वितम् ॥ ४ ॥

तस्याः कुम्भलतासंज्ञा सैव खण्डोपरि क्रमात् ।
नक्रतोरणविन्यस्ता स्तम्भकुम्भलता मता ॥ ५ ॥

कुम्भपद्मासनयुता सैव सर्वलतान्विता ।
पद्मकुम्भलता नाम विज्ञेयानिलता मता (?) ॥ ६ ॥

स्तम्भमूले तु वेचूर्ध्वे पद्मासनं प्रकल्पयेत् ।
पद्मोच्चं वसुधाभज्य कम्पमंशेन कारयेत् ॥ ७ ॥

अधःपद्मं गुणांशेन गलमेकांशमानतः ।
ऊर्ध्वपद्मं द्विभागेन कम्पमेकेन कल्पयेत् ॥ ८ ॥

तदूर्ध्वे कुम्भतुङ्गं तु पद्मस्योच्चसमं भवेत् ।
तत्तुङ्गद्विगुणा कुम्भलता वा ह्यन्यथाथवा ॥ ९ ॥

तदेवोत्सन्धिकोर्ध्वे तु वीरकाण्डं प्रकल्पयेत् ।
बोधिकारहितं यत्तत्स्तम्भाधारलता स्मृता ॥ १० ॥

स्तम्भतोरणवन्मूर्ध्नि कर्तव्या कुम्भगा लता ।

इति शिल्परत्ने कुम्भलताविधानं नाम

अष्टाविंशोऽध्यायः ।

## अथ एकोनत्रिंशोऽध्यायः ।

### अथोत्तराणि ।

खण्डोत्तरं चरणविस्तृतितुल्यविस्ता-
रोत्सेधमुत्तममतश्चरणोनतीव्रम् ।
पत्रोत्तरं दलविहीनघनं कनिष्ठं
रूपोत्तरं घनततीविपरीततो वा ॥ १ ॥

स्तम्भमूलसमं तारं तारस्यार्धं घनं विदुः ।
सप्तांशे शृगभागं(?) वा रुद्रांशे सप्तभागिकम् ॥ २ ॥
एवं पञ्चविधं प्रोक्तं रूपोत्तरघनं बुधैः ।
षड्भक्ते घनमानेनाप्यग्निभागं घनं विदुः ॥ ३ ॥
कल्पवाजनमेकांशं महापट्टं द्विभागिकम् ।
सप्तांशे भूमिभागं वा क्षुद्रवाजनकोच्छ्रयम् ॥ ४ ॥
द्विभागमूर्ध्वपट्टं स्या(दों ? द्दोमां)शं घनमेव च ।
रुद्रांशे बाणभागं वा घनं वाजनमर्णवैः ॥ ५ ॥
अल्पवाजनमक्ष्यंशमथवाष्टविभाजिते ।
घनं वेदांशमिन्द्वंशं क्षुद्रवाजनमिष्यते ॥ ६ ॥
महापट्टं त्रिभिर्भागैर्व्युत्क्रमणे च दृश्यते ।

उत्सेधे विशिखांशिते द्विनयतो रूपोत्तरे वाजनं
षड्भक्तेऽल्पमिलांशतो द्वितयतो वा स्यान्महावाजनम् ।
एतन्निर्गमनं निजांशविहितं न्यस्येदुपर्युत्तर-
स्यैतत्तीव्रसमुच्छ्रयोच्छ्रयदलांशव्याततां पट्टिकाम् ॥ ७ ॥
स्तम्भान्तरेषु युग्मानि पत्राणि परिवेष्टयेत् ॥ ८ ॥

पत्रोत्तरे विशेषो + तथा युग्मानि वा पुनः ।
भारतारसमव्यासं यववृद्ध्या तथा पुनः ॥ ९ ॥
यवहीनेन वा कुर्याद् विस्ताराधावसानकम् ।
विस्तारसप्तभागैकं नागरन्ध्रदशांशकैः ॥ १० ॥
रुद्रभास्करविश्वांशैरिन्द्रभागेऽर्धभागकैः ।
एकांशं तस्य पत्रस्य घनमानमुदाहृतम् ॥ ११ ॥
नानापुष्पलतादाममुखैः पत्रं विभूषयेत् ।
सुमुहूर्ते सुनक्षत्रे शुक्लपक्षे शुभोदये ॥ १२ ॥
स्नातोऽनुलिप्तः स्थपतिः द्रव्यैः सन्तोष्य तक्षकान् ।
गणेश्वरस्य संपूज्य पुण्याहं कारयेद् द्विजैः ॥ १३ ॥
विप्रेभ्यो दक्षिणां कृत्वा मौहूर्तिकवराय वै ।
मुहूर्तदक्षिणां कृत्वा वासोमिश्छन्नमुत्तरम् ॥ १४ ॥
कुड्येषु स्थापयेत् सम्यगथवाङ्घ्रिषु विन्यसेत् ।
तत्रापि बोधिकोर्ध्वे वा वीरकाण्डे तु वा न्यसेत् ॥ १५ ॥
स्वस्तिसूक्तादिकं सर्वं जपयित्वा द्विजोत्तमैः ।
संयोज्यान्यान्युत्तराणि परितश्चूलिका न्यसेत् ॥ १६ ॥
भारार्धं चूलिकोत्सेधं त्रिपादं वा समाचरेत् ।
उत्सेधार्धं घनं तस्य त्रिपादं त्र्यंशमेव वा ॥ १७ ॥
उत्तरस्योपरिष्टात् तु लुपास्थानेषु वा न्यसेत् ।
पादानि चूलिकाव्याससमोच्चानि ततः क्रमात् ॥ १८ ॥
एकैकाङ्गुलवृद्ध्या तु कारयेद् वा तदुन्नतम् ।
चूलिकाघनमानेन तुल्यं तेषां घनं स्मृतम् ॥ १९ ॥

तद्घनं द्विगुणं वाथ त्रिगुणं वा चतुर्गुणम्।
पादानां विस्तृतं तेषां मूर्ध्नि वा चूलिकां न्यसेत्॥ २०॥
उत्तरोपरि वा न्यस्येत् कीलवेधैर्दृढीकृतम्।
उत्तरोपरि वा न्यस्येदथवा वाजनोपरि॥ २१॥
कपोलोपरि वा न्यासं तुलानां प्रस्तरेऽथवा।
उत्तरोपरि विन्यस्य फलकं नेत्रसंज्ञकम्॥ २२॥
तदूर्ध्वे वा तुलान्यासं यथाशोभं प्रकल्पयेत्।
वलभेश्च कपोतस्य घनमुत्तरतः समम्॥ २३॥
तत्तद्वाचितभूषाढ्यं कपोतं मुष्टिबन्धवत्।
एकदण्डं द्विदण्डं वा त्रिदण्डं प्रस्तरोच्छ्रयम्॥ २४॥
कूटकोष्ठादिकं सर्वं कारयेत् प्रस्तरे बुधः।
नानाचित्रकथां वात्र वल्लीपुष्पादिकं तु वा(?)॥ २५॥
नेत्राख्यफलकाव्यासप्रस्तरोत्सेधतः समम्।
त्रिपादं वाथवार्धं वा लताभिर्मण्डयेच्च तम्॥ २६॥
तुलानां विस्तृतं कुर्यादुत्तरेण समादिकम्।
अलिन्दतारसदृशं तुलाङ्घ्र्युच्छ्रयमिष्यते॥ २७॥
आरूढबाह्युत्तरयोरलिन्दं मध्यमुच्यते।
आरूढोत्तरविस्तारमुत्तरेण समादिकम्॥ २८॥
न्यूनं तस्य तु पर्यन्तं चतुष्षट्यङ्गुलादिभिः।
आरूढपादतुङ्गेन तदुत्तरविशालकम्॥ २९॥
करोतु वा घनादीनि सर्वं पूर्ववदाचरेत्।
युग्मा वाथ तुलाः कार्या अयुग्माः पङ्क्तयः स्मृताः॥ ३०॥

युग्मायुग्मास्तुलाः कार्या देवागारे विशेषतः।

एकाङ्घ्र्यूनादिदण्डोच्छ्रितमुपरिनिधायोत्तरे वाजनं प्राक्
तिर्यग्दण्डोच्छ्रिताङ्घ्र्यूनितविततितुलास्तासु वंशानुवृत्त्या।
स्वार्धाक्रान्ता जयन्तीस्तदुपरि सुसमीकृत्य कृत्वानुमार्गं
निश्छिद्रं छादयेत् स्वोचितघनफलकाप्रस्तरेणोर्ध्वभागम्।

द्वारार्धतः कदलिकाकरणे + गर्भ-
कुड्यं क्रमान्मुकुलयेदथवा शिलाद्यैः।
द्वारोर्ध्वतोऽष्टपुटचारुलसत्तरङ्गं
गर्भार्धतुङ्गमपिधानशिलाभिरामम्॥ ३२१॥

इति शिल्परत्ने उत्तरलक्षणं नाम
एकोनत्रिंशोऽध्यायः

## अथ त्रिंशोऽध्यायः।

### अथ प्रस्तरम्।

स्तम्भोत्सेधार्धमानं वा मासूरोत्सेधमात्रकम्।
प्रस्तरस्योच्छ्रयं कुर्यात् पादस्योर्ध्वे विशेषतः॥ १॥

स्तम्भार्धादिसमुच्छ्रये प्रकृतिभक्ते प्रस्तरे वातिधृ-
त्यंशे चोत्तरवाजने त्रिशशिभिर्भूतालिरंशैस्त्रिभिः।
क्ष्माद्रीन्दुक्षितिभिः सवाजनकपोतालिङ्गपट्यन्तरी-
स्त्र्यंकांशैः प्रतिवाजने प्रतिकपोते क्ष्मांशहान्यावरे॥ २

त्रिंशद्भागविभक्तमत्र विधिवत् कृत्वोन्नतं प्रस्तरे
कुर्याच्चोत्तरमत्र पञ्चभिरतस्तेषां त्रिभागं घनम् ।
द्वाभ्यां वाजनमत्र पञ्चवलभौ भूयः कपोतं दिशा
तस्मिन् स्यान्मुखपट्टिका द्वितयतो गोपानयुक्तं तु तत्॥
आलिङ्गं त्रिभिरंशतो द्वितयतः कार्यं च तद्वाजनं
भूयोंऽशैः प्रतिमत्र वह्निभिरुभाभ्यामेव तत्पट्टिकाम् ।
प्रत्यग्रे मकरास्यकं विरचयेद् व्यालेभसिंहादिभिः
कार्यं चारुकपोतकं प्रमथकैरारूढमत्युज्ज्वलम् ॥ ४ ॥
उत्सेधमेवमाख्यातं तेषां नीप्रमथोच्यते।
स्तम्भात् तु बोधिकानीप्रं तस्मादुत्तरनिर्गतिः॥ ५ ॥
ततस्तद्वाजनस्यापि नीप्रं तत्तुङ्गमानतः ।
वाजनाद् वलभेर्नीप्रं वलभ्युच्चसमं भवेत् ॥ ६ ॥
अर्धं वाथ त्रिपादं वा प्राग्वत् तद्वाजनस्य तु ।
वाजनात् तु कपोतस्य नीप्रं चालम्बनं समः ॥ ७ ॥
तत्कपोतं सगोपानं गोपानरहितं तु वा ।
पादबाह्यसमं प्रोक्तं तत्कपोतस्य नीप्रकम् ॥ ८ ॥
आलिङ्गं प्रस्तरसमं वेशं तस्माद् गलस्य तु ।
प्रत्युत्सेधसमं वाथ कन्धरात् प्रतिनिर्गतिः ॥ ९ ॥
समं त्रिपादमर्धं वा चोत्तराग्रस्य नीप्रकम् ।
वलभिं भूतहंसाद्यैर्भूषयेदुत्तरोपरि ॥ १० ॥
नानापत्रलताद्यैस्तु कपोते कर्णपालिकाम् ।
कुर्यात् सिंहमहेभाद्यैः प्रतिं संभूषयेत् पुनः ॥ ११ ॥

प्रत्यग्रं कुररीबन्धं पूर्वोक्तक्रममाचरेत् ।

अथान्यथा —

दण्डमर्धं त्रिपादं वा तूत्तरोच्चं त्रिधा भवेत् ॥ १२ ॥

वलभिर्दण्डमाना स्याद् वाजनं पूर्ववद् भवेत् ।
कपोतोच्चं द्विदण्डार्धलम्बं तस्यार्धदण्डकम् ॥ १३ ॥

तत्समं निर्गमं सार्धदण्डं वापि द्विदण्डकम् ।
शेषं प्रस्तरमानं तु पञ्चभागे कृते पुनः ॥ १४ ॥

आलिङ्गमंशं कण्ठं च द्व्येकाभ्यां प्रतिवाजने ।

अथान्यथा —

उत्तरोच्च + रामांशे भागेनैकेन पट्टिकाम् ॥ १५ ॥
तदूर्ध्वांशद्वयेनापि भावयेत् पद्मपट्टिकाम् ।
अत ऊर्ध्वं प्रस्तरं स्यात् पादार्धादुन्नतं यथा ॥ १६ ॥

सप्तांशे प्रस्तरोत्सेधे भागाभ्यां तु कपोतकम् ।
पट्टिका चापि भागेन कर्णमेकांशतो भवेत् ॥ १७ ॥

द्वाभ्यां तु कम्पकं कुर्याच्छिष्टेनाप्यूर्ध्वपट्टिकाम् ।
कपोतस्य विशेषेण तूपानसमनिर्गमम् ॥ १८ ॥

प्रकारान्तरं —

दण्डत्रिपादमुत्सेधमुत्तरोपरिवाजनम् ।
हंसभूतावलिर्वापि निद्रावा(?) दण्डकोच्छ्रया ॥ १९ ॥
निद्रावकर्णपट्टी(?) च तुलापादश्च यद्वतः ।
वाजनोर्ध्वे कपोतालिं कुर्यादध्यर्धदण्डतः ॥ २० ॥

द्वित्रिदण्डैस्तु वा तुङ्गमाकारं भिन्नवेणुवत् ।
साग्रपट्टं तदुपरि कर्णमध्यमपालिके ॥ १२ ॥
अर्धत्रिपाददण्डेन कपोतालम्बनं पुनः ।
उत्तरान्तं वाजनान्तं नवमात्रं तु वा भवेत् ॥ १३ ॥
अथवा पोतिकाधस्तात् कपोतस्यात्तलम्बनम् ।
तदन्ते वा तुलाकर्णस्ततः स्यादर्धदण्डतः ॥ १४ ॥
त्रिपाददण्डबाहल्यं कम्पमानं विधीयते ।
शिलामये शिलाभिः स्यादाच्छाद्यं वाजनोपरि ॥ १५ ॥
सौवर्णे राजतैः शौल्बैः लौष्टैराच्छाद्य मार्त्तिकैः ।
अथ गोपाननीप्रार्धाद् दण्डिकानियमो भवेत् ॥ १६ ॥
दण्डिकाव्यासबाहल्यौ स्तम्भव्यासार्धमाचरेत् ।
चतुरायतसंस्थानमनुमार्गेण बन्धयेत् ॥ १७ ॥
दण्डिकाभारबहलमधोमण्डिः सनालिकम् ।
दण्डैः समं मुष्टिबन्धं तत् पृथग् वाजनोपरि ॥ १८ ॥
अथ तद् व्यालसिंहेभभूतनाटकभूषितम् ।
कपोतोपरि भूतालिः पादात्पादविनिर्गता ॥ १९ ॥
पादव्याससमा वार्धत्रिपादसदृशोच्छ्रया ।
प्रतिर्निवेश्या तत्तुङ्गत्रिचतुर्भागानिर्गमम् ॥ २० ॥
वाजनं स्यात् समतलमुन्नतं तु न शोभनम् ।

इति शिल्परत्ने प्रस्तरविधानं नाम
त्रिंशोऽध्यायः ।

---

## अथ एकत्रिंशोऽध्यायः ।

### अथ गललक्षणम् ।

ऊर्ध्वभूमेः पादतुङ्गं गलमानमुदाहृतम् ।
आयङ्गोन्नततुल्यं वा गलोन्नतमिहोच्यते ॥ १ ॥
तदुच्चात् त्रिचतुष्पञ्चभागैकं वेदिकोन्नतम् ।
शेषं गलोदयं ख्यातमशेषं वा गलोदयम् ॥ २ ॥
त्रिचतुष्पञ्चहस्तं वा गलव्यासमुदाहृतम् ।
अङ्घ्रेर्वेचङ्घ्रिवेशं यत् तद्वद्वा गलवेशनम् ॥ ३ ॥
त्रिपादं वा तदर्धं वा वेचङ्घ्रेर्गलवेशनम् ।
वेदाश्रं नागरकर्णे वस्वश्रं द्राविडे गलम् ॥ ४ ॥
वृत्तं तु वेसरे हर्म्ये शीर्षानुकूलमाचरेत् ।
दिशि भद्रसमायुक्तं नासानुकूलकाङ्घ्रिकम् ॥ ५ ॥
तदधः पादतुङ्गाद् वा नालोन्मानं प्रकल्पयेत् ।
पूर्वाङ्घ्रितः परं पादं यथापूर्वं समीरितम् ॥ ६ ॥
भानुद्व्यंशे गलोत्सेधे कुलांशं तद्गलोदयम् ।
उत्तरोच्चं गुणांशं तु वाजनोच्चं शिवांशकम् ॥ ७ ॥
अग्न्यंशं वलभेस्तुङ्गं व्योमांशं वाजनोदयम् ।
अथवा गलशिष्टांशे भानुभागकृते पुनः ॥ ८ ॥
उत्तरोच्चं गुणांशं तु शिवांशं वाजनोदयम् ।
तदूर्ध्वे मुष्टिबन्धोच्चमध्यर्धांशमुदाहृतम् ॥ ९ ॥
मृणाल्युच्चं गुणांशं तु पट्टिकां त्वेकभागतः ।
सार्धांशं दण्डिकोच्चं तु व्योमांशं पद्मपट्टिका ॥ १० ॥

गोपानं कल्पयेदूर्ध्वमवरोहणमेव वा ।
गलादुत्तरनिष्क्रान्तं तदुच्चदलतो भवेत् ॥ ११ ॥
वाजनादेस्तु निष्क्रान्तं यथापूर्वं स्वतुङ्गतः ।

**अथान्यथा —**

वेदिकाद्विगुणोऽध्यर्धसमो वा स्याद् गलोदयः ।
भित्तिविस्तारनामांशं वेदिकावेशनं भवेत् ॥ १२ ॥
ग्रीवावेशं तदूर्ध्वं स्याच्छरांशोनोऽपि तत्समः ।
मृणालिकावक्रपादभूतहंसमृगैरपि ॥ १३ ॥
व्यालनाट्यकथाभिर्वा गलभूषणमाचरेत् ।
कूटकोष्ठमहानासिपञ्जराद्यैरथापि वा ॥ १४ ॥

**अथ प्रकारान्तरं —**

ग्रीवायामुपरि त्रिदण्डपरिशिष्टांशे चतुर्भाजिते
मूलांशं च तृतीयकं च दशधा तुर्यं च कृत्वांशकम् ।
आलिङ्गाह्वयपट्टिकां त्रिभिरुभाभ्यामन्तरीं पञ्चभिः
स्वर्ध्यंशाहितवाजनां प्रतिमधः पङ्क्त्यंशके कल्पयेत् ॥

शालाकूटगवाक्षकादिरुचिरां भित्तिं द्वितीये तृती-
येंऽशे पञ्चभिरुत्तरं च वलभिं भूतद्विपाद्युज्ज्वला ।
तुर्येंऽशे दशभिर्द्विकल्समुखपट्ट्याढ्यं कपोतं ततः
सस्वाङ्घ्रिं गृहपिण्डिमूर्ध्वनिहितैर्दण्डैस्त्रिभिः कल्पयेत् ॥

तले द्वितीये विदिशासु कूटान् दिशासु शालाश्च तदन्तरेषु ।
नासीर्द्विशो वा रचयेद् दिशासु मूर्तीरजायाः शिखरेषु नासीः ॥

तद्भेदः—

बाह्योत्तरेण रहिते विगतोर्ध्वकूटे
ग्रीवान्तरे निजगजांशकृशाग्रकुड्ये ।
न्यस्योत्तरं न्यसतु तत्र लुपास्तुलास्थ-
पादेषु लग्नशिरसश्चरणार्धलम्बाः ॥ १८ ॥

इति शिल्परत्ने गलविन्यासलक्षणं नाम
एकत्रिंशोऽध्यायः।

## अथ द्वात्रिंशोऽध्यायः ।

### अथ शिखरम् ।

तारात् पञ्चद्विभागं वा नवसप्तांशमेव वा ।
त्रयोदशांशरुद्रांशं विमानानां विभागतः ॥ १ ॥
अत्यष्टितिथिभागं वा वेदरामांशकं तु वा ।
षट्पञ्चांशं तु वा नागसप्तभागमथापि वा ॥ २ ॥
विस्तारार्धं तु वा कुर्यादष्टधा शिखरोदयम् ।
वैदेहं मागधं चापि कौरवं कौसलं तथा ॥ ३ ॥
शौरसेनं च गान्धारं क्रमेणावन्तिकं स्मृतम् ।
व्यासार्धं शिखरोत्सेधं कि(क्षि)न्न्यूनं च मानुषम् ॥ ४ ॥
व्यासार्धं तुङ्गमाद्यं तु तत्तुङ्गे सप्तभाजिते ।
एकैकांशविवृद्ध्याष्टौ भवन्ति शिखरोदयाः ॥ ५ ॥
व्यामिश्रकं कलिङ्गं च तथा काशिकमेव च ।
वैराटं द्राविडं चैव बाल्हिकं कौल्लकं पुनः ॥ ६ ॥

तथा शौण्डिकमित्येते व्यामिश्रादिलुपोदयाः।
एते दैवविमानानां पाषण्डाश्रमिणां तथा ॥ ७ ॥
प्रतिलोमकुलानां तु विशेषेण शुभावहाः।
अथवान्यप्रकारेण भवन्ति शिखरोदयाः ॥ ८ ॥
दण्डिकोत्तरविस्तारात् पञ्चभागद्विभागिकम्।
सप्तभागत्रिभागं च नवांशे चतुरंशकम् ॥ ९ ॥
रुद्रभागकृतेष्वंशं विश्वभक्ते षडंशकम्।
तिथ्यंशे सप्तभागं वात्यष्ट्यंशे वा गजांशकम् ॥ १० ॥
व्यासार्धं वा क्रमेणैव कुर्याच्छिखरकोदयम्।
एते पञ्चालवैदेहमागधाः कौरवाः पुनः ॥ ११ ॥
कौसल्यशौरसेनौ च गान्धारावन्तिकौ क्रमात्।
अथ तारार्धमुत्सेधं शिखरस्य नवांशिते ॥ १२ ॥
एकद्वित्रिचतुष्पञ्चषट्सप्तांशविवर्धनात्।
क्रमेण शिखरोच्चानां नामान्यपि च सप्तधा ॥ १३ ॥
कालिङ्गकाश्यवाराटकौल्लकानि च शौण्डिकम्।
काश्मीरं चैव गाङ्गेयौ शिखराणि पृथग् विदुः ॥ १४ ॥
एतानि देवधिष्ण्यानां विस्तारार्धं नृणां गृहे।
अन्यथा शिखरोत्सेधं वदन्ति च महत्तराः ॥ १५ ॥
ऊर्ध्वभूस्तम्भतुङ्गस्य सदृशं शिखरोदयम्।
आद्यङ्गोन्नतमानं वा शिखरस्योदयं स्मृतम् ॥ १६ ॥
अल्पानां तु विमानानां तारात् त्र्यंशं शिरोदयम्।
विमानोच्छ्रयषट्पञ्चभागं वा शिखरोदयम् ॥ ५७ ॥

शिखरे कपोतनिष्कान्तं वेदितारसमं विदुः ।
वलभीबाह्यतो दण्डमध्यर्धं वा द्विदण्डकम् ॥ ५८ ॥

सार्धद्विदण्डं वा नीप्रं लम्बनं च कपोतके ।
तन्नीप्रसदृशं तुङ्गं वलभेर्वाजनोर्ध्वतः ॥ ५९ ॥

शिरस्ताद्दक्कपोतोर्ध्वे कारयेत् स्तूपिकादधः ।
शिखरे मध्यविस्तारं कपोताद् बाह्यतः समम् ॥ २० ॥

वलभीबाह्यतुल्यं वा तदर्धं वा त्रिपादकम् ।
चतुरश्रं च वृत्तं च षडश्राष्टाश्रमेव च ॥ २१ ॥

द्वादशाश्रं षोडशाश्रं पद्मकुड्मलसन्निभम् ।
तथा कमलसङ्काशं दीर्घवृत्तं च कोमलम् ॥ २२ ॥

अष्टाद्यष्टाष्टधाराणि हर्म्यादीनां शिरांसि च ।
षडाद्यं षष्टिकोणं च समन्तं शिखराकृति ॥ २३ ॥

शिखरस्य तु विस्तारे बाणाग्न्यंशं तु विस्तृतम् ।
शिखरे बलिकस्थानं भुतांशे तु शिरोदये ॥ २४ ॥

नीप्रतो वेदभागान्ते बलिकस्थानमाचरेत् ।
त्रिचतुःपञ्चमात्रं वा बलिमण्डलविस्तृतम् ॥ २५ ॥

तत्तारस्य चतुर्थांशं तन्मण्डलघनं भवेत् ।
युग्मं वायुग्मसंख्यं वा परितः कल्पयेत् समम् ॥ २६ ॥

बलिकानामधश्चोर्ध्वे वेत्रं तस्यार्धमानतः ।
बलिमण्डलविस्तारपञ्चभागद्विभागिकम् ॥ २७ ॥

शिरःपद्मविशालं तु तदुच्चं शिखरावधिम्।

+ + + + + + + + + + + + + पञ्चद्विसप्तत्रिकं

त्वष्टाश्रस्य नवाम्बुधिश्च शिखरे त्वेकादशात् पञ्च वा।

वृत्तानां त्वथ षट्त्रयोदशतिदा(?)तिथ्यंशसप्तांशकैः

शालायाश्च निजार्धमेव नवतिः सप्तादशांशे भवेत्(?)॥

इति शिल्परत्ने शिखरलक्षणं नाम
द्वात्रिंशोऽध्यायः।

---

अथ त्रयस्त्रिंशोऽध्यायः।

अथ लुपालक्षणम्।

कुर्यादुत्तरपट्टिकोपरि लुपाः कूटप्रविष्टाग्रकाः

स्वस्वांशाहितकर्णसूत्रकमितान्मध्यादिकर्णावधि।

स्तम्भोच्चे शरशैलनन्दनयनैर्भक्ते चतुर्थोत्तरात्

तासां स्यादवलम्बनं नयनवह्नयब्ध्युर्वरांशैः क्रमात्॥ १॥

अधोमूलाश्चोर्ध्वकेशा लुपाः सर्वाः प्रकीर्तिताः।

स्तम्भोत्सेधत्रिभागैकं लुपालम्बं करोतु वा॥ २॥

चतुरङ्गुलतो विभजेद् विकृतिलुपापङ्क्तिसंख्यकार्धेन।

एकैकांशविहीनेष्वखिलभुजेष्वब्धिमात्रकं कोटिः॥ ३॥

तत्कर्णोन्मितभुजया कोट्या पूर्वोक्तया + चयः।

तेन लुपाया दैर्घ्यं षड्गुणितेनाश्विहस्तविततिगृहे॥ ४॥

तस्मान्न्यूनाधिकस्तारगृहे नीप्रलम्बनेऽथोह्य।

पुतद्वदत्तरकूटादीनां घने चानुपाततः कार्यम्(?)॥ ५॥

उत्तरस्यानुरूपेण तासां तारमुदीरितम् ।
तत्समं पादहीनं वा वस्वंशोनाधिकेन वा ॥ ६ ॥
पादाधिकं वा वस्वंशत्रितयाधिकमेव च ।
विस्ताराधाधिकं वा स्याद् विस्तारं प्रकृतेरिदम् ॥ ७ ॥
प्रकृतिव्याससदृशं तुर्यश्रं कल्पयेद् बुधः ।
तत्र पूर्वोक्तवत् कार्याः कर्णरेखाः क्रमेण तु ॥ ८ ॥
विकृतिलुपानां तारं तत्तत्कर्णसमं विदुः ।
स्वव्यासाब्ध्यंशसहितं लुपामूलविशालकम् ॥ ९ ॥
पुच्छार्धं यत्र संयोज्यं नीप्रपट्टया विचक्षणैः ।
सार्धाङ्गुलं तु बाहल्यं लुपानां यववृद्धितः ॥ १० ॥
यावद्दत्वङ्गुलं तावत् कुर्यादौचित्यभेदतः ।
स्वस्वघनार्धेष्वेवं प्रङ्क्तिदलैः संविभज्यवलयस्य ।
गमनं युक्त्या कुर्यादेकैकांशोनितेन कोट्यादौ ॥ ११ ॥
अथवान्यप्रकारेण लुपादीर्घं विदुर्बुधाः ॥ १२ ॥
वंशोच्चमुत्तरयत्तत्स्वेनैव (?) गुणयेद् बुधः ।
यथायथानि स्थानानि लुपानां वंशलम्बतः ॥ १३ ॥
प्रत्येकं स्वगुणीकृत्य वंशस्योच्चकृतौ युतम् ।
तन्मूलं तु लुपामानमेवं सर्वत्र कल्पयेत् ॥ १४ ॥
उत्तरानीप्रलम्बं यत् तेन तत्रापि कल्पयेत् ।
ताराधं स्वगुणीकृत्य वंशोच्चकृतिसंयुतम् ॥ १५ ॥
चूलिकामध्यगात् कीलाद् यद्द्रीद्र(?)लुपान्तरम् ।
तदपि स्वगुणीकृत्य तारार्धोच्चकृतौ युतम् ॥ १६ ॥

तत्तदिष्टलुपायाममिष्टयोगात् प्रकल्पयेत् ।
लुपाफलकमादाय तक्षितं तक्षकोत्तमैः ॥ १७ ॥
ध्वजसूत्रं तु कर्तव्यमामूलाग्रं तु पार्श्वयोः ।
सूत्रादभ्यन्तरं कार्यं चूलिकाव्यासमानतः ॥ १८ ॥
द्व्यङ्गुलान्तरं कार्यं (तस्य ?) ध्वजसूत्रस्य पार्श्वयोः ।
पार्श्वसूत्रे प्रकर्तव्ये पुनस्तन्मानसाधनैः ॥ १९ ॥
मात्वाङ्कयेच्चूलिकोर्ध्वे वलयस्थानकेषु च ।
मूलाग्रयोर्विशेषेण नितरां मानवित्तमः ॥ २० ॥
उत्तरान्नीप्रपर्यन्तलुपायामे(षु?तु) भाजिते ।
कुर्यान्नेत्रांशतो नीप्राद् वलयं शेषमूर्ध्वतः ॥ २१ ॥
त्रिधा विभक्ते कर्तव्ये वलयद्वितयं समम् ।
उत्तरादूर्ध्ववंशान्तं पञ्चधा विभजेत् पुनः ॥ २२ ॥
दक्षिणोत्तरयोर्मध्यं द्विभागं शेषमूर्ध्वतः ।
सप्तांशे नयनांशेन वलयोत्तरमध्यमम् ॥ २३ ॥
वलयद्वितये कार्ये वलयाद्वद्य(?)मेव च ।
वलयादूर्ध्ववंशान्तं त्रिभिरेवं करोतु वा ॥ २४ ॥
तत्तच्छोभानुरूपेण युक्त्या वा कारयेदिदम् ।
पूर्वोक्तविन्दुस्थानेषु चतुरङ्गुलमात्रकम् ॥ २५ ॥
तुर्यश्रं कल्पयेत् तत्र कर्णसूत्रं समालिखेत् ।
तत्सूत्रं शिल्पशास्त्रज्ञैर्वितानमिति कथ्यते ॥ २६ ॥
तस्य तिर्यग्गतं सूत्रं लम्बसूत्रं विदुर्बुधाः ।
करोतु सुषिरं तत्र वलयस्थानके बुधः ॥ २७ ॥

चतुर्दशयवं प्रोक्तं प्रायेण वलयं बुधैः ।
त्र्यङ्गुलं द्व्यर्धमात्रं वा द्व्यङ्गुलं सार्धमात्रकम् ॥ २८ ॥
तुल्यमुत्तरबाहल्यैश्चूलिकाया विशालकम् ।
तदर्धं तद्घनं कुर्यात् तत्त्रिभागद्वयं तु वा ॥ २९ ॥
घनमानत्रिभागैकं तत्कीलानां घनं विदुः ।
तच्चतुर्गुणमेव स्या(द् वाऽ्या) समग्रे ततः क्रमात् ॥
अष्टांशहीनमूले तद्व्यासं युक्त्या तदायतम् ।
उत्तरोपरि विन्यस्येच्चूलिकामथवा पुनः ॥ ३१ ॥
तत्पादं तत्र विन्यस्य युक्त्या तस्यां च चूलिकाम् ।
चूलिकावलयादीनां घनमानप्रमाणतः ॥ ३२ ॥
तुर्यश्रं कल्पयेत् क्षेत्रं पूर्ववत् फलकादिषु ।
पूर्ववत् कर्णसूत्राणि लुपापङ्क्तिवशाल्लिखेत् ॥ ३३ ॥
तत्तत्कर्णगतं मानमायामं सुषिरादिषु ।
तत्तल्लुपागतं कुर्याच्चूलिकावलयादिषु ॥ ३४ ॥
आयतं सुषिरस्यास्य नोर्ध्वाधस्तिर्यगेव हि ।
ऊर्ध्वाधस्सुषिरायामं वलयादिघनैः समम् ॥ ३६ ॥
लुपानां प्रकृतीभागे ह्यन्तर्गमनमीरितम् ।
तत्तद्गमनमानेन चूलीवलययोस्तथा ॥ ३५ ॥
कोटिभागे तु गमनं लम्बसूत्राद् बहिर्गतम् ।
आयताश्रं तु सुषिरं विकृतीनां ततो भवेत् ॥ ३७ ॥
तुर्यश्रं सुषिरं कुर्याद् वलयस्य प्रमाणतः ।
प्रकृतीनां लुपानां वै पुनस्तत्र समाचरेत् ॥ ३८ ॥

छिन्द्यान्मूलं लुपानां वै तद्धितानाख्यसूत्रतः ।
तस्माद् वलयलम्बान्तं वलयाद् वलयान्तरम् ॥ ३९ ॥
वलयोत्तरयोर्मध्यं वलयाद् वंशकावधि ।
छिन्द्यात् परशुना सम्यग् यथानिम्नं तु तक्षयेत् ॥ ४० ॥
कुक्षिनिम्नं च सर्वासां सज्यचापमिवाचरेत् ।
अर्धचन्द्राभमित्येके नीप्रान्ते तु विशेषतः ॥ ४१ ॥
कुक्षिनिम्नं प्रकर्तव्यं जङ्घापृष्ठसमं नृणाम् ।
वलयस्थानपर्वाणि लुपाविस्तारमानतः ॥ ४२ ॥
उत्तरद्विगुणं वा स्यादुत्तरोपान्तपर्वकम् ।
ऊर्ध्वबिन्दुगताल्लम्बसूत्रात् कूटार्धमानकम् ॥ ४३ ॥
नीत्वा तत्र शिखां कृत्वा छिन्द्यात् परशुना ततः ।
व्यासं सङ्कोचयेत् तत्र सज्यचापाभमेव तु ॥ ४४ ॥
उत्तानधनुषा तुल्यं पुच्छभागोर्ध्वमाचरेत् ।
लुपाग्रुपान्तरं नीप्रस्थाने स्यात् करमात्रकम् ॥ ४५ ॥
प्रायेण कथितः सद्भिः किञ्चिन्न्यूनाधिकं तु वा ।
वलयत्रिगुणविस्तारं कुर्याद् वलयबन्धकम् ॥ ४६ ॥
नानापत्रविचित्राद्यैर्भूषयेत् तद् यथारुचि ।
उत्तरार्धं त्रिपादं वा वंशस्योच्छ्रयमिष्यते ॥ ४७ ॥
उच्छ्रयेण तथा तारमुच्छ्रयेण समं तु वा ।
तुलायां न्यस्य वंशाङ्घ्रिं वंशं वा तत्र विन्यसेत् ॥ ४८ ॥
वंशस्य तारद्विगुणमध्यर्धं वास्य विस्तृतम् ।
तत्पादं वंशपादस्य घनं त्रिभागं वा समाचरेत् (?) ॥ ४९ ॥

लुपाग्रशिखयैवैनं दृढीकृत्य न्यसेत् तु वा ।
लुपानां चूलिकायोगे सन्धिः स्यादर्धपाणिकम् ॥ ५० ॥
लुपाग्रवंशयोगे तु वेणुपर्वाभिधं भवेत् ।
विकृतिलुपानां तासां सकलबहलसदृशतरा परिधिः ।
(परिधिः) कूटस्येष्टा सा कथिता शिल्पशास्त्रज्ञैः ॥ ५१ ॥
उत्तरतारसमानं कुर्याद् वा तत्र कूटविष्कम्भम् ।
सार्धं वाथ सपादं द्विगुणं वा कारयेद् यथाशोभम् ॥ ५२ ॥
यावन्त्यो विकृतिलुपास्तावन्त्यश्राणि कूटस्य ।
वृत्तं वापि समस्तं तक्षणकुशलैस्तु कारयेन्मतिमान् ॥ ५३ ॥
व्यासाध्यर्धं दीर्घं पादोनाक्षं तथैव नेत्रं वा ।
धुत्तूरप्रसवाभं कूटं कुर्यादधोमूलम् ॥ ५४ ॥
पट्टं किञ्चित् कुर्यात् कूटस्य लुपावितानतारसमम् ।
उत्तरवन्नैवोर्ध्वे पट्टमधश्चोर्ध्वतो निषनम् ॥ ५५ ॥
वंशस्यापि च पट्टं कुर्यादेवं घनं चैव ।
अग्रमधः कूटस्य कार्यं पद्मालये लुपानां च ॥ ५६ ॥
अष्टांशकादिकृशविस्तृतिपावकांश-
तीव्रा च नीप्रफलकोत्तरतो लुपानाम् ।
द्वित्राङ्गुलादिविततं चतुरश्ररूपं
कर्तव्यमाशु वलयं च निजानुरूपम् ॥ ५७ ॥
उत्तरस्य तु विष्कम्भे दशभागकृते पुनः ॥ ५८ ॥
अष्टांशे नीप्रपङ्क्तिः स्यात् सप्तसप्तार्धकैरपि ।
बहलं तत्त्रिभागैकविस्तारेऽष्टांशके कृते ॥ ५९ ॥

उर्ध्वपट्टत्रिभागं वा मध्यं तच्चतुरंशकम्।
क्षुद्रवाजनमेकांशमथ पञ्चांशके कृते ॥ ६० ॥
व्यासे वाजनमश्विभ्यां त्रिभागं घनमुच्यते।
विस्तारस्य त्रिभागैकं कर्णे नीप्रवितानतः ॥ ६१ ॥
पञ्चभागद्विभागं वा सप्तभागत्रिभागिकम्।
धूलीनिरोधनं कर्म सम्यक् कृत्वा गुरुः स्वयम् ॥ ६२ ॥
विन्यस्यन् नीप्रफलका लुपापुच्छेषु वेधयेत्।
प्रत्येकं नीप्रकोणेषु पारावतमथ न्यसेत् ॥ ६३ ॥
नीप्रपट्टद्वयपिधानार्थे लोष्टानां लक्षणाय च।
शाकाद्युत्तमदारुक्लृप्तफलकैरेताः समन्ताल्लुपाः
संछाद्योपरि तत्पिधानफलकां कृत्वोल्लसत्कीलकाम्।
वास्त्वाधारसमोन्नतां प्रथिततत्पाथोजकुम्भादिकां
विन्यस्येन्नवपुण्डरीकमुकुलाग्रामूर्ध्वतः स्तूपिकाम् ॥ ६४ ॥
यवात्यष्टिमितव्यासा पट्टिका कथिता बुधैः ॥ ६५ ॥
यवानां नवकं प्रोक्तं बहलं शिल्पकोविदैः।
बहलात् पादहीनं तु तासामन्तरमीरितम् ॥ ६६ ॥
तलोच्छ्र्यार्धमुदितमपिधानस्य विस्तृतम्।
पादं वाप्यथ पादोनं कीर्तितं तदवाङ्मुखम् ॥ ६७ ॥
पादुकोच्चेन बहलं सममर्धं त्रिपादकम्।
वेश्मपुंसः शिरोदेशमपिधानमितीरितम् ॥ ६८ ॥

इति शिल्परत्ने लुपालक्षणं नाम
त्रयस्त्रिंशोऽध्यायः।

## अथ चतुस्त्रिंशोऽध्यायः ।

### अथ मूर्धेष्टका ।

शिखरस्योदयार्धान्ते महानास्यवसानके ।
शक्तिध्वजावसाने वा मूर्ध्नेष्टकां तु विन्यसेत् ॥ १ ॥
शिलाभिस्तु शिलाहर्म्ये त्विष्टका त्विष्टकालये ।
दारुणा दारुहर्म्ये तु कर्तव्यं शिवमिच्छता ॥ २ ॥
मिश्रद्रव्यकृते हर्म्ये यद्द्रव्ये(ण) कृतं शिरः ।
तद्द्रव्येणैव कर्तव्यं मूर्ध्नेष्टकाविधिं तथा ॥ ३ ॥
इष्टकाव्याससमायामं घनं चाद्येष्टकामिव ।
लोहजं दारुजं वाथ स्तूपीदण्डं तु कारयेत् ॥ ४ ॥
असनं खादिरं वाथ तिन्त्रिणीसारमेव वा ।
मधूकं पद्मरज्जूकं षडेते तरवः स्मृताः ॥ ५ ॥
पूर्वोक्तान्येव लोहानि अथ मिश्रितमेव वा ।
ऊर्ध्वभूम्यङ्घ्रिविस्तारं स्तूपीदण्डायतं भवेत् ॥ ६ ॥
मूर्ध्नेशैलोपरिष्टात् तु स्तूप्यन्तं वा तदायतम् ।
ऊर्ध्वभूम्यङ्घ्रिविस्तारं तस्य मूलविशालकम् ॥ ७ ॥
तस्याग्रमङ्गुलं व्यासं मूलादग्रं क्रमात् कृशम् ।
तुङ्गे गुणांशे त्वेकांशं मूले वेदाश्रमाचरेत् ॥ ८ ॥
वस्वश्रं मध्यमग्रे तु वृत्ताकारं प्रकल्पयेत् ।
चतुरश्रोपरिष्टात् तु सर्वं वृत्तमथापि वा ॥ ९ ॥
कर्तव्यं तस्य मूले तु शिखिपादेन योजनम् ।
दण्डमूलसमं व्यासं स्वव्यासत्रिगुणायतम् ॥ १० ॥

तद्व्यासार्धघनोपेतं पूर्वाग्रं चोत्तराग्रकम् ।
बद्ध्वा तन्मध्यगे छिद्रे दण्डलम्बं सुयोजयेत् ॥ ११ ॥
दण्डमूलत्रिभागैकं शिखाव्यासमुदाहृतम् ।
शिखिपादं घनं तस्य दीर्घं स्याद् योजयेद् दृढम् ॥ १२ ॥
दण्डमूलाग्रयोः पट्टं योजयेल्लोहजं बुधः ।
कर्णिकायां न्यसेद् दण्डं शक्रादिषु महादिशि ॥ १३ ॥
चत्वारश्चेष्टकाः स्थाप्या शुभेऽहनि विशेषतः ।
आचार्यो मण्डपे सर्वमधिवास्य यथाविधि ॥ १४ ॥
रात्रौ जागरणं कृत्वा प्रातस्स्नानादिकृद् बुधः ।
नववस्त्राङ्गुलीयाद्यैरनुलेपैरलङ्कृतः ॥ १५ ॥
यज्ञसूत्रं विनान्यैस्तु भूषितेनाथ शिल्पिना ।
सह प्रासादशिखरमारुह्य च गुरुः स्वयम् ॥ १६ ॥
स्थिरराश्युदये वा स्यादुदयात्मोदयेऽपि वा ।
जीवशुक्रसमायुक्ते तयोर्दृष्टेऽथवा पुनः ॥ १७ ॥
कुर्यान्मूर्ध्नेष्टकान्यासं स्थाने पूर्वमुदाहृते ।
पूर्वादिदिक्षु चत्वारश्चेष्टकाः प्रथमं न्यसेत् ॥ १८ ॥
क्रमेण ब्रह्मविष्ण्वीशसदाशिवकृतेश्वराः ।
तर्जनीवेधमात्रं तु शिखरे सुषिरं कुरु ॥ १९ ॥
नवरत्नं तु विन्यस्य स्तूपीदण्डं तदूर्ध्वतः ।
प्रतिष्ठाप्य यथान्यायं कलशैरभिषिञ्चयेत् ॥ २० ॥
ततः शिल्पिवरः सम्यग् बद्धोदैः सुधयापि च ।
गुलेदैर्वा दृढीकृत्य निश्चलत्वं समाचरेत् ॥ २१ ॥

यजमानो हृष्टमना दक्षिणाद्यैः स्वशक्तितः ।
आचार्यं शिल्पिनं चान्यान् कर्मकारांश्च तोषयेत् ॥ २२ ॥
अथ दारुमये कुर्याच्छुल्वाद्यैश्छादनं ततः ।
वर्षातपादिवारण(तु?क)ल्यैः शुल्बादिकल्पितैः ॥ २३ ॥
फलकैः सारेष्टकाभिर्वा विमानशिखरं ततः ।
(सुपिदधातु ?) मृल्लोष्टैर्वाथ शिखरं सम्यगाच्छादयेत् क्रमात् ॥
प्रथमं नीप्रलोष्टानि त्र्यावृत्त्या च तदूर्ध्वतः ।
एकावृत्त्या पुनस्तत्र तुर्यश्राणि च विन्यसेत् ॥ २५ ॥
कूरलोष्टानि विन्यस्य चतुरश्रं पुनः क्रमात् ।
द्व्यश्राणि विन्यसेत् पश्चादेवमेव पुनः पुनः ॥ २६ ॥
नीप्रपट्टया अपिधानं विन्यसेत् प्रतिपट्टिकम् ।
कोणपारावतं नीप्रकोणेष्वथ च विन्यसेत् ॥ २७ ॥
पश्चात् तदूर्ध्वतः कोणलोष्टानि च प्रविन्यसेत् ।
तत्पार्श्वयोः पुटाख्या+न्यूर्ध्वलोष्टानि चोर्ध्वतः ॥ २८ ॥
गर्तकोणे तदाख्यानि कीलादीनि यथोचितम् ।
यथाबुद्धि यथाशोभं शिखरं विदधातु च ॥ २९ ॥
अथ शैल्बे राजतैर्वा सौवर्णैर्वा सुरालये ।
शिखराच्छादनं कुर्यात् फलकैरर्थसौलभात् ॥ ३० ॥
यवमात्रं घनं तेषां तदर्धं वा समाचरेत् ।
अष्टाङ्गुलादिविस्तारं फलकानां स्मृतं बुधैः ॥ ३१ ॥
प्रादक्षिण्येन विन्यस्य गूढकीलैर्दृढीकृतम् ॥ ३१½ ॥

इति शिल्परत्ने मूर्धेष्टकाविन्यासं नाम
चतुस्त्रिंशोऽध्यायः ।

---

१. 'त् । तत्पार्श्व' क. पाठः.

## अथ पञ्चत्रिंशोऽध्यायः।

### अथ नासिकालक्षणम्।

ललाटनासिका ख्याता शिखरे तारतः समा।
शिखरस्य तु विस्तारे त्रिचतुष्पञ्चभाजिते ॥ १ ॥
नासिकातारमेकांशमुत्तमाधममध्यमम्।
महानासीति विख्याता त्रिविधा स्याद् विमानके ॥ २ ॥
समं त्रिपादमर्धं वा निष्क्रमं तद्विशालतः।
विस्तारत्रिचतुर्थांशहीनशेषं तदुच्छ्रयम् ॥ ३ ॥
गलादुपरि तत्तुङ्गं नासिकानां प्रकीर्तितम्।
शक्तिध्वजं तदूर्ध्वे तु नासीतुङ्गार्धमेव वा ॥ ४ ॥
त्रिपादं वा त्रिभागैकभागं वा (स्यात्) तदुच्छ्रयम्।
तच्छक्तिध्वजतुङ्गे तु गुणभागविभाजिते ॥ ५ ॥
भागं वा किंपिरीवक्त्रं तच्छेषं तु गलोदयम्।
[1]दण्डं वा गलमानं स्याद् द्विदण्डं किंपिरीमुखम् ॥ ६ ॥
एवं शक्तिध्वजं कार्यं तदूर्ध्वे त्रिशिखं न्यसेत्।
पत्रं वा विन्यसेत् तत्र किंपिरीमुखमानतः ॥ ७ ॥
विस्तारमुख्यपट्टयास्तु दण्डं वाध्यर्धमेव वा।
तीव्रं तदष्टभागं वा कर्णकोचं तु तत्ततिः ॥ ८ ॥
वल्लीमण्डलचित्राद्यैर्भूषयेन्मुखपट्टिकाम्।
मुखपट्टयवशेषं तदवगाढमुदाहृतम् ॥ ९ ॥
अवगाढाख्यभागं तु मृणालादिविभूषितम्।
शूलाभं वा स्थलाभं वा सव्यालं वा सनाटकम् ॥ १० ॥

---

१. 'फि' ख. पाठः.

मालिकाकूटकोष्ठादिमण्डितं वा विमानवत् ।
चित्रपत्राख्यमकरतोरणाढ्यमथापि वा ॥ ११ ॥
तोरणाभ्यन्तरे लक्ष्मीः साभिषेकाम्बुजासना ।
अन्यैर्नानालङ्करणैर्नासीगाढं तु मण्डयेत् ॥ १२ ॥
ललाटिकावगाढं तु तथैव च विभूषयेत् ।
ललाटीवंशसंसिद्धं मध्ये शूलं दृढीकृतम् ॥ १३ ॥
स्तम्भविस्तारविस्तीर्णा विधातव्या कुमारिका ।
तत्कर्णपत्रमपरं मण्डितश्चावलम्बितम् ॥ १४ ॥
अकर्णकेन चार्धं वा यथायुक्ति यथारुचि ।
अन्तर्गतलुपां तिर्यगग्रबन्धमनिष्टदम् ॥ १५ ॥
भद्राभिधमहानासी सर्वाङ्गपदसंयुता ।
उत्तरं वाजनं चाब्जं क्षेपणं नासिकादधः ॥ १६ ॥
यथायुक्ति भवन्त्येते कर्णोत्तरादिमानतः ।
ऊर्ध्वभूस्तम्भतारं वा त्रिपादं वार्धमेव वा ॥ १७ ॥
नासिकास्तम्भविस्तारं कर्णोत्तरान्तमुन्नतम् ।
वस्वश्रं वाथ वृत्तं वा युगाश्रं वा तदाकृति ॥ १८ ॥
नासिकायास्तु विस्ताराद् द्विदण्डं वा त्रिदण्डकम् ।
हीनं शेषं विशालं स्यात् पादयोर्बाह्यसीमकम् ॥ १९ ॥
नास्यङ्घ्र्यभ्यन्तरे तत्र दिङ्मूर्तिस्थापनं कुरु ।

अथ क्षुद्रनासी —

सार्धदण्डं द्विदण्डं वा त्रिदण्डं वाथ विस्तृतम् ॥ २० ॥

तच्चारत्रिचतुर्थांशहीनशेषं तदुन्नतम् ।
कपोतालिङ्गनात् क्षुद्रनासिकोच्चं तु कल्पयेत् ॥ २१ ॥
प्रतिवाजनसीमान्तं तस्य शक्तिध्वजोन्नतम् ।
तदुच्चं तु त्रिधाभज्य कर्णमेकांशमुन्नतम् ॥ २२ ॥
एकांशं किंपिरीवक्रं तारं युक्तिवशान्नयेत् ।
शक्तिध्वजस्य विपुलं कारयेद् दण्डमानतः ॥ २३ ॥
तत्कर्णं तावदेवोच्चं सपादं सार्धमेव वा ।
नासिकार्धेन गाढं स्याद् गाढार्धं मुखपट्टिकाम् ॥ २४ ॥
गर्भार्धसमविस्तारा महानासी चतुर्दिशम् ।
तदर्धो वा त्रिपादो वा तासां निर्गम ईरितः ॥ २५ ॥
क्षुद्रनासी तदर्धा + वारांशेन विकारयेत् ।
पादं प्रतिकपोतेषु कल्पयेत् स्वस्तिकाकृति ॥ २६ ॥
मध्ये च कूटशालानां पञ्जरे नाल्पनासिका ।
शिखरे भद्रनासा स्याल्ललाटाख्या तु नासिका ॥ २७ ॥
शालाग्रयोस्तु कर्तव्ये नासिकालक्षणं त्विदम् ।

अथ मूर्तिन्यासः —

नन्दीश्वरमहाकालौ पूर्वद्वारोपरि न्यसेत् ॥ २८ ॥
दक्षिणे दक्षिणामूर्तिं पश्चिमेलिं+सम्भवम् ।
विष्णुं वाप्यथ कौबेर्यां दुर्गां ब्रह्माणमेव वा ॥ २९ ॥
दक्षिणे च गणेशानमुत्तरे नृत्तरूपिणम् ।
क्षेत्रेशं चैव चैशान्यां द्वारे तद्द्वारपालकान् ॥ ३० ॥

ईशावतारक्रीडादिकथारूपाणि चैव हि ।
मूलभित्तौ च परितो विन्यसेदुक्तलक्षणम् ॥ ३१ ॥
अथोपरितले प्राच्यामिन्द्रं षण्मुखमेव वा ।
दक्षिणे दक्षिणामूर्तिं वीरभद्रमथापि वा ॥ ३२ ॥
पश्चिमे नरसिंहं वाप्युत्तरे चार्थदं विधिम् ।
द्वितीये तु तले चैवं तृतीये तु मरुद्गणान् ॥ ३३ ॥
तलेतलेऽमरान् सिद्धान् यक्षविद्याधरानपि ।
गन्धर्वाप्सरसो वाथ नागेन्द्रांस्तु मुनीश्वरान् ॥ ३४ ॥
प्रमथांश्चैव दैत्यादीन् षोडशप्रतिमांस्तथा ।
कर्णादधः प्रतेरूर्ध्वे कोणे के + स्ववाहनम् ॥ ३५ ॥
कर्णादधश्चान्यतले प्राकारादौ च विन्यसेत् ॥ ३५½ ॥

इति शिल्परत्ने नासिकालक्षणं नाम
पञ्चत्रिंशोऽध्यायः ।

---

## अथ षट्त्रिंशोऽध्यायः ।

अथ स्तूपिकां भावाहस्तवंशतुलादयः(?) ।

स्तूपिकाश्चापि देवानामयुग्माश्चैव शोभनाः ।
युग्मा एव मनुष्याणां प्रशस्ताः सर्वधामसु ॥ १ ॥
शिखरे स्तूपिकास्थाने कार्या मूर्ध्नेष्टका तथा ।
तत आच्छाद्य शिखरं द्रव्यैः कार्तस्वरादिभिः ॥ २ ॥
स्तूपीदण्डं समाच्छाद्य कलशं चैव विन्यसेत् ।
पद्मतारात् सपादं स्यात् स्तूपीकुम्भविशालकम् ॥ ३ ॥

विस्तारेण सपादं वा सार्धं वा स्तूपिकोच्छ्रयम्।
पङ्कजं तोरणस्रक् च क्षेपणं पत्रक्षेपणम्॥ ४॥

धृक् च कम्पं च पद्मं च वेत्रत्रितयकुड्मलौ।
एवं तस्यैवावयवं यथाशोभं समाचरेत्॥ ५॥

चतुरष्टद्विरष्टाश्रं सधारं वर्तुलं तु वा।
स्यादाकृतिः सुरोर्वीशविप्राणां च विशां मतम्॥ ६॥

इत्येकभूमौ चतुरश्ररूपे सुरालयेऽल्पे विधिरभ्यधायि।
अथाभिधास्ये द्वितलादिजातिच्छन्दादिवृत्तादिगतं विशेषम्॥

इति शिल्परत्ने स्तूपिकालक्षणं नाम
षट्त्रिंशोऽध्यायः।

---

## अथ सप्तत्रिंशोऽध्यायः।

### अथ शान्तिकादिनियमः।

शान्तिकं पौष्टिकं चैव जयदं त्वद्भुतं पुनः।
सार्वकामिकमित्येवं पञ्चधा सदनं स्मृतम्॥ १॥

पूर्वोक्तं मानमुन्मानं कुर्यादत्रापि सर्वतः।
अल्पे धामनि विस्तृतिद्विगुणितप्रायोच्छ्रयेऽष्टांशिते
मूलांशेन मसूरकोच्छ्रयमतः स्तम्भोच्छ्रयं द्व्यंशकम्।
भूयः प्रस्तरमंशतो गलमिलांशेन प्रक्लृप्तोच्छ्रयं
भागाभ्यां शिखरोच्छ्रयं विरचयेदेकांशतः स्तूपिकाम्॥ २॥
एवं वा शान्तिकं सद्म प्रोक्तमंशोच्छ्रयं पुनः॥ ३॥

स्वसप्ताष्टदशांशैकहीनं वा कारयेद् बुधः ।
सदनोच्चे नवांशे तु शिवांशं तत्तलोदयम् ॥ ४ ॥

सार्धद्विभागं पादोच्चं मञ्चमेकांशमानतः ।
सार्धांशं गलमानं तु द्विभागं शिखरोदयम् ॥ ५ ॥

स्तूपिकामंशतः कुर्यात् पौष्टिकाख्ये सुरालये ।
सदनोच्चे दशांशे तु भागमाद्यंशकोन्नतम् ॥ ६ ॥

सार्धद्व्यंशं तु पादोच्चं प्रस्तरोच्चं शिवांशकम् ।
सार्धांशं गलमानं तु गुणांशं शिखरोदयम् ॥ ७ ॥

एकांशं स्तूपिकामानं कुर्याज्जयदनामकम् ।
रुद्रांशे हर्म्यतुङ्गे तु सपादांशं धरातलम् ॥ ८ ॥

सार्धद्व्यंशं तु पादोच्चं प्रस्तरं तु शिवांशकम् ।
अध्यर्धांशं तु कर्णोच्चं सार्धत्र्यंशं तु शीर्षकम् ॥ ९ ॥

सपादांशं स्तूपिकोच्चं कुर्यादद्भुतमन्दिरे ॥ १० ॥

उत्तुङ्गे सप्तभागे तु शिवांशं तु धरातलम् ।
पक्षांशं पादतुङ्गं च शिखरोच्चं गुणांशकम् ॥ ११ ॥

स्तूप्युत्सेधमथैकांशं कर्तव्यं सार्वकामिके ।
नानालङ्कारभेदेन तेषां नामानि सन्ति वै ॥ १२ ॥

श्रीभोगादीन्यनेकानि तानि ज्ञेयानि शास्त्रतः ।

अथ द्वितलं —

प्रासादोच्चं तु विभजेदष्टाविंशद्विभागतः ॥ १३ ॥

तद्गुणांशमधिष्ठानं षडंशं चरणायतम् ।
गुणांशं मञ्चतुङ्गं तु भूतांशं चरणोदयम् ॥ १४ ॥
द्विभागं प्रस्तरोत्सेधं शिवांशं वेदिकोदयम् ।
द्विभागं गलमानं तु सार्धवेदांशकं शिरः ॥ १५ ॥
स्तूप्युच्चं सार्धभागं तु कुर्याच्छान्तिकसद्मनि ।
चतुस्त्रिंशद्विभक्ते तु कारयेत् सदनोदये ॥ १६ ॥
सार्धाग्न्यंशमधिष्ठानं तद्द्वयं चरणायतम् ।
गुणांशं प्रस्तरोत्सेधं पादं सार्धषडंशकम् ॥ १७ ॥
गुणांशं मञ्चमानं तु शिवांशं वेदिकोदयम् ।
गलोच्चं सार्धलोकांशं भूतांशं शिखरोदयम् ॥ १८ ॥
अध्यर्धांशं शिखामानं सदने पौष्टिकाभिधे ।
त्रयस्त्रिंशद्विभक्ते तु सदनोत्सेधमानके ॥ १९ ॥
गलं सार्धद्विभागं स्याज्जयदेऽन्यत् तु पूर्ववत् ।
षट्त्रिंशद्भाजिते तुङ्गे युगभागं धरातलम् ॥ २० ॥
वस्वंशं पादमानं तु मञ्चं सार्धत्रिभागिकम् ।
सप्तांशं चरणोत्सधं गुणांशं मञ्चमानकम् ॥ २१ ॥
एकांशं वेदिकोत्सेधं गुणांशं तु गलोदयम् ।
भूतांशं शिखरोत्सेधं सार्धांशं स्तूपिकोदयम् ॥ २२ ॥
अद्भुताख्ये गृहे कुर्याद् द्वितले देवपूजिते ।
चत्वारिंशत्कृते तुङ्गे वेदभागं धरातलम् ॥ २३ ॥
द्विगुणं तस्य पादोच्चं मञ्चमानं युगांशकम् ।
तत्पादं सार्धसप्तांशं त्रिभागं प्रस्तरोदयम् ॥ २४ ॥

भागद्वयं वेदिकोच्चं ग्रीवोत्सेधं गुणांशकम् ।
सप्तांशं शिखरोत्सेधं सार्धांशं स्तूपिकोदयम् ॥ २५ ॥

इत्येवं क्रमशः कुर्यात् सदने सार्वकामिके ।
एतेषां भूषणाकारवशान्नामानि सन्ति वै ॥ २६ ॥

बहूनि स्वस्तिकादीनि द्वितले देवमन्दिरे ।

अथ त्रितलं —

प्रासादत्रितये भास्वद्द्विगुणांशविभाजिते ॥ २७ ॥
द्व्यंशं धरातलोत्सेधं वेदांशं चरणोदयम् ।
मञ्चमानं द्विभागं तु पादोनचतुरंशकम् ॥ २८ ॥
पादायामं हि सार्धांशं प्रस्तरोच्चमुदाहृतम् ।
सार्धाग्निभागं पादोच्चं सपादांशं तु मञ्चकम् ॥ २९ ॥
अर्धांशं वेदिकामानं गलमानं शिवांशकम् ।
सार्धाग्न्यंशं तु शिखरं स्तूप्युच्चं त्वेकभागिकम् ॥ ३० ॥
शान्तिके त्रितलेऽप्येवं कुर्याच्छास्त्रानुसारतः ।
द्वितीयतलपादान्तमेवमेव करोत्वतः ॥ ३१ ॥
अध्यर्धांशं तु मञ्चोच्चमर्धांशं वेदिकोदयम् ।
शिवांशं वेदिमानं तु गुणांशं शिखरोदयम् ॥ ३२ ॥
सपादांशं शिखामानं पौष्टिकेऽर्कद्विभाजिते ।
सप्तविंशत्कृते तुङ्गे द्व्यंशमाद्यङ्ककोन्नतम् ॥ ३३ ॥
चरणोच्चं तु वेदांशं द्विभागं प्रस्तरोन्नतम् ।
वेदांशं चरणायामं मञ्चं पादोननेत्रकम् ॥ ३४ ॥

तद्वच्च चरणायामं सार्धांशं प्रस्तरोदयम् ।
एकांशं वेदिकामानं ग्रीवामानं द्विभागिकम् ॥ ३५ ॥

वेदांशं शिखरोन्मानं सपादं स्तूपिकोदयम् ।
जयदे कारयेत् सर्वदेवासुरविमानके ॥ ३६ ॥

द्विचत्वारिंशत्कृते तुङ्गे सार्धाग्न्यंशं धरातलम् ।
सप्तांशं चरणायामं मञ्चमाद्यङ्गतः समम् ॥ ३७ ॥

पादं सार्धषडंशं तु गुणांशं प्रस्तरोदयम् ।
षडंशं तलिपं कुर्यात् सार्धद्व्यंशं तु मञ्चकम् ॥ ३८ ॥

एकांशं वेदिकोत्सेधं द्विभागं तु गलोदयम् ।
भूतांशं शिखरं शेषं स्तूप्युत्सेधं गृहेऽद्भुते ॥ ३९ ॥

साष्टचत्वारिंशद्भिर्भक्ते तुङ्गे गृहस्य तु ।
आद्यङ्गोन्नतमब्ध्यंशं तद्युगं चरणायतम् ॥ ४० ॥

मञ्चमानं तु वेदांशं तलिपं सार्धसप्तकम् ।
सार्धत्रिभागं मञ्चोच्चं सप्तांशं चरणायतम् ॥ ४१ ॥

प्रस्तरोच्चं गुणांशं तु शिवांशं वेदिकोदयम् ।
द्विभागं गलमानं तु रसांशं शिखरोदयम् ॥ ४२ ॥

द्विभागं तु शिखामानं कारयेत् सार्वकामिके ।
अत्रापि स्वस्तिकादीनि भवन्त्याख्यानि भूषणैः ॥ ४३ ॥

अथ चतुस्तलम् —

एकोनचत्वारिंशांशे कारयेत् सदनोदये ।
सार्धपक्षांशमाद्यङ्गं भूतांशं चरणोदयम् ॥ ४४ ॥

अधिष्ठानसमं मञ्चं पादं सत्र्यङ्घ्रिसागरम् ।
सपादद्व्यंशकं मञ्चं पादं सार्धाब्धिभागिकम् ॥ ४५ ॥
पक्षांशं प्रस्तरोत्सेधं सपादाब्ध्यंशमङ्घ्रिकम् ।
पादोनाक्षांशकं मञ्चं शिखांशं वेदिकोदयम् ॥ ४६ ॥
कर्णोच्चं तु द्विभागं तत् सार्धवेदशिरोन्नतम् ।
स्तूपिकोत्सेधमक्ष्यंशं शान्तिके सदनोत्तमे ॥ ४७ ॥
प्रासादस्योच्छ्रये पञ्चपञ्चाशद्भागभाजिते ।
आयङ्गोत्सेधमग्न्यंशं रसांशं चरणोदयम् ॥ ४८ ॥
प्रस्तरोच्चं तु रामांशं भूतांशं तलिपोदयम् ।
पादोनाग्न्यंशकं मञ्चं भूतांशं चरणायतम् ॥ ४९ ॥
गुणांशं मञ्चमानं तु तद्वयं चरणायतम् ।
त्रिभागं प्रस्तरोत्सेधं सार्धं बाणांशमङ्घ्रिकम् ॥ ५० ॥
प्रस्तरोत्सेधमग्न्यंशं वेदिकोच्चं शिवांशकम् ।
द्विभागं गलमानं तु भूतांशं शिखरोदयम् ॥ ५१ ॥
पादोनद्व्यंशकं स्तूपितुङ्गं तु जयदे कुरु ।
ह्योमादिस्तूपिपर्यन्तं पञ्चाशद्भागभाजिते ॥ ५२ ॥
सार्धाग्न्यंशमधिष्ठानं सप्तांशं चरणोदयम् ।
आयङ्गसदृशं मञ्चं पादं वार्धषडंशकम् ॥ ५३ ॥
सपादत्र्यंशकं मञ्चं रसांशं चरणोदयम् ।
गुणांशं प्रस्तरोत्सेधं पादं सार्धशरांशकम् ॥ ५४ ॥
सार्धद्विभागं मञ्चोच्चमेकांशं वेदिकोदयम् ।
द्विभागं तु गलोन्मानं पञ्चांशं तु शिरोदयम् ॥ ५५ ॥

शिखामानं सपादांशं कुर्यादद्भुतहर्म्यके ।
पञ्चाशद्भाजिते तुङ्गे सार्धाग्न्यंशं धरातलम् ॥ ५६ ॥
धात्वंशं चरणायामं मञ्चं साङ्घ्र्यग्निभागिकम् ।
सार्धषट्कं तु पादोच्चं रामांशं प्रस्तरोदयम् ॥ ५७ ॥
सार्धषड्भागकं पादं त्र्यंशं प्रस्तरतुङ्गकम् ।
सार्धपञ्चांशकं पादं मञ्चं पादोनपावकम् ॥ ५८ ॥
शिवांशं वेदिकामानं द्विभागं तु गलोदयम् ।
पञ्चांशं शिखरं कुर्याद् व्योमांशं स्तूपिकोदयम् ॥ ५९ ॥
सर्वदेवोचिते हर्म्ये सार्वकामिकसंज्ञके ।
सुभद्रादीनि नामानि सन्ति तेषां बहूनि च ॥ ६० ॥

अथ पञ्चतलं —

तुङ्गेऽष्टचत्वारिंशांशे सत्रिपादानलांशकम् ।
आधङ्गं तद्युगं पादं सार्धद्व्यंशं तु मञ्चकम् ॥ ६१ ॥
साङ्घ्रिरामांशकं पादं द्व्यंशार्धं प्रस्तरोन्नतम् ।
पञ्चांशं चरणायामं ++ साङ्घ्रिकरांशकम् ॥ ६२ ॥
पादं पादोनपञ्चांशं द्विभागं प्रस्तरोन्नतम् ।
भागं सार्धाब्धिभागं तु मञ्चमङ्घ्र्यूनलोचनम् ॥ ६३ ॥
शिवांशं वेदिकामानं गलमानं द्विभागिकम् ।
सार्धाब्ध्यंशं शिरोमानं शेषं स्तूप्युच्चमाचरेत् ॥ ६४ ॥
शान्तिके भवने पञ्चतले त्वेवं विचक्षणः ।
चतुश्चत्वारिंशदंशभक्ते तु सदनोदये ॥ ६५ ॥

धरातलोच्चं रामांशं रसांशं चरणोदयम् ।
लोकांशं प्रस्तरोत्सेधं सार्धवेदांशमङ्घ्रिकम् ॥ ६६ ॥
सपादभागं मञ्चोच्चं पादं साङ्घ्रियुगांशकम् ।
प्रस्तरोच्चं द्विभागं तु वेदांशं चरणोदयम् ॥ ६७ ॥
पक्षांशं मञ्चमानं तु पादं सार्धगुणांशकम् ।
अध्यर्धांशं तु मञ्चोच्चं व्योमांशं वेदिकोदयम् ॥ ६८ ॥
द्विभागं गलमानं तु सार्धवेदांशकं शिरः ।
अध्यर्धांशं शिखामानं कारयेत् पौष्टिके गृहे ॥ ६९ ॥
सदनोच्चे तु षट्त्रिंशद्भक्ते द्व्यंशं धरातलम् ।
वेदांशं चरणोत्सेधं प्रस्तरोच्चं द्विभागिकम् ॥ ७० ॥
वेदांशं तु तथा पादं सत्र्यङ्घ्र्यंशं तु मञ्चकम् ।
सार्धोनलांशपादोच्चं तदर्धं प्रस्तरोदयम् ॥ ७१ ॥
सपादाग्न्यंशकं पादं सार्धांशं प्रस्तरोन्नतम् ।
गुणांशं पादतुङ्गं तु मञ्चं साङ्घ्रिशिवांशकम् ॥ ७२ ॥
एकांशं वेदिकामानं पदोनद्व्यंशकं गलम् ।
शिखरं सार्धलोकांशं शेषांशं स्तूपिकोन्नतम् ॥ ७३ ॥
जयदे भवने कुर्यात् पञ्चभूमौ विशेषतः ।
विमानोच्चे त्रयस्त्रिंशद्भाजिते कुट्टिमं द्वयम् ॥ ७४ ॥
वेदांशं चरणायामं द्विभागं प्रस्तरोन्नतम् ।
सार्धाग्न्यंशं तु पादोच्चं मञ्चं पादोननेत्रकम् ॥ ७५ ॥
त्रिभागं चरणायामं तदर्धं मञ्चमानकम्
सार्धद्विभागं पादोच्चं सपादांशं तु मञ्चकम् ॥ ७६ ॥

स्तम्भं पादाधिकद्व्यंशं मञ्चं साङ्घ्रिशिवांशकम् ।
व्योमांशं वेदिकामानमध्यर्धं गलमानकम् ॥ ७७ ॥

सार्धत्रिभागं शिखरं द्विभागं स्तूपिकोन्नतम् ।
अद्भुते सदने ह्येवं सर्वं कुर्यात् सुरालये ॥ ७८ ॥

चतुर्विंशद्विभागे तु तुङ्गे द्व्यर्धं धरातलम् ।
गुणांशं चरणोत्सेधं मञ्चमानं तदर्धकम् ॥ ७९ ॥

पादं पादोनलोकांशं सार्धांशं त्वथ मञ्चकम् ।
द्व्यर्धांशमङ्घ्रितुङ्गं तु सपादं प्रस्तरोदयम् ॥ ८० ॥

स्तम्भं पादाधिकद्व्यंशं तदर्धं मञ्चमानकम् ।
सार्धभागद्वयं पादमेकांशं प्रस्तरोच्छ्रयम् ॥ ८१ ॥

अर्धांशं वेदिकामानं त्रिपादं गलमानकम् ।
शिरः पादोननेत्रांशं शेषं तु स्तूपिकोन्नतम् ॥ ८२ ॥

एवं कुर्यादिदं सर्वं सदने सार्वकामिके ।
नामानि ब्रह्मकान्तादीन्यनेकानि भवन्त्यतः ॥ ८३ ॥

भूषणाकृतिभेदेन द्रष्टव्यान्यत्र शास्त्रतः ।

अथ षट्तलं —

सप्तपञ्चाशदंशं तु सदनोदयमानकं ॥ ८४ ॥

आद्यङ्घ्रोन्नतमग्न्यंशं षडंशं चरणोदयम् ।
पादहीनत्रिभागं तु मञ्चं सार्धं शरांशकम् ॥ ८५ ॥

पादं द्व्यर्धं प्रस्तरोच्चं पादं साङ्घ्रिशरांशकम् ।
सार्धद्विभागं मञ्चोच्चं पञ्चांशं चरणोदयम् ॥ ८६ ॥

सपादद्वितयं मञ्चं पादोत्सेधं शरांशकम् ।
सत्रिपादांशकं मञ्चं पादं सार्धयुगांशकम् ॥ ८७ ॥
पादोनद्व्यंशकं मञ्चं व्योमांशं वेदिकोदयम् ।
गलं पादोननेत्रांशं सार्धाब्ध्यंशं शिरोदयम् ॥ ८८ ॥
पक्षांशं स्तूपिकामानं शान्तिकादिषु पञ्चसु ।
साधारणेन वा कुर्यादिदं सुरगृहोत्तमे ॥ ८९ ॥
अम्बुजासनकादीनि नामानीह भवन्ति च ।

अथ सप्ततलं —

सप्तषष्टिकभागे तु कृते तत्सदनोदये ॥ ९० ॥
सपादाग्न्यंशमाद्यङ्घ्रिं पादं सार्धरसांशकम् ।
तदर्धं प्रस्तरोत्सेधं षड्भागं चरणोदयम् ॥ ९१ ॥
पादोनत्र्यंशकं मञ्चं सार्धपञ्चांशमङ्घ्रिकम् ।
प्रस्तरं + दलाक्ष्यंशं पादं साङ्घ्रिशरांशकम् ॥ ९२ ॥
प्रस्तरं सार्धपक्षांशं भूतांशं चरणोदयम् ।
साङ्घ्रिद्विभागं मञ्चोच्चं पादं पादोनपञ्चकम् ॥ ९३ ॥
द्विभागं प्रस्तरोत्सेधं स्तम्भं सार्धयुगांशकम् ।
पादोनद्व्यंशकं मञ्चं व्योमांशं वेदिकोदयम् ॥ ९४ ॥
पादोनद्व्यंशकं कर्णं सार्धवेदांशकं शिरः ।
पक्षांशं स्तूपिकामानं सप्तभूमौ सुरालये ॥ ९५ ॥
शान्तिकाद्यविशेषेण कुर्यात् सर्वं यथाविधि ।
श्रीछन्दादीनि नामानि बहून्यत्र भवन्ति हि ॥ ९६ ॥

अथाष्टतलम् —

+ + षष्टिकृते तुङ्गे सार्धाग्न्यंशं धरातलम् ।
सप्तांशं चरणायामं मञ्चं सार्धत्रिभागिकम् ॥ ९७ ॥
पादं सार्धषडंशं तु द्व्यधांशं मञ्चमानकम् ।
पादं सपादपञ्चांशं मञ्चं सार्धद्विभागिकम् ॥ ९८ ॥
भूतांशं चरणायामं मञ्चं साङ्घ्रिविभागिकम् ।
पादोनपञ्चकं पादं मञ्चं पादोननेत्रकम् ॥ ९९ ॥
सार्धवेदांशकं पादं व्योमांशं प्रस्तरोदयम् ।
शिवांशं वेदिकातुङ्गं पादोनद्व्यंशकं गलम् ॥ १०० ॥
शिखरं सार्धवेदांशं तच्छेषं स्तूपिकोदयम् ।
कुर्यादष्टतले गेहे शान्तिकाद्यविशेषतः ॥ १०१ ॥
शिवच्छन्दानि नामानि बहून्यत्र भवन्ति हि ।

अथ नवतलम् —

अष्टाशीत्यंशिते तुङ्गे पादोनचतुरंशकम् ॥ १०२ ॥
जङ्घोच्चं तद्युगं पादं प्रस्तरं सार्धवह्निकम् ।
सप्तांशं चरणोत्सेधं मञ्चोच्चं साङ्घ्रिपावकम् ॥ १०३ ॥
पादं सार्धरसांशं तु गुणांशं मञ्चमानकम् ।
षड्भागं पादतुङ्गं तु मञ्चं पादोनपावकम् ॥ १०४ ॥
पादोच्चं सार्धभूतांशं मञ्चं सार्धद्विभागिकम् ।
भूतांशं चरणोत्सेधं मञ्चं सार्धद्विभागिकम् ॥ १०५ ॥
साङ्घ्र्यंशं प्रस्तरोत्सेधं शर्‍यंशं वेदिकोदयम् ।
कर्णोच्चं सार्धभागं तु सार्धवेदांशकं शिरः ॥ १०६ ॥

शेषं स्तूप्युदयं कार्यमेकादशतले गृहे ।
शान्तिकाद्यविशेषेण तत्राप्याकारभूषणैः ॥ १०७ ॥
विजयादीनि नामानि सन्त्यनेकानि लक्षणैः ।

अथ द्वादशतलम्—

सप्तोत्तरशतांशं तु सदनोच्चं तु कारयेत् ॥ १०८ ॥
धरातलोच्चं भूतांशं नवांशं चरणोदयम् ।
सार्धाब्ध्यंशं तु मञ्चोच्चं पादं सार्धगजांशकम् ॥ १०९ ॥
शेषं पूर्वोक्तवत् सर्वं सदने रविभूमिके ।
त्रयोदशदलादीन्यप्यतः सन्ति गृहाणि हि ॥ ११० ॥
आषोडशतलं प्राह काश्यपो मुनिसत्तमः ॥ ११०½ ॥

इति शिल्परत्ने शान्तिकादिनियमो नाम
सप्तत्रिंशोऽध्यायः ।

अथ अष्टात्रिंशोऽध्यायः ।

अथ वृत्तषडश्रादिप्रासादलक्षणम् ।

युगाश्रं वृत्तसङ्काशं चतुरायतकं पुनः ।
द्व्यश्रवृत्तं कुक्कुटाण्डसदृशं च षडश्रकम् ॥ १ ॥
अष्टाश्रं चाकृतिस्त्वेवं सप्तधा सुरमन्दिरे ।
गेहेऽल्पे परिणाहेन द्वाविंशद्धाजिते सति ॥ २ ॥
व्यासं करोतु सप्तांशैः प्रायो वृत्तात्मके गृहे ।
स्वाभीष्टमाने दशयुक्तसप्तशतांशिते विश्वलसच्छतांशः ।

यस्तेन मानेन परिभ्रमय्य वृत्तात्मकं वेश्म समातनोतु ॥ ३ ॥

वृत्तव्यासे हते नागवेदवह्न्यब्धिखेन्दुभिः ॥ ४ ॥

तिथ्यश्विविबुधैर्भक्तः सुसूक्ष्मः परिधिर्भवेत् ।

परिधेर्व्यत्ययाद् यद्वा सुसूक्ष्मं व्यासमानयेत् ॥ ५ ॥

नाहार्धमानप्रचये हरिद्भिर्भक्तेऽर्णवांशैर्विततिं तनोतु ।

आयाममंशैर्ऋतुसम्मितैश्च तुर्यश्रदीर्घस्य सुगलयस्य ॥ ६ ॥

अथवा गृहपरिणाहस्यार्धेन विभज्य तत्र नवधांशैः ।

विस्तारं चायामस्त्रिभिर्ऋतुभिरिदं करोतु शिल्पिवरः ॥ ७ ॥

नाहार्धे तु करर्क्षैकभक्ते नवरसांशकैः ।

हस्तितुण्डस्य विस्तारं कुर्याद् वा शेषमायतम् ॥ ८ ॥

अथवा चतुर्विंशांशे नवांशैर्विस्तृतिं तथा ।

तिथ्यंशैर्हस्तितुण्डस्य दीर्घमानमुदाहृतम् ॥ ९ ॥

अथवा गुणविस्तारं कुर्याद् वा चतुरायते ।

चतुरायतगृहं चाथ वृत्तायतगृहं तथा ॥ १० ॥

मुखपृष्ठायतं कुर्याद् दक्षवामायतं तु वा।

स्वाभीष्टे परिणाहमानानिचये धाम्नश्चतुःषष्टिभा-

गोनेऽष्टादशधा कृतेऽर्णवमितैरंशैः पृथक् कल्पयेत् ।

पार्श्वद्वन्द्वसमायती मुखततिं च ह्यंशसूत्रभ्रमात्

प्रायः साङ्घ्रिरसांशनाहमपि पृष्ठे हस्तिपृष्ठात्मनः ॥ ११ ॥

गेहस्य नाहे कृतिभाजिते + + + + + + + + + + + + ।

+ + + + + + + + + + + + + + + + + + + + + + + + ॥१२॥

अंशैश्चतुर्दशैस्तारं पार्श्वभागं तथैव च ॥ १३ ॥
द्वाविंशत्पृष्ठमानं स्यात् सप्तभागपरिभ्रमात् ।

भागद्वये द्विरदपृष्ठसमुक्तनीत्या
वृत्तीकृते तदुभयान्तरभागदैर्घ्यम् ।
स्वेध्मांशतो विरहितेन गुणांशकेन
वृत्तायते वितनुयात् सुरवर्यधिष्ण्ये ॥ १४ ॥

षोढा विभज्य निजवाञ्छितमानराशि-
मंशायतानि परिकल्प्य षडश्रकाणि ।
कुर्याद् गृहं रसपुटं द्विगुणांशमानो
व्यामोंऽशितेऽत्र तिथिभिर्नयनांशहीनः ॥ १५ ॥

स्वाभीष्टमाने दशधा विभक्ते व्यासत्रिभागैर्द्विषडंशितेऽस्मिन् ।
व्यासे शरांशैर्विहितायतांस्तदश्रींश्च कुर्याद् वसुकोणधाम्नः ॥

मुखपृष्ठायते तुर्यश्रायते सुरमन्दिरे ॥ १७ ॥
शिखरे हस्तिपृष्ठे च कुर्यादग्रे ललाटिकाम् ।
दक्षवामायते तत्र शालाकारे ललाटिकाम् ॥ १८ ॥

पार्श्वयोः शिखरे कुर्याद् विना वात्र ललाटिकाम् ।
षडश्राष्टाश्रयोः कुर्याच्छिखरे भद्रनासिकाम् ॥ १९ ॥

यावन्त्यश्राणि गेहस्य तत्तन्मध्ये यथापुरम् ।
प्रासादसदृशं दीर्घं तदर्धं त्र्यंशिते द्वयम् ॥ २० ॥

वेदांशे गुणभागं वा भूतांशे युगभागकम् ।
रसांशे शरभागं वा षड्भागं गिरिभाजिते ॥ २१ ॥

गोत्रांशं वसुभागे वा रन्ध्रांशे वसुभागकम् ।
सुखमण्डपदीर्घे स्यान्नवधा परिकीर्तितम् ॥ २२ ॥

दीर्घमानेन तारं स्यात्तत्समं वार्धमेव वा ।
पञ्चांशे शिखिभागं वा सप्तांशे वेदभागकम् ॥ २३ ॥
ऊर्म्यंशं दशभागं वा मित्रांशे पञ्चभागकम् ।
इत्येवं विस्तृतं तेषामन्तरालं विधीयते ॥ २४ ॥
भिन्नसन्धावुत्तरादौ कोणेतरगते न्यसेत् ।
आधाराधेयभावेन मूलाग्रौ चाप्यधोत्तरम् ॥ २५ ॥

इति शिल्परत्ने वृत्तषडश्रादिप्रासादलक्षणं नाम
अष्टात्रिंशोऽध्यायः ।

---

## अथ एकोनचत्वारिंशोऽध्यायः ।

### अथ मण्डपम् ।

तत्र पूर्वं मुखमण्डपं —

नेत्रेषुसप्तदशभानुभिरादिधाम्न-
स्तारं विभज्य विधुलोकयुगांशभूतैः ।
विस्तारमत्र रचयेन्मुखमण्डपस्य
पादोनमर्धमथवा सममस्य दीर्घम् ॥ १ ॥

हर्म्यतारार्धमानं तु कन्यसं मुखमण्डपम् ।
हर्म्यतारमुखं श्रेष्ठं त्रिपादं मध्यमं पुनः ॥ २ ॥

निधिभक्ते तु तत्तारेऽप्येकद्वित्रिवियुक्तितः ।
अधमाधममाद्यं स्यादधमे मध्यमं परम् ॥ ३ ॥

अधमोत्तममन्यत स्याच्चतुर्थादित्रयं क्रमात् ।
हर्म्यतारार्धमानं तु कन्यसं मुखमण्डपम् ॥ ४ ॥

हर्म्यतारमुखं श्रेष्ठं तयोर्मध्येऽष्टभाजिते ।
एकैकांशकहीनेन नवधोक्तं तदायतम ॥ ५ ॥

हस्तं सार्धं द्विहस्तं वा प्रासादस्यांशमेव वा ।
अन्तरालस्य दीर्घं स्याद् द्विदण्डं तस्य वेशनम् ॥ ६ ॥

सार्धं वाप्येकदण्डं वा मानसूत्रात तु निर्गमम ।
तारमानेन वा कुर्यात सप्तभागैकभागिकम ॥ ७ ॥

अष्टभागैकभागं वा नवभागैकमेव वा ।
दशांशादेकभागं वाप्यन्तरालविशालकम ॥ ८ ॥

युग्मस्तम्भसमायुक्तं युक्त्या सर्वाङ्गसंयुतम् ।
सावकाशान्तरालं वा सकुड्यं वा सजालकम् ॥ ९ ॥

सावकाशान्तरालं चेद् दीर्घं द्वित्रिचतुष्करम् ।
सोपानं पार्श्वयोः कार्यं गजहस्तविभूषितम् ॥ १० ॥

प्रासादभित्तिविस्तारतुल्यं वार्धत्रिपादकम् ।
अन्तरालस्य भित्तेस्तु व्यासं स्यान्मण्डपे तथा ॥ ११ ॥

कूटकोष्ठादियुक्तं वा हीनं वा मुखमण्डपे ।
त्रिवर्गसहितं वापि तोरणाद्यैर्विचित्रितम् ॥ १२ ॥

एकानेकतलं वाथ कर्तव्यं मुखमण्डपम् ।

**अथार्चनामण्डपः —**

अन्तर्मण्डलतो व्यतीत्य करमात्रं प्रार्चनामण्डपं
तुर्यश्रं समसूरकं निजमुखायामस्य वा मध्यतः ।
वेदस्तम्भभृतैकभारमथवा कुर्याच्चतुर्द्वादश-
स्तम्भद्व्युत्तरसंयुतं स्वमुकुटाद्यालंक्रियालंकृतम् ॥ १३ ॥

प्रासादतारतुल्यं वा त्रिपादं वार्धमेव वा ॥ १४ ॥
मण्डपानां तु विस्तारमथवा तत्त्वदंशकम् ।
योनिः स्याद् येन तेनैव मानेन परिकल्पयेत् ॥ १५ ॥
नवसप्तदशाष्टांशेऽप्येकैकांशविहीनतः ।
इत्येव मूलपादेन मण्डपाङ्घ्रिसमुच्छ्रयः । १६ ॥
अथवा करमानैर्वा तदलोच्चं धरातलम् ।
सार्धद्विहस्तमारभ्य षट्षडङ्गुलवर्धनात् ॥ १७ ॥
अष्टहस्तान्तमङ्घ्र्युच्चं मण्डपानां समाचरेत् ।
द्विद्व्यङ्गुलविवृद्ध्या वा स्तम्भस्योत्सेधमाचरेत् ॥ १८ ॥
अष्टाङ्गुलं समारभ्य चार्धार्धाङ्गुलवर्धनात् ।
नन्दपञ्चयङ्गुलं यावत् तावत् स्तम्भस्य विस्तृतिः ॥ १९ ॥
स्तम्भोच्चे शरभागे तु द्विभागं स्यान्मसूरकम् ।
तृतीयांशं त्रिभागे तु स्तम्भोत्सेधं मसूरकम् ॥ २० ॥
पङ्क्तिनन्दाष्टसप्तर्तुशरांशे पादतुङ्गके ।
भागेनाद्यङ्गतुङ्गं तु मण्डपानां विशेषतः ॥ २१ ॥
न्यासात् पादाधिकं सार्धं द्विगुणं वा ततोऽधिकम् ।
चतुरश्रायतं कुर्यादथवा मण्डपं पुनः ॥ २२ ॥

नाट्यमण्डपनाहार्धे षोडशैः शिवयुग्मकैः ।
भक्ते दशांशकैस्तारं दशभिर्वा यथाक्रमम् ॥ २३ ॥
चतुरश्रं चतुःस्तम्भं नन्द्यावर्त्तं तु मण्डपम् ।
अष्टाभिः स्वस्तिकाख्यं स्याद् वीरासनमिनाङ्घ्रिभिः ॥
स्तम्भैः षोडशभिर्विद्यान्मण्डपं श्रीप्रतिष्ठितम् ।
जयभद्रं रथस्तम्भं षट्त्रिंशद्भिरथाङ्घ्रिभिः ॥ २५ ॥
मण्डपो माणिभद्रः स्याच्छतस्तम्भैर्विशालकम् ।
अत ऊर्ध्वं युताः स्तम्भैर्विशाला एव मण्डपाः ॥ २६ ॥
त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात् ।
यावदेकोनविंशं तु ततमाभासमण्डपे ॥ २७ ॥
एकविंशतिहस्तादि द्विद्विहस्तविवर्धनात् ।
सप्तत्रिंशतिहस्तान्तं विकल्पं नवधा स्मृतम् ॥ २८ ॥
नवत्रिंशद्धस्तमारभ्य द्विद्विहस्तविवर्धनात् ।
पञ्चपञ्चाशदन्तं यन्मण्डपं छन्दसंज्ञितम् ॥ २९ ॥
सप्तपञ्चाशदारभ्य द्विद्विहस्तविवर्धनात् ।
त्रिसप्ततिकरं यावत् तावत् जात्याख्यमण्डपम् ॥ ३० ॥
तद्विस्तारसमं दीर्घं समतुर्यश्रमण्डपम् ।
अध्यर्धहस्तमारभ्य षडङ्गुलविवर्धनात् ॥ ३१ ॥
+ + + + + + + + पादोत्सेधमुदीरितम् ।
गुणाङ्गुलविवृद्ध्या वा कुर्यात पादसमुच्छ्रयम् ॥ ३२ ॥
वस्वङ्गुलं समारभ्य वार्धाङ्गुलविवर्धनात् ।
एकोनविंशन्मात्रान्तं स्तम्भविष्कम्भमानकम् ॥ ३३ ॥

पूर्वोक्तमार्गमाश्रित्य स्तम्भादीनि करोतु वा।
आयताश्चादयः सर्वे भवन्त्युक्त्या च मण्डपाः॥ ३४॥

प्रासादसम्मुखे कुर्यान्मण्डपानां चतुष्टयम्।
मुखमण्डपमादौ तु प्रतिमामण्डपं ततः॥ ३५॥

स्नानमण्डपमन्यं हि नृत्तमण्डपमेव च।
मण्डपान्मण्डपं वाथ सालात् सालमथापि वा॥ ३६॥

कराद्धीनं न कुर्वीत ह्येकादशकरं शुभम्।
स्तम्भालङ्कारभेदेन बहुधा ते भवन्ति हि॥ ३७॥

चतुरश्रश्चतुष्पादो वसुनासाविभूषितः।
ब्रह्मासनाभिधानः स्यान्मण्डपो वा प्रपाथवा॥ ३८॥

त्रिपङ्क्तिषोडशस्तम्भं सरङ्गं ह्यष्टनासिकम्।
सकूटं वा चतुर्द्वारं चतुर्दिक्षु सनासिकम्॥ ३९॥

देवद्विजनरेन्द्रार्हं नाम्ना सिद्धं भवन्ति हि।
एकभारं चतुष्पादं श्रीकरं नाम मण्डपम्॥ ४०॥

द्विभारं षोडशस्तम्भं मण्डपं स्वस्तिकाभिधम्।
बाह्ये तु द्वादशस्तम्भं नाम्ना तु विजयं तथा॥ ४१॥

कर्णबन्धसमायुक्तं मण्डपं भद्रनामकम्।
दिशामुखं चतुर्दिक्षु भद्रनासिकयान्वितम्॥ ४२॥

मण्डपं दीर्घतुर्यश्रं सभारङ्गमिति स्मृतम्।
द्विभद्रं षोडशपदं तत् तथैवेन्दुकान्तकम्॥ ४३॥

पद्मकोशं वर्तुलं चेन्मण्डपं सर्वयोग्यकम् ।
चतुरश्रं समं कुर्यात् कर्णबन्धावलम्बकैः ॥ ४४ ॥
तदाच्छेदलुपाभिर्यद् युक्तं श्रीकरनामकम् ।
तदेवायतवृत्तं चेद् विष्णुकान्ताभिधानकम् ॥ ४५ ॥
पादैर्द्वादशभिर्युक्तं कर्णबन्धावलम्बकैः ।
बालकूटैश्चित्रपट्ट्या व्यालविद्याधरादिभिः ॥ ४६ ॥
नानालङ्कारकैर्युक्तं नाम्ना ललितभद्रकम् ।
सर्वाङ्गपादसंयुक्तं सर्वालङ्कारभूषितम् ॥ ४७ ॥
विशालं नाम तत् प्रोक्तं मण्डपं वा प्रपाथवा ।
मध्ये रङ्गं विधातव्यं मण्डपेषु च केषुचित् ॥ ४८ ॥
चतुर्थांशेन पादोच्चात् तस्य वेद्युन्नतं भवेत्।
चतुःस्तम्भं वसुस्तम्भं षोडशस्तम्भमेव वा ॥ ४९ ॥
सर्वावयवसंयुक्तं सुन्दरं रङ्गमाचरेत् ।
देवप्रतिष्ठास्थानं तु विमाने रङ्गसंज्ञितम् ॥ ५० ॥
तत्रापि चैवं कर्तव्यं सकुड्यं वा सजालकम् ।

अथाधिवासमण्डपः —

प्रासादस्याग्रतो वैशे सौम्ये वा याम्यगोचरे ॥ ५१ ॥
नवाष्टसप्तषट्पञ्चहस्तं वा मण्डपं ततः ।
तदायामसमं तारं समतुर्यश्रमेव हि ॥ ५२ ॥
भारद्वयसमायुक्तं षोडशस्तम्भसंयुतम् ।
चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम् ॥ ५३ ॥

सपताकध्वजोपेतं तत्तद्दिक्षु विधानतः ।
मुक्तास्रग्गर्भमालाभिर्वितानैश्च विभूषितम् ॥ ५४ ॥

मण्डपस्य त्रिभागैकं मध्ये कृत्वोपवेदिकम् ।
वेदाङ्गुलोन्नतं वेशमुपवेदियुगाश्रकम् ॥ ५५ ॥

शेषं वेदिविशालं तु भानुमात्रं तदुन्नतम् ।
भारद्वयाङ्गुलं वोच्चं दर्पणोदरसन्निभम् ॥ ५६ ॥

स्थलं कृत्वा तु कुण्डाख्यं तत्तद्दिक्षु यथोचितम् ।
अथवा वालुकैः स्थूलैः कृतैः स्थण्डिलकैर्युतम् ॥ ५७ ॥

घटानां च पुटानां च वशात् कलशमण्डपम् ।
एवमेवाग्रतः कुर्याद् देवदेवस्य सम्मुखम् ॥ ५८ ॥

सोमेशानान्तरे कार्यं मङ्गलाङ्कुरमण्डपम् ।
प्रत्यग्द्वारं तु सर्वत्र संवृतस्त्वजयोनिकम् ॥ ५९ ॥

अथ नाट्यमण्डपः —

पर्यन्ते प्रतियोनिभाजि बहिरूर्ध्वे वोत्तरस्याथवा
मध्य(सूत्र?)स्थे दलिते ततो विभजिते सम्यक् चतुर्वर्गकैः ।
स्यादंशः पदकायनिस्तु विततिर्द्वाभ्यां पदाभ्यां युतं
तच्छिष्टा ततिरुत्तरं नटनधाम्नो द्वित्रिसंख्यं मतम् ॥ ६० ॥

पदं तिस्रः स्तूप्यो विततिदलस्योत्तरतला-
दुपर्युत्थाधः स्याद्द्विपदमिति ततस्तु चरणः ।
पदं चाधिष्ठानं पदगणनयालिन्दचरणा-
न्तराण्यारूढाङ्घ्रयाद्यखिलमुचितं मण्डपमपि (?) ॥

एकैकाष्टसु दिक्षु पार्श्वयुगगे द्वे द्वे च भागद्वये
द्व्यष्टौ दीर्घलुपा विदिग्गतलुपास्त्वाबद्धमूलाः पुनः ।
कल्प्या रछेदलुपाद्वयीषु सचलक्षास्तासु(?) कोणोन्मुखा
द्वेधा सर्वलुपान्तरं तु पदमात्रं चित्रपट्टयुज्ज्वलम् ॥ ६२ ॥

रङ्गं स्वयोनिपरमार्ध इहार्णवाश्रं
वेदाङ्घ्रिरुत्तरलुपाद्युचिताङ्गशोभि ।
पश्चान्मृदङ्गपदमस्य ततोऽपि पश्चा-
न्नैपथ्यधाम च विभागविदा निधेयम् ॥ ६३ ॥

रङ्गस्य नीप्रविततिः समसीम्नि मध्य-
स्तूप्या स्वमूलसदनस्य तु पश्चिमायाम् ।
स्तूपी च मङ्गमवशात् कुरलेन कल्प्या
प्रायेण हारविततिः श्रुतिहस्तदैर्घ्या ॥ ६४ ॥

अथवाष्टाविंशतिभिश्चत्वारिंशतिभिः पुनः ।
विंशद्भिर्वाथ विभजेत पर्यन्तार्धे पदाप्तये ॥ ६५ ॥

देवस्याग्रे दक्षिणतः रुचिरे नाट्यमण्डपे ।
नाहार्धे चतुर्विंशांशे विस्तारं दशभागतः ॥ ६६ ॥

षोडशांशे षडंशा वा कुर्याद्वा सुरमन्दिरे ।
मानुष्यराजधान्यादौ युक्त्या लक्षणसंयुतम् ॥ ६७ ॥

सर्वं समाचरेन्नाट्यमण्डपेषु यथोचितम् ॥ ६७१ ॥

इति शिल्परत्ने मण्डपविधानं नाम
एकोनचत्वारिंशोऽध्यायः ।

---

## अथ चत्वारिंशोऽध्यायः।

### अथ प्राकाराः।

प्रासादसदनादीनां रक्षालङ्कारसिद्धये
वप्राणि क्रमतः कुर्यात् पञ्चद्वित्र्येकसंख्यया ॥ १ ॥

तत्रान्तर्मण्ड(लं) त्वाद्यमन्तहारा द्वितीयकम्।
तृतीयं मध्यहारा स्याद् बाह्यहारा चतुर्थकम् ॥ २ ॥

मर्यादा पञ्चमं प्रोक्तं शालानां शिल्पवित्तमैः।

दण्डेऽर्धेन्तर्गते मण्डलमत्रनिमितेऽर्धान्विते वान्तहारा
दोस्संख्ये मध्यहारा जलधिपरिमिते बाह्यहाराद्रिसंख्ये।
मर्यादा मूलधाम्नः प्रथमचरमवर्जं मुखायामयुक्ताः
प्राकाराः पञ्चकार्याः स्युरिह चरमसीमैकविंशेऽपि वा स्यात्॥

प्रासादस्योत्तरसमवधेर्जागतान्तस्य वा स्याद्
व्यासो दण्डस्त्रिविध उदितः पादुकान्तस्य वात्र।
नेयश्चायं निजनिजपदादेकदण्डः सपादः
सार्धः साङ्घ्रित्रय इति मुखायाममानं समुक्तम् ॥ ४ ॥

बीजात् पादं तु वार्धं वा त्रिपादं तत्समं तु वा ॥ ५ ॥

द्विगुणं त्रिगुणं वाथ चतुष्पञ्चगुणं तु वा।
कल्पयेत् तु मुखायामं बीजाच्छेषमथापि वा ॥ ६ ॥

क्षुद्राणामल्पहर्म्याणां स्वव्यासार्धप्रमाणतः।
अन्तर्मण्डलकं कुर्यात् सत्रिहस्तं तु तत्समम् ॥ ७ ॥

द्वितीयं च तृतीयं च तस्मात् पञ्चकराधिकम्।
तस्मात् ससप्तहस्तं तु तत्समं स्याच्चतुर्थकम ॥ ८ ॥

नवहस्तसमायुक्तं तत्समं पञ्चमं भवेत् ।
मध्यमानां तु मूलार्धमन्तर्मण्डलकं भवेत् ॥ ९ ॥

ततः शराद्रिबृहतीरुद्रहस्तं यथाक्रमात् ।
वप्रान्तरालविस्तारमुक्तं प्राकारपञ्चके ॥ १० ॥

अथोत्तमानां मूलार्धं प्रथमं त्वथ यादिभिः ।
नन्दातिजगतीहस्तैः (अन्त)हारा भवन्ति हि ॥ ११ ॥

अथवा मूलनिलयं कृत्वा तत्र चतुष्पदम् ।
आद्यसालं महापीठं पदैः षोडशभिर्युतम् ॥ १२ ॥

मण्डूकाख्यं द्वितीयं स्यान्मध्यहारा महानसम् ।
चतुर्थं सुप्रतीकान्तं पञ्चमं चेन्दुकान्तकम ॥ १३ ॥

एवं युग्मपदैरुक्तमयुग्मैरथ कथ्यते ।
एवं मध्ये विमानं स्यादाद्यसालं तु पीठकम ॥ १४ ॥

द्वितीय स्थाण्डल साल मध्य चोभयचण्डितम् ।
चतुर्थं संहितं सालमीशकान्तं तु पञ्चमम ॥ १५ ॥

चतुरर्थीकृते तेन मुखायाममितोऽर्धतः ।
आयामं पुरतः प्रोक्तं प्राकाराणां विशेषतः ॥ १६ ॥

पूर्वद्वारे तन्मुखं पश्चिमे वा पूर्वे वा तत्पश्चिमद्वारकेऽपि ।
देशाभावे तत तयोर्दक्षिणे वा प्राकाराणामुत्तरे वाथ कुर्यात् ॥

पूर्वस्थानं चार्षिकं दैविकं वा नद्यास्तीरे पर्वतान्ताब्धिपार्श्वे ।
तस्मिन् प्राकारानन्तं सण्डपाद्यं यस्मिन् देशे लभ्यते तत्र कुर्यात्॥

अथवा गृहताराधं गुणभागैकभागिकम्
चतुर्भागैकभागं वा ह्येतन्मण्डलविस्तृतम् ॥ १९ ॥

अन्तहाराविशालं तु तद्बाह्ये द्विगुणं हि तत् ।
मध्यहाराविशालं तु तद्बाह्ये तत्त्रिसंगुणम् ॥ २० ॥

मर्यादाया विशालं तु बाह्ये त्वादिचतुर्गुणम् ।
महामर्यादकततमादेः पञ्चगुणं भवेत् ॥ २१ ॥

अथवा हस्तमानेन वक्ष्ये प्राकारसीमकम् ।
त्रिपञ्चसप्तहस्तान्ते वाद्यमाभासहर्म्यके ॥ २२ ॥

नवैकादशहस्ते वा विश्वहस्ते द्वितीयकम् ।
तिथिसप्तदशैकोनविंशद्धस्ते तृतीयकम् ॥ २३ ॥

एकविंशत्त्रयोविंशत्पञ्चविंशत्करेऽन्यकम् ।
सप्तविंशे नवविंशेऽप्येकत्रिंशे तु पञ्चमम् ॥ २४ ॥

विकल्पे पञ्चहस्तादि त्रयस्त्रिंशान्तमादितः ।
त्रित्रिधा छन्दहर्म्ये तु सप्तहस्तं मुखैः क्रमात् ॥ २५ ॥

सप्तत्रिंशत्करान्तैस्तु त्रित्रिधा सालपञ्चके ।
नवहस्तं समारभ्य सप्तत्रिंशावसानकम् ॥ २६ ॥

प्राग्वद्दै सालसीमा स्याद्धर्म्याणां जातिसंज्ञके ।

भक्तायामग्रभूमाविषुभिरिह बहिर्द्धेशकं त्र्यंशमन्तः
कृत्वान्तर्मण्डले दिक्परिवृढबलिपीठेषु तद्दण्डसीमा ।
प्राच्यावाच्याः स्वसूत्रेष्वितरदिगधिपाश्चालिताः किञ्चनातः
प्रादक्षिण्यान्मिथस्ते द्वितय इह महादिङ्मुखाः सम्मुखाश्च ॥

दण्डं स्वं समतीत्य भित्तिरुदिता बाह्यान्तहाराश्रिता
दण्डान्तो द्विविधस्तदुत्तरविभिन्नोऽग्रे सभाभेदतः ।
ज्वालासीमनि दीपधामनि तथान्तःस्थोत्तरेऽन्तर्गते
प्राकारेऽथ बहिःस्थितोत्तरबहिःसाले महीयस्यपि ॥ २८ ॥
प्रासादचरणाद् वाथ होमाद् वा प्रथमस्य तु ॥ २९ ॥
नीप्रं द्वितीये प्रथमा द्वितीयात् तु तृतीयके ।
चतुर्थस्य तृतीयात् तु चतुर्थात् पञ्चमस्य तु ॥ ३० ॥
कुड्याभ्यन्तरबाह्ये वा कुड्यमध्येऽपि नीप्रकम् ।
प्रथमे प्रकृतेस्तुल्ये तलं तस्माद् गुणाङ्गुलम् ॥ ३१ ॥
नतं द्वितीयान्त्यान्तं तत्तद्देव नतं भवेत् ।
मूलजन्मस्थलाधस्तादुच्छ्रितं मूलसालके ॥ ३२ ॥
ततस्ततो द्वितीयादौ षट्षडङ्गुलहीनकम् ।
हस्तार्धं वात्र जन्मोच्चं तस्मात् त्र्यङ्गुलक्षयात् ॥ ३३ ॥
महामर्यादाभित्त्यन्तं क्रमाद्वा कारयेत् स्थलम् ।
अष्टादशाङ्गुलं मूलसाले वाथ ततः क्रमात् ॥ ३४ ॥
चतुर्मात्रक्षयादेवमुत्तमाधममध्यमम् ।
अन्तर्मण्डलभित्तेस्तु विस्तारं सार्धहस्तकम् ॥ ३५ ॥
तस्मात् त्र्यङ्गुलाधिक्यात् क्रमात् साला भवन्ति हि ।
व्योमहस्तं समारभ्य त्र्यङ्गुलविवर्धनात् ॥ ३६ ॥
भवन्ति वा व्योमहस्तात् षट्षडङ्गुलवर्धनात् ।
आदिसालात् क्रमादेवं विस्तारं त्रिविधोदितम् ॥ ३७ ॥

मूलधारमिदं तत् स्यादग्रं वस्वंशहीनतः ।
तत्तद्विष्कम्भतुल्यं वा द्विगुणं त्रिगुणं तु वा ॥ ३८ ॥
चतुष्पञ्चगुणं वाथ सालोत्सेधं प्रकल्पयेत् ।
अथवा हस्तमानेन कल्पयेत् सार्धहस्ततः ॥ ३९ ॥
षट्षडङ्गुलवृद्धया तु षट्सप्तान्तं समुच्छ्रयम् ।
त्रिपञ्चसप्तहस्तादि नन्दरुद्रकरं तु वा ॥ ४० ॥
द्विद्विहस्तविवृद्धया तु प्रत्येकं त्रित्रिभेदकम् ।
अथवोत्तरसीमान्तं कुम्भान्तं फलकान्तकम् ॥ ४१ ॥
नीप्रान्तं वाजनान्तं वा प्रस्तरान्तं गलान्तकम् ।
एवं सालोदयं तत्तदष्टांशं तच्छिरोदयम् ॥ ४२ ॥
अथाद्यं कलशान्तं तु द्वितीयं फलकान्तकम् ।
बोधिकान्तं तृतीयं तु चतुर्थं चोत्तरान्तकम् ॥ ४३ ॥
पञ्चमं तु कपोतान्तमेवं वोन्नतकल्पना ।
कोणेषु वृत्ताकारं वा सर्वसालेषु वाचरेत् ॥ ४४ ॥
भित्तिविष्कम्भकर्णस्य पञ्चांशाद्वितयं बहिः ।
त्यक्त्वा वृत्तीकृतं कुर्यादन्तर्भागं तु तत्क्रमात् ॥ ४५ ॥
ऋजुभित्त्युत्तरोपेतं वाजनच्छत्रशीर्षकम् ।
कल्पयेद्वा विशेषेण मालानां बाह्यभागतः ॥ ४६ ॥
कूटकोष्ठादिसंयुक्तं सपादं समसूरकम् ।
बुद्बुदार्धेन्दुशीर्षं वाप्यजुशीर्षमथापि वा ॥ ४७ ॥
अपृक्तमालिकं वा स्यात् सभाकारमथापि वा ।
मण्डपाकृतिकं वा स्यादृजुकुड्यमथापि वा ॥ ४८ ॥

एकद्वित्रितलं वाथ कुर्यात् प्रासादमञ्चके।
सालोर्ध्वे सप्तभागे तु पक्षांशं वा धरातलम्॥ ४९॥

नवांशे तु द्विभागं वा रुद्रांशेऽग्न्यंशमेव वा।
मूलप्रासादतुल्यं वा चरणं च धरातलम्॥ ५०॥

धरातलं तदुक्तं वा ह्यार्जवं वा प्रकल्पयेत्।
पादोच्चाद्दतुसप्ताष्टभागैकं पादविस्तृतम्॥ ५१॥

दण्डं त्रिपादमर्धं वा बहलं तस्योत्तरस्य तु।
मूलपादसमं व्यासं मध्यपादसमं तु वा॥ ५२॥

पादाग्रसदृशं वा स्यात् कुड्यपादादि पूर्ववत्।
अधस्तलोपरिष्टात् तु चेष्टकास्तरणं कुरु॥ ५३॥

शैलजैः फलकाभिर्वा पुनः कुर्यात तलान्तरम्।
लुपागोपानसहितं दण्डाकारमिदं विदुः॥ ५४॥

लुपादिना विहीनं चेन्मण्डपाकारसंज्ञितम्।
बाह्यकुड्यविहीनं तु मण्डपाकारमण्डितम्॥ ५५॥

छत्राकारमिदं ख्यातं यथेष्टं तेषु विन्यसेत।
जातिः पञ्चतलोपेतश्छन्दः सागरभूमिकः॥ ५६॥

विकल्पस्त्रितलस्तत्राप्याभासो द्वितलः स्मृतः।
मध्यान्तहारयोरेवं मालिकापङ्क्तिरिष्यते॥ ५७॥

एकद्वित्रिचतुष्पञ्चभूमिका वाथ मालिका।
भित्तेरुपरिभित्तिर्वा पादं वा तलिपोपरि॥ ५८॥

भित्तेरुपरिपादं वा पादोपरि न भित्तिकम् ।
सभामण्डपकच्छत्राकारा वाप्यृजुभित्तिका ॥ ५९ ॥
कूटकोष्ठादियुक्ता वा मालिकापङ्क्तिरिष्यते ।
षडङ्गुलं समारभ्य व्योमाङ्गुलविवर्धनात् ॥ ६० ॥
विंशन्मात्रावधिर्यावत् तावत् पादस्य विस्तृतिः ।
पादबन्धमधिष्ठानं कारयेत् पूर्वमुक्तवत् ॥ ६१ ॥
द्वितीयं च तृतीयं च चतुर्थं सालमेव च ।
गृहीत्वान्यौ विवर्ज्येते यत्र तत्तु त्रितालकम् ॥ ६२ ॥
द्वितीयं वा तृतीयं वा गृहीत्वान्यास्तु वर्जिताः ।
एकसालान्वितं हर्म्यं ह्येवमेव प्रकल्पयेत् ॥ ६३ ॥
बीजात् पादं तु वार्धं वा त्रिपादं तत्समं तु वा ।
तस्यानुसालकं युक्तं द्विसालं सम्प्रकीर्तितम् ॥ ६४ ॥

पृष्ठे सपार्श्वद्वितये स्वमूलयोन्यन्वितं मण्डपमाकलय्य ।
तुर्यश्रमातत्य ततोऽन्तराले तन्वीत संयोज्य मिथोऽन्तहाराम् ॥

कृत्वा वंशं मुखायत्युपचितनिजदण्डस्थितं पार्श्वहारा-
भारासक्ताग्रमूलं प्रथितगुणविभागादिकॢप्त्या विभज्य ।
कृत्वा तद्भागतस्तद्वितिमुचितयोन्याढ्यमन्योत्तराणि
न्यस्यारूढोत्तरादीन्यपि रचयतु तद्युक्तितोऽग्रे सभायाम् ॥

स्वाभीष्टे सममार्धिते गृहपरीणाहे स्ववंशप्रथा-
द्वन्द्वोने चतुरादियुग्मपरिसंख्याभिर्विभक्ते समम् ।
एकांशेन ततिं तनोतु परिशिष्टैराततिं चांशकै-
रूनांशं परितः प्रपूरयतु चैवं पादसूत्रे क्रमः ॥ ६७ ॥

तत्पादपङ्क्तिविहितो हि विशेष एष
विष्कम्भतो विरहितेन विभक्तपङ्क्तिः ।
शाला तृतीयविहिता गुणभक्तताराः
साधारणी निगमवर्णसुरेश्वराणाम् ॥ ६८ ॥

हीना चतुर्थगदितायतपङ्क्तिकाख्या
विष्कम्भमानकृतदैर्घ्यपदा तथान्या ।
एवं द्विधा कृतविधानविशिष्टनाम्ना
प्राह्ये च ते कनकसूत्रमिवान्त्यवर्णात् ॥ ६९ ॥

अथ दीपमाला —

अथवा मध्यहारायां कारयेद् दीपमालिकाम् ।
सदीपवेद्याभिवृतामेकद्वित्रितलान्विताम् ॥ ७० ॥

उपानाद्यङ्घ्रितुल्यं यन्मूलहर्म्यस्य तेन वै ।
चतुरादिद्वादशान्तैर्भक्त्वा संख्यैस्तदंशकम् (?) ॥ ७१ ॥

संयुक्त्वा वा वियुक्त्वा वा पादमानं करोत्विह ।
अथवाब्धिहस्तमारभ्य द्वादशाङ्गुलवृद्धितः ॥ ७२ ॥

कुर्याद् वा सप्तहस्तान्तं पादमानमिहाखिले ।
अष्टाष्टाङ्गुलवृद्ध्या वा मन्मथान्तकमन्दिरे ॥ ७३ ॥

सामान्यविधिना पश्चात् तेनाद्यङ्गसमुन्नतिः ।
ज्वालावसाने दण्डान्तं प्रायेणात्र विधीयते ॥ ७४ ॥

प्रासादनाहपादेन तुल्यं नातोऽधिकं क्वचित् ।
विस्तारं दीपशालायास्तस्मादष्टाष्टमात्रकम् ॥ ७५ ॥

मुक्त्वा मुक्त्वा यथाशोभं यथारुचि समाचरेत् ।
कोणेषु मण्डपाकारं कारयेच्छिखरं पुनः ॥ ७६ ॥

ललाटनासिकाद्वन्द्वं कोणे कोणे सलक्षणम् ।
मुखे पृष्ठे च भद्राख्या नासिका च भवेदिह ॥ ७७ ॥

अधिष्ठानोपरिष्टात् तु दण्डिकाचरणं न्यसेत् ।
बाह्यान्तरावृतिगतं सदृढीकृतदण्डिकम् ॥ ७८ ॥

तुल्यान्तरालं तन्मध्ये वेदिकाङ्घ्रिं च विन्यसेत् ।
दण्डिकाङ्घ्रेर्बहिः कार्या दी(पि)काद्यङ्कोपरि ॥ ७९ ॥

पूर्वोक्तवेदिवत् तुङ्गं तस्यां तस्यां प्रविन्यसेत् ।
तुल्यान्तरं वेदिपादान् कोणवर्जं यथा तथा ॥ ८० ॥

अष्टाङ्गुलादिविष्कम्भं कर्तव्यं दण्डिकाङ्घ्रिषु ।
अथवा भित्तिसंलग्नं विन्यस्येद् वेदिपादकान् ॥ ८१ ॥

वेदिकाघनवत् कार्यं वेदिकाङ्घ्रिगतं घनम् ।
तद्घनत्रिगुणं तारं तच्चतुर्गुणमेव वा ॥ ८२ ॥

आद्यङ्घ्र्युच्चात् तु सप्तांशं नवांशं वा द्विपांशकम् ।
त्रयोदशांशतिथ्यंशमथ सप्तदशांशकम् ॥ ८३ ॥

घनं वेद्या यवैर्वाथ सपादाङ्गुलतः क्रमात् ।
अर्धाङ्गुलविवृद्ध्या तत्पादोनत्र्यङ्गुलान्तकम् ॥ ८४ ॥

तत्समां विस्तृतिं तस्यामथवान्यप्रकारतः ।
एकादशयवं मुख्यं तस्माद् द्विद्वियवोत्तरम् ॥ ८५ ॥

त्रयोविंशत्यवान्तं वा घनं वेद्याः प्रकल्पयेत् ।
तद्घनस्य चतुर्थांशं पञ्चांशं वाधिकं ततम् ॥ ८६ ॥
ज्वालावेधं न कर्तव्यं दीपधामोत्तरस्य हि ।
तस्माज्ज्वालाबहिर्भागे वान्तरे वोत्तरं न्यसेत् ॥ ८७ ॥
दण्डिकाग्रे बाह्यगतं तद्युक्त्यान्तर्गतं तथा ।
उत्तरस्य तु विष्कम्भं पादोत्सेधेन वा पुनः ॥ ८८ ॥
पादोनत्र्यङ्गुलं वाथ सपादत्र्यङ्गुलं तु वा ।
पादोनाब्ध्यङ्गुलं कुर्यात् सपादचतुरङ्गुलम् ॥ ८९ ॥
एवं योनिप्रभेदेन कल्पयेद् वाङ्गुलात्मकम् ।
दण्डिकाबहलं कुर्यादुत्तरेण समं तथा ॥ ९० ॥
त्रिपादं वाथ वार्धं वा बहलेन समं घनम् ।
अर्धं वा पादहीनं वा दण्डिकानां विशेषतः ॥ ९१ ॥
स्वस्तिकं मकरास्यं वा सिंहेभाननमेव वा ।
दण्डिकाग्रे प्रकर्तव्यं नानाभावसमन्वितम् ॥ ९२ ॥
दण्डिकाद्यन्तरे कार्यं भूतसिंहादिमण्डितम् ।
पुष्पवल्ल्यादियुक्तं वा फलकं नाटकान्वितम् ॥ ९३ ॥
पञ्चसप्ताङ्कविश्वेशातिथिसप्तदशावृतिः ।
वेदिका स्याद् यथाशोभं परितस्तुल्यान्तरं यथा ॥ ९४ ॥
वेदिकाद्वयमध्यं तु सपाददशमात्रतः ।
पादोनसप्तमात्रान्तमर्धार्धाङ्गुलहीनतः ॥ ९५ ॥
कार्यं योनिवशादेव नान्यथा शिल्पकोविदैः ।
वेदिकादिवशे तस्या घने चोत्तरविस्तृतौ ॥ ९६ ॥

दीपसीम्नि च कार्या स्याद् योनिरेका न सङ्करा ।
तस्यां वेद्यां न्यसेद् दीपपात्रं कांस्यादिकं पुनः ॥ ९७ ॥
यावद् वेदिकयोर्मध्यं तावद् दीपान्तरालकम् ।
अर्धपङ्क्तिर्यदा दृष्टा तदा तां कोणपार्श्वयोः ॥ ९८ ॥
द्वाराणां पार्श्वयोर्वाथ यथायुक्ति परित्यजेत् ।
अन्त्यवेद्यूर्ध्वतः कार्यं तद्युक्त्या वेदिकोत्तरम् ॥ ९९ ॥
वेदिकाघनवत् कार्यं तद्घनं तच्चतुर्गुणम् ।
तारमुत्तरभूषाढ्यं वेदिकाङ्घ्रिषु विन्यसेत् ॥ १०० ॥
वेद्युत्तरान्तमथवा लुपालम्बनमिष्यते ।
उत्तरस्य तु विष्कम्भादेकद्वित्रिचतुर्गुणम् ॥ १०१ ॥
वेदिर्वेद्यास्तु संबद्धा चतुष्कोणेषु नाङ्घ्रिषु ॥ १०१½ ॥

इति शिल्परत्ने पञ्चप्राकारलक्षणं नाम
चत्वारिंशोऽध्यायः ।

---

## अथ एकचत्वारिंशोऽध्यायः ।

### अथ गोपुरम् ।

प्रतिवप्रं तु कर्तव्यं द्वारे द्वारे तु गोपुरम् ।
क्षुद्राल्पमध्यमुख्यानां धिष्ण्यानां स्वप्रमाणतः ॥ १ ॥
द्वारशोभा द्वारशाला द्वारप्रासादहर्म्यके ।
द्वारगोपुरमित्येते क्रमान्नाम्ना प्रकीर्तिताः ॥ २ ॥
एकद्वित्रितलं वा तु द्वारशोभाख्यमाचरेत् ।
द्वित्रिवेदतलं कुर्याद् द्वारशालाख्यगोपुरम् ॥ ३ ॥

त्रिवेदसायकतलं द्वारप्रासादकं तथा ।
हर्म्याख्यगोपुरं वेदपञ्चषट्तलमाचरेत् ॥ ४ ॥
द्वारगोपुरकं कुर्यात् पञ्चषट्सप्तभूमिकम् ।
अन्तर्मण्डलके द्वारशोभाख्यं स्यात् ततः क्रमात् ॥ ५ ॥
द्वारशालादयः कार्या अन्तर्हारादिकेष्वपि ।
अथवा सर्वसालेषु द्वारशोभादयस्तु वा ॥ ६ ॥
सोपपठिमधिष्ठानं विना वात्रोपपीठकम् ।
मूलप्रासादविस्तारे सप्ताष्टनवभाजिते ॥ ७ ॥
दशैकादशभक्ते वाप्येकांशरहितं ततम् ।
शोभादिगोपुरान्तानां मध्यमं विपुलं त्विदम् ॥ ८ ॥
मूलालयविशाले तु चतुष्पञ्चषडंशिते ।
सप्ताष्टांशेऽशहीनं तु विकल्पाभासयोस्ततिः ॥ ९ ॥
मूलतारत्रिभागैकमर्धं भां परिकल्पयेत् ।
त्रिभागं चतुरंशे तु गुणांशे द्वितयं तु वा ॥ १० ॥
पञ्चभागे तु वेदांशं जातिच्छन्दाख्ययोस्ततम् ।
द्विहस्तादिद्विरष्टान्तमेकहस्तविवर्धनात् ॥ ११ ॥
शोभादीनां तु विस्तारं विकल्पाभासयोर्मतम् ।
गुणहस्तं समारभ्य एकहस्तविवर्धनात् ॥ १२ ॥
तथा सप्तदशान्तं स्याच्छन्दहर्म्ये विशालकम् ।
चतुर्हस्तं समारभ्याथाष्टादशकरावधि ॥ १३ ॥
शोभादिगोपुरान्तानां जातिहर्म्ये विशालकम् ।
हस्तमानेन विस्तारमेवं वा परिकल्पयेत् ॥ १४ ॥

त्रिकराद् रुद्रहस्तान्तमधमादित्रयं त्रयम् ।
सर्वसाले सर्वहर्म्ये विस्तारं परिकल्पयेत् ॥ १५ ॥
महत्तरे तु श्रेष्ठानि मध्यमे मध्यमत्रयम् ।
क्षुद्राल्पयोः प्रशस्तं हि कन्यसत्रयगोपुरम् ॥ १६ ॥
अथवा पञ्चहस्तादि द्विद्विहस्तविवर्धनात् ।
त्रयोदशकरान्तं तु शोभाव्यासं तु पञ्चधा ॥ १७ ॥
तिथिहस्तं समारभ्य त्रयोविंशत्करावधि ।
द्वारशालाविशालं तु पञ्चधा परिकीर्तितम् ॥ १८ ॥
पञ्चविंशत्कराद् यावत्त्रयस्त्रिंशत्करं तथा ।
द्वारप्रासादविस्तारं पञ्चधा परिकल्पयेत् ॥ १९ ॥
पञ्चत्रिंशत्कराद् यावच्चित्वारिंशतिस्तथा ।
द्वारहर्म्यस्य विस्तारं पञ्चधैवं समाचरेत् ॥ २० ॥
पञ्चचत्वारिंशदादि त्रिपञ्चाशत्करान्तकम् ।
द्विद्विहस्तविवृद्धया तु पञ्चधा गोपुरे ततिः ॥ २१ ॥
गोपुराणां तु विस्तारमित्येवं बहुधोदितम् ।
विस्तारेणायतं कुर्याद् गोपुराणां विशेषतः ॥ २२ ॥
सपादं वाथ सार्धं वा पादोनद्विगुणं तु वा ।
सत्रिभागैकभागं वा सत्रिभागत्रिभागिकम् ॥ २३ ॥
द्विगुणं वा प्रकर्तव्यं विस्ताराात् सर्वगोपुरे ।
हस्तमानेन विस्तारं यदि तत्र विशेषतः ॥ २४ ॥
आयाममुक्तवत् कार्यं ह(स्त)च्छेदं विना बुधैः ।
प्रवृद्धया वात्र हान्या वा करोतु करपूर्णताम् ॥ २५ ॥

आयादिशोभनोपेतं कारयेत् करमानके ।
विस्तारं सप्तधाभज्य शोभोच्चं रुद्रभागतः ॥ २६ ॥
तारादर्धाधिकं तुङ्गं द्वारशालाख्यगोपुरे ।
सप्तभागे तु रुद्रांशं भान्वंशं (तु) तृतीयके ॥ २७ ॥
विस्तारे नवभक्ते तु मन्वंशं तुङ्गमन्यके ।
विस्ताराद्द्विगुणोत्सेधं कल्पयेद् द्वारगोपुरे ॥ २८ ॥
विस्तारायामयोर्मानसूत्रं बाह्ये विधीयते ।
जन्मतः स्तूपिकान्तं स्यादुत्सेधं गोपुरेऽखिले ॥ २९ ॥
अथवा तारमानेन तुङ्गमेवं करोत्वथ ।
सप्तांशे रुद्रभागं वा षडंशं चतुरंशके ॥ ३० ॥
पञ्चांशे सप्तभागं वा सप्तांशं वेदभागिके ।
नवभागं तु पञ्चांशे द्विगुणं वाखिलोन्नतम् ॥ ३१ ॥
विस्तारस्य त्रिभागैकं चतुर्भागैकभागिकम् ।
पञ्चभागद्विभागं वा गोपुराणां तु निर्गतिः ॥ ३२ ॥
सप्तकुड्यस्य बाह्ये तु द्वारतारमथोच्यते ।
मूलात् सार्धं सत्रिपादमथवा हस्तमानतः ॥ ३३ ॥
सार्धहस्तं समारभ्य षडङ्गुलविवर्धनात् ।
पञ्चहस्तावधिर्यावत् क्षुद्राणां द्वारविस्तृतिः ॥ ३४ ॥
त्रिहस्तं तु समारभ्य यावत्सप्तकरावधि ।
षडङ्गुलविवृद्ध्या तु मध्यमद्वारविस्तृतम् ॥ ३५ ॥
चतुर्हस्तं समारभ्य यावन्नवकरं ततिः ।
रसमात्रविवृद्ध्या तु महतेर्द्वारविस्तृतम् ॥ ३६ ॥

तारात् पञ्चांशसप्तांशं सप्तांशदशकं तथा ।
द्विगुणं वा सपादं वा सार्धद्विगुणमेव वा ॥ ३७ ॥

द्वारोत्सेधं प्रकर्तव्यमन्तर्मण्डलतः क्रमात् ।
एकत्रिशरसप्ताङ्कमात्रं नीत्वाथ दक्षिणे ॥ ३८ ॥

क्रमेण विन्यसेद् द्वारं बिम्बमध्याद् यथोचितम् ।
मृगे + + त्निरीक्ष्यैत्र(?) कर्तव्यं गोपुरं ततः ॥ ३९ ॥

लिङ्गमध्यात् तु वामेन नीत्वा वा द्वारमाचरेत् ।
तन्मध्याद् गोपुरायामं कुर्यादुभयतः समम् ॥ ४० ॥

द्वारयोगं कवाटं च कुर्यात् पूर्वोक्तमार्गतः ।
मूलाधिष्ठानपादोच्चे वेदेष्वृषिभुजङ्गमैः ॥ ४१ ॥

नन्दपङ्क्तीशमार्तण्डैर्भक्ते हित्वा तदशकम् ।
गोपुराद्यङ्गमङ्घ्रिं च कुर्याद् वा सर्वगोपुरे ॥ ४२ ॥

पादबन्धमधिष्ठानमुपपीठं तु पूर्ववत् ।
प्रवेशदक्षिणे गर्भे न्यसेदारूढभित्तिके ॥ ४३ ॥

द्वारतुङ्गपुरग्रामराजधान्यादिषूदितम् ।
करोतु वात्र विधिवत् सुराणां गोपुरेऽपि च ॥ ४४

सोपपीठमधिष्ठानपादोच्चं चोत्तरान्तकम् ।
विधायोदितमार्गेण शेषे षोढा कृते पुनः ॥ ४५

सपादांशं तु मञ्चोच्चं भागेन प्रस्तरोदयम् ।
भागेन कन्धरोत्सेधं सत्रिपादांशकं शिरः ॥ ४६

शिष्टेन तु शिखातुङ्गमिलेकतलगोपुरे ।
एवं तु द्वितलादीनां तलाधिक्यविभागतः ॥ ४७ ॥
आद्वादशतलादूह्यं सर्वमत्र विचक्षणैः ।
गोपुरव्यासपञ्चांशे गर्भागारं त्रिभागतः ॥ ४८ ॥
भागाभ्यां भित्तिविष्कम्भं विदध्यादेकभूमिके ।
द्वितले गोपुरे व्यासे गर्भे शैलाब्धिभागतः ॥ ४९ ॥
त्रिभागैर्भित्तिविष्कम्भं व्यासे रन्ध्रविभाजिते ।
अंशेन कूटविस्तारं कोष्ठमंशैस्त्रिभिस्तथा ॥ ५० ॥
कूटकोष्ठकयोर्मध्ये पञ्चांशैः पञ्जरादिकम् ।
कूटकोष्ठादिनिष्क्रान्ताद्यखिलं पूर्वमुक्तवत् ॥ ५१ ॥
व्यासे नवांशे त्रितले कूटकोष्ठादि कल्पयेत् ।
व्यासेन दशधा कृत्वा करोत्वब्धितले पुनः ॥ ५२ ॥
रुद्रांशैः शर(भौ?भू)मौ स्यात् सूर्यांशैः षट्तले तथा ।
विद्यांशैरद्रिभूमौ तु करोतु निखिलं क्रमात् ॥ ५३ ॥
गोपुराणा तु सर्वेषां कुड्यं गर्भमलिन्दकम् ।
कूटं शालां पञ्जरं च नासिकां हस्तिपृष्ठकम् ॥ ५४ ॥
करोतु मूलहर्म्यानुसारात् कुम्भलतामपि ।
मसूरकरतम्भवेदिजालकैस्तोरणादिभिः ॥ ५५ ॥
यथायुक्ति यथाशोभं युक्तमेव करोत्वतः ।
अधस्तलं द्वारतारे वेदैर्वेषुभिरंशिते ॥ ५६ ॥
एकाशरहितं वोर्ध्वतलेषु द्वारविस्तृतम् ।
सोपानं पूर्ववद् + + गर्भागारेष्वियं भिदा ॥ ५७ ॥

श्रीमन्दिरादिनामानि गोपुराणां विशेषतः।
सन्न्याकारवशाद् भूषाभेदैः संस्थानभेदतः॥ ५८॥

इति शिल्परत्ने गोपुरविधानं नाम
एकचत्वारिंशोऽध्यायः।

---

## अथ द्विचत्वारिंशोऽध्यायः।

### अथ परिवारविधानम्।

अष्टौ वा परिवाराः स्युर्द्वादशैव भवन्ति वा।
अथ षोडश वा कार्यास्तथा द्वात्रिंशदेव वा॥ १॥
द्वात्रिंशत्परिवारास्तु जातिहर्म्ये विशेषतः।
छन्दे षोडश कर्तव्याः शेषयोर्द्वादशैव वा॥ २॥
अष्टौ क्षुद्रविमानानां सर्वं सर्वेषु वाचरेत्।
वाहो विघ्नपतिर्ब्रह्मा मातरोऽथ गुहो हरिः॥ ३॥
दुर्गा निर्माल्यभुक् चाष्टौ परिवाराः प्रकीर्तिताः।
तथैव दशलोकेशा निर्माल्याशी च मातरः॥ ४॥
एते च द्वादश प्रोक्ताः परिवाराः सुरालये।
एते च विघ्नराजश्च गुहो दुर्गा हरिस्तथा॥ ५॥
स्वस्वोचितदिशि स्थाप्याः परिवारास्तु षोडश।
वास्तुप्रकरणोद्दिष्टा ईशानाद्याश्च देवताः॥ ६॥
यास्ता द्वात्रिंशदत्रोक्ताः स्थाप्याः स्युस्तत्क्रमेण हि।
एवं वान्यमते कार्याः परिवारा विशेषतः॥ ७॥

क्षुद्राभासविकल्पेषु चाष्टौ छन्देऽपि षोडश ।
जात्ये भवन्ति द्वात्रिंशत् तत्पक्षे स्थापयेत् क्रमात् ॥ ८ ॥
कल्पयेदन्तहारायां परिवाराष्टकं पुनः ।
षोडशं परिवाराणां मध्यहारावधौ भवेत् ॥ ९ ॥
प्राकारे तु चतुर्थे तु द्वात्रिंशत्परिवारकः ।
तत्तत्प्राकारकुड्ये वा सालकुड्याश्रयं तु वा ॥ १० ॥
मुखायामं विना क्षेत्रे चतुरश्रकृते सति ।
नवभक्ते तु तन्मध्ये कल्पयेन्मूलमन्दिरम् ॥ ११ ॥
प्राच्यां वै वाहनस्थानमनलश्चाग्निगोचरे ।
मृगो वाप्यनलस्थाने याम्ये वै मातरः स्मृताः ॥ १२ ॥
एकबेरस्तु वा याम्ये नैर्ऋत्यां तु विनायकः ।
कुमारो वारुणे स्थाप्यो ज्येष्ठा वै वायुगोचरे ॥ १३ ॥
सौम्ये तु केशवस्थानं तत्र कात्यायनी तु वा ।
भास्करः शाङ्करे देशे परिवाराष्टकं त्विदम् ॥ १४ ॥
बीजे तु पञ्चपञ्चांशे बाह्ये तत्पूर्वकोष्ठतः ।
इन्द्रश्चाग्निर्निवह्नी च पितरश्च यमस्तथा ॥ १५ ॥
रोहिणी निर्ऋतिश्चैव चाप्सरोगण एव च ।
वरुणोऽप्यृषयश्चैव वायू रुद्रस्तथैव च ॥ १६ ॥
सोमश्च क्षेत्रपालश्च शङ्करश्च दिवाकरः ।
एवं षोडश चेत् कार्याः परिवारोत्तमास्त्विह ॥ १७ ॥
चतुर्थसालबीजे तु नन्दनन्दविभाजिते ।
बाह्यावृतौ गताः पूर्वकोष्ठात् प्रादक्षिण्यक्रमात् ॥ १८ ॥

गौरी शर्वस्तथा ब्रह्मा शिवस्तस्माद् भृगुस्तथा ।
ईशानः काशिकश्चैव एकाक्षो विघ्न एव च ॥ १९ ॥
सरस्वती तथा लक्ष्मीश्चैकरुद्रस्तथैव च ।
पशुपतिर्वसुश्चैव महादेव + + + + ॥ २० ॥
धनदो रुद्रकालाग्नी श्रीकण्ठो नागदेवताः ।
भीमश्च पृथिवी चैव शिखण्डी च मरुत् तथा ॥ २१ ॥
उग्रश्च + + रश्चैव द्वात्रिंशत्परिवारकाः ।
अथवा पृथिवीस्थाने गौरी स्थाप्या तथैव च ॥ २२ ॥
गौरीस्थाने न्यसेत् पृथ्वीमन्यत् पूर्वोदितक्रमात् ।
अभ्यन्तराननाः सर्वे स्थापनीया विशेषतः ॥ २३ ॥
कर्णकांशगता देवाः प्राचीपश्चिमसंमुखाः ।
इन्द्रानलयमाशास्थाः पश्चिमाभिमुखस्थिताः ॥ २४ ॥
पितृवारुणवायुस्थाः कुर्यात् प्रागाननास्तथा ।
विष्णुश्चेत् प्राङ्मुखः सौम्ये दुर्गा चेद् दक्षिणानना ॥ २५ ॥
मातरः सौम्यवक्त्रास्तु वीरेशः पश्चिमाननः ।
मातृवामस्थविघ्नेशो भवेत् प्रागाननस्तथा ॥ २६ ॥
आदौ वा द्वित्रिसाले वा निर्माल्याशीशगोचरे ।
दक्षिणाभिमुखो वाथ पश्चिमाभिमुखोऽथवा ॥ २७ ॥
मूलगेहात् त्रिदण्डे वाप्यर्धयुक्तत्रिदण्डके ।
तयोर्मध्येऽष्टधा भक्ते तत्तदंशावसानके ॥ २८ ॥
नवधा वाहनस्थानं तत्पीठावधि कारयेत् ।
बलिपीठाद् वाथ निष्क्रान्तिर्गोपुराद् वा यथोचितम् ॥ २९ ॥

वृषस्थानं तु पुरतः स्यादाग्नेय्यां महानसम् ।
मातॄणां तु यमोपान्ते गजवक्त्रस्य नैर्ऋते ॥ ३० ॥
वारुणे वासुदेवस्य स्कन्दस्य तदनन्तरम् ।
वायव्यामथ वैशान्यामुमादुर्गालयः स्मृतः ॥ ३१ ॥
उत्तरे धनदस्य स्याद् गोष्ठागारं तु शूलिनि ।
मातृपीठं यमाद् बाह्ये मृगे शास्तारमाचरेत् ॥ ३२ ॥
आर्या च वायुभागे तु फल्लाटे षण्मुखं तथा ।
सोमस्य बाह्ये धनदः निर्माल्याशी तथादितौ ॥ ३३ ॥
ईशेन्द्रमध्ये धातुः स्याद् वृत्तस्यैशेऽथवा पुरः ।
अग्निगोपुरयोर्मध्ये धान्यानामिति केचन ॥ ३४ ॥
मध्ये तु वह्निमातॄणां स्नानकार्यगृहं स्मृतम् ।
मठस्तु याम्ये बाह्ये स्यात् पुष्पस्य यमविघ्नयोः ॥ ३५ ॥
रक्षोब्धिमध्ये शास्त्राणां गोशाला वारुणे बहिः ।
वारुण्यां शयनस्थानं ज्येष्ठायां वायुदक्षिणे ॥ ३६ ॥
विद्यापीठं भवेन्मुख्ये पर्जन्ये क्षेत्रपस्य तु ।
ईशेऽन्तश्चण्डनाथस्य रवीणां तु विधेर्बहिः ॥ ३७ ॥
लोकेशानां स्वस्वदिक्षु चेन्द्राग्न्योर्मध्यमेऽश्विनौ ।
बहिर्द्वितीयहारायां विश्वेषां यमरक्षसोः ॥ ३८ ॥
शास्ता च रक्षोदिग्भागे भद्रकाली तथा बहिः ।
रक्षोवारुणयोर्मध्ये शेषनागालयं स्मृतम् ॥ ३९ ॥
वसूनामम्बुमरुतो मुनीनां वायुसोमयोः ।
सोमेशमध्ये रुद्राणां क्रमेणैवं प्रकल्पयेत् ॥ ४० ॥

यदिङ्मुखो भवेद् देवस्तदग्रे वाहनध्वजम्।
इन्द्रादारभ्य लोकेशान् न्यस्येद् देवप्रदक्षिणात् ॥ ४१ ॥
सर्वत्र कल्पयेद् देवे प्रनालमपि चोत्तरे।
अग्निगोपुरयोर्मध्ये धनधान्यगृहं भवेत् ॥ ४२ ॥
याम्ये मज्जनशाला स्यात् तत्रस्थं पुष्पमण्डपम्।
नैर्ऋतं स्थानमाश्रित्य कुर्यादायुधमण्डपम् ॥ ४३ ॥
वारुणे वायुदेशे वा शयनस्थानमिष्यते।
सौम्ये देशे प्रकर्तव्यं धर्मश्रवणमण्डपम् ॥ ४४ ॥
ईशे वापिं च कूपं च कुर्यात् तत्रापवत्सके।
ईशगोपुरयोर्मध्ये वाद्यस्थानं प्रकीर्तितम् ॥ ४५ ॥
आरादीशे विमानस्य कुर्यान्निर्माल्यधारिणम्।
कूपं चारामकं चैव दीर्घिका च सुरालये ॥ ४६ ॥
कुत्रापि न निषिध्यन्ते तस्मात् सर्वत्र सन्तु ते।
परिचारकदासीनां स्थानं स्यात् परितो बहिः ॥ ४७ ॥
गुरोर्मठं भवेद् याम्ये पूर्वस्मिन् वा समाचरेत्।
वैनतेयं मुखे कुर्याद् वैष्णवेऽग्नौ गजाननम् ॥ ४८ ॥
संमुखे स्थापयेच्चक्रं गरुडं तत्प्रदक्षिणे।
शङ्खं वामे बहिः कुर्यात् सूर्याचन्द्रमसौ पुनः ॥ ४९ ॥
गोपुरद्वारपार्श्वस्थौ पूर्वभागे विशेषतः।
बह्मौ वा पावने शेषः पश्चाद्भागेऽपि संमुखः ॥ ५० ॥
आदित्यश्च भृगुश्चैवाप्यश्विनी च सरस्वती।
पद्मा च पृथिवी चैव मुनयः सचिवस्तथा ॥ ५१ ॥

द्वारपालकमध्यादिष्वन्तराले प्रकीर्तिताः ।
चण्डप्रचण्डरथनेमिसुपाश्वजन्यं
दुर्गागणेशरविचन्द्रमहानुभावाः ।
सर्वेश्वरः सुरपतिश्च तथा दशैते
प्राकारमञ्चमुखगोपुरकल्पनीयाः ॥ ५२ ॥
एवं स्वस्वागमोक्तानां तत्तत्स्थाने विशेषतः ॥ ५३ ॥
परिवारविशेषाणां प्रतिमामथ विन्यसेत् ।
करोतु सदनं तत्र प्रतिमा कारिता यदि ॥ ५४ ॥
पीठश्चैव कर्तव्यमिति वा नियमो न वा ।
स्थिते देवे स्थितास्ते स्युः परिवारास्तथासिते ॥ ५५ ॥
निषण्णाः शयनेऽपि स्युरिति प्राह पितामहः ।
पीठं चेत् परिवाराणां तारमर्कद्वयाङ्गुलम् ॥ ५६ ॥
तदर्धमुच्छ्रयं तस्य मेखलात्रयसंयुतम् ।
शिलाभिर्वेष्टकाभिर्वा सुधया वा प्रकल्पयेत् ॥ ५७ ॥
अथ तत्तद्बलेः कल्पगदिता देवताः क्रमात् ।
तत्तत्स्थानेषु वा कल्प्याः स्वस्वार्चनविधीरिताः ॥ ५८ ॥
परिवारबिम्बदैर्घ्यं पूजांशद्विगुणं शिवे ।
अन्येषां स्वस्वबिम्बोच्चद्विगुणं वा प्रकल्पयेत् ॥ ५९ ॥
अध्यर्धं वा तत्समं वा कारयेल्लक्षणान्वितम् ।
मूले हर्म्यत्रिपादं वा मूलार्धं वा तदर्धकम् ॥ ६० ॥
गर्भगेहसमं वाथ गर्भार्धं वा त्रिपादकम् ।
एकद्वित्रिचतुष्पञ्चषट्सप्तकरमेव वा ॥ ६१ ॥

शान्तिकादिषु यन्मूलगेहं तत्र तदेव हि ।
महाप्रासादके मूले परिवारालयं पुनः ॥ ६२ ॥
आभाससदनोक्तेन मार्गेणैव समाचरेत् ।
गौर्यास्तु मालिकां वाथ विमानं वा प्रकल्पयेत् ॥ ६३ ॥
अन्येषामेव देवानां मण्डपाकृति वा भवेत् ।
परिवारालये द्वारं कारयेत् पूर्वमुक्तवत् ॥ ६४ ॥
त्रिवर्गमण्डपाकारं चतुर्द्वारसमन्वितम् ।
उक्षादिवाहनाकारं शेषाणां तु यथोचितम् ॥ ६५ ॥
मूलद्वारसमः श्रेष्ठस्तत्त्रिपादं तु मध्यमः ।
अर्धहीनः कनिष्ठः स्याद् ऋषभो लक्षणान्वितः ॥ ६६ ॥
पादाध्यर्धसमुत्सेधः सपादो द्विगुणोऽपि वा ।
मातॄणां कथ्यते सद्म समासेन मयाधुना ॥ ६७ ॥
द्विचत्वारिंशद्धस्तं तु पञ्चभौममथोत्तमम् ।
त्रिंशद्धस्तं त्रिभौमं तु मध्यमं तदुदाहृतम् ॥ ६८ ॥
एवं विंशतिहस्तं तु कनिष्ठं त्वेकभूमिकम् ।
प्रासादाद् दक्षिणे कुर्याद् द्विपदे मातृमण्डपम् ॥ ६९ ॥
आयामं द्विपदं कुर्यात् पदभागेन विस्तृतम् ।
भूतांशैर्विभजेत् पश्चाद् गुणैर्भवनमिष्यते ॥ ७० ॥
अलिन्दं तत्र भागाभ्यां शिष्टाभ्यां परिकल्पयेत् ।
तस्मिन्नेव तु भूतांशैस्तुरीयं विभजेत् पुनः ॥ ७१ ॥
अन्तरं तेन मानेन पदद्वन्द्वं समीरितम् ।
मातॄणां गर्भगेहे तु पदभागीकृते पुनः ॥ ७२ ॥

पृष्ठगां भित्तिमाश्रित्य मातॄणां स्थानमुत्तमम् ।
शक्तिभागीकृते दीर्घे बाह्याद्याः पदमध्यगाः ॥ ७३ ॥
सिंहयोनिगतं कुर्यान्मन्दिरं तदुदङ्मुखम् ।
अथवा नाहमानार्धे चतुश्चत्वारिंशदंशिते ॥ ७४ ॥
अष्टाविंशतिभिस्तारं दीर्घे षोडशभिस्तथा ।
अथवा मण्डपाध्यायसमुक्तं वा समाचरेत् ॥ ७५ ॥

इति शिल्परत्ने परिवारविधानं नाम
द्विचत्वारिंशोऽध्यायः ।

---

अथ त्रिचत्वारिंशोऽध्यायः ।
अथ बलिपीठलक्षणम् ।

गोपुराद् बाह्यतः कुर्याद् बलिपीठं सलक्षणम् ।
प्रासादार्धाद् बहिः कृत्वा षट्सप्तवसुदण्डकम् ॥ १ ॥
दशकं वा द्वादशकं मनुदण्डमथापि वा ।
अथ षोडशदण्डं वाप्यष्टादशकमेव वा ॥ २ ॥
अथवान्यप्रकारेण पीठस्थानं विधीयते ।
त्रिसालके चतुष्पञ्चसालके वा सुरालये ॥ ३ ॥
अग्रायामस्य मध्ये स्याद् बलिपीठं सलक्षणम् ।
प्रासादमध्याद् बहिरग्रतो गते
तदुत्तरोत्थे सदलद्विसंख्यके ।
दण्डे त्रिसार्धत्रिशराङ्गसप्तके
स्वधाम्नि कुर्याद् बलिपीठिकां तथा ॥ ४ ॥

दण्डसीमा भवेत् तत्र विष्कम्भाभ्यन्तरे तथा ॥ ५ ॥

ब्रह्मसूत्राद् गतिस्तत्र बलिपीठस्य वामतः ।
एकद्वित्र्यङ्गुलैर्वाथ चतुरङ्गुलतोऽपि वा ॥ ६ ॥

गर्भद्वारप्रतिसमं बाह्यद्वारस्य वा पुनः ।
प्रासादस्य प्रतिसमं बलिपीठसमुच्छ्रयम् ॥ ७ ॥

पूजापीठसमं *तदङ्घ्रिरहितं गर्भप्रतिप्रोन्मितं
प्रासादप्रतिसम्मितं च बलिपीठेऽब्जान्तिमाभ्युच्छ्रयम् ।
उत्सेधे दशधा कृते सति निजेष्टे पीठिकाविस्तृतिं
सप्तांशैर्विदधीत मूलनिलयौचित्यात् तदङ्गक्रियाम् ॥ ८ ॥

अन्तरालत्रिपादं वा प्रासादार्धमथापि वा ।
गर्भार्धं वाथ विस्तारं गर्भगेहसमं तु वा ॥ ९ ॥

तत्पादोनं तु वा तारं बलिपीठेष्वथापि वा ।
एकहस्तं द्विहस्तं वा त्रिहस्तं वा समाचरेत् ॥ १० ॥

मूलद्वारोच्छ्रयसमं तत्त्रिपाददलं तु वा ।
अथवा द्वारविस्तारसमं वा द्विगुणं तु वा ॥ ११ ॥

त्रिगुणं वाथ विस्तारमधमादिक्रमेण तु ।
एतेषां बलिपीठानां तुङ्गं तारसमं तु वा ॥ १२ ॥
पीठन्यासे तु षट्सप्तवसुनन्दविभाजिते ।
एकांशरहितं शेषं विदुस्तदुपपीठकम् ॥ १३ ॥

* 'षडंशरहितम्' इति तन्त्रसमुच्चयपाठः.

अथावयवाः —

पृथ्व्या पादुकमंशतो जगतिकां वेदैर्गुणैः कैरवं
तत्पट्टीगलकम्बुनिद्रवमपि क्ष्मापङ्क्तिभूमीन्दुभिः ।
कुर्वीत ज्वलनैः कपोतमिलयाग्रे पट्टिकां पङ्कजं
नेत्राभ्यामपि सप्तविंशतिविभक्ते पीठिकाभ्युच्छ्रये ॥ १५ ॥

पीठोच्चे रदभेदिते सदलभूसार्धेषुबाणेन्दुभू-
दस्राः पादुकजागते कुमुदतत्पट्टयन्तरीषु प्रतौ ।
अंशा वेदयुगानि वेदिगलयोः सार्धौ वलभ्युत्तरै-
र्दस्रौ चेति कपोतके शशिकराः स्युः पट्टिकापद्मयोः ॥

तत्तुङ्गे शकरीद्वन्द्वभक्ते द्व्यंशेन पादुकम् ।
षडंशैर्जगतीं कुर्याद् बाणांशैः कुमुदोच्छ्रयम् ॥ १६ ॥

कम्पमेकांशतः कुर्यात् कण्ठं वेदैरुदाहृतम् ।
ऊर्ध्वकम्पं शिवांशेन महापट्टिं गुणांशतः ॥ १७ ॥

पद्मतुङ्गं द्विभागं तु द्विभागं कर्णिकोदयम् ।
महापट्टिं द्विभागेन यदि वा कर्णिकां त्रिभिः ॥ १८ ॥

अथवोपान + + + महापट्टिं द्विभागतः ।
पद्मोच्चं पञ्चभागेन शेषं पूर्ववदेव हि ॥ १९ ॥

अथवा पीठिकोत्सेधेऽप्याद्यङ्गप्रक्रियोक्तवत् ।
उपानादिप्रस्तरान्तान्यङ्गान्यत्र समाचरेत् ॥ २० ॥

ततः कुर्यात् पीठिकोर्ध्वे पीठोत्सेधत्रिभागतः ।
पद्मं पद्मस्य विस्तारं तत्तद्योग्यं समाचरेत् ॥ २१ ॥

पद्मतारयुगांशं स्यात् कर्णिकायास्तु विस्तृतिः ।
वेशनिष्क्रमणादीनि पट्टिकाकन्धरादिषु ॥ २२ ॥
आद्यङ्गोक्तेन मार्गेण कुर्यात् तद्बलिविष्टरं ।
पीठाकारं युगाश्रं वा चाष्टाश्रं वा कलाश्रकम् ॥ २३ ॥
वृत्ताकारं तु वा कुर्याद् द्रव्यभेदोऽत्र कथ्यते ।
भवन्ति लोहपाषाणसुधा वा मृत्तिकाथवा ॥ २४ ॥
इष्टका वा साधनानि बलिपीठविधाविति ।

पक्षान्तरम् —

अथोच्चे षोडशांशे तु कुर्याद् भागेन पादुकम् ॥ २५ ॥
वेदैर्जगतिकास्तद्वत्कुमुदं पट्टमंशतः ।
अष्टांशोनं तु वा कुर्यात् तत्त्र्यंशैः कर्णिकाततिम् ॥ २६ ॥
पीठाकारचतुर्थांशं पद्मतुङ्गमुदाहृतम् ।
सभद्रं वा विभद्रं वा सोपपीठमथापि वा ॥ २७ ॥
अलङ्कारैर्विमानोक्तैर्युक्तं वा बलिविष्टरम् ।
षोडशांशीकृते तुङ्गे पादुकं त्वेकभागतः ॥ २८ ॥
वेदैर्जगतिकास्तत्र कुमुदं तु त्रिभागतः ।
पट्टमंशेन रामांशैर्गलं कम्पं तु भागतः ॥ २९ ॥
कपोतोच्चं द्विभागेन पट्टमंशेन कारयेत् ।
पीठव्यासत्रिपादं वाप्यर्धं वाब्जस्य विस्तृतम् ॥ ३० ॥
तत्त्रिभागं कर्णिकायास्तुङ्गं तद्विस्तृतार्धतः ।

अथान्यथा —

उत्सेधे सप्तभागे तु पञ्चभागस्तु विस्तृतम् ॥ ३१ ॥

उच्छ्रयैकोनविंशांशे सार्धभागेन पादुकम् ।
चतुर्भिर्जगतीं कुर्यात् कुमुदं सार्धलोकतः ॥ ३२ ॥
एकांशं पट्टिकामानं त्रिभागं गलमेव च ।
सवलभ्युत्तरं सार्धं द्विभागं तु कपोतकम् ॥ ३३ ॥
अर्धांशं पट्टिकामानं पद्मोच्चं तु द्विभागतः ।
मध्यपीठमिदं ख्यातं सर्वदेवालयोचितम् ॥ ३४ ॥
उत्सेधे नवभागे तु पञ्चभागेन विस्तृतम् ।
तदुच्चे चतुर्विंशांशे सार्धांशं पादुकोन्नतम् ॥ ३५ ॥
चतुरंशं जगत्युच्चं सार्धाग्न्यंशं तु कैरवम् ।
रामांशं प्रस्तरोत्सेधं तत्समं वेदिकोदयम् ॥ ३६ ॥
पादोत्सेधं त्रिभिर्भागैस्त्रिपादं तूत्तरोदयम् ।
तत्समं तु वलभ्युच्चं द्विभागं तु कपोतकम् ॥ ३७ ॥
अर्धांशं पट्टिकामानं पद्मोत्सेधं द्विभागतः ।
श्रीपीठाख्यमिदं पीठं मुख्यमाहुर्ऋषीश्वराः ॥ ३८ ॥
उत्सेधार्धं तु विस्तारं पञ्चांशत्रितयं त वा ।
सप्तविंशतिधा तुङ्गे कृते द्वाभ्यां तु पादुकम् ॥ ३९ ॥
सार्धवेदांशकं वप्रं चतुरंशं तु कैरवम् ।
प्रस्तरं सार्धरामांशं तत्समं वेदिकोच्छ्रयम् ॥ ४० ॥
त्रिभागं गलमानं तु सवलभ्युत्तरोन्नतम् ।
सार्धं द्व्यर्धं कपोतोच्चं कारयेत् पट्टमर्धतः ॥ ४१ ॥
पङ्कजोच्चं द्विभागेन रुद्रपीठमिदं स्मृतम् ।
उत्सेधे दशभागे तु सप्तभागं तु विस्तृम् ॥ ४२ ॥

तुङ्गे दन्तविभक्ते तु पादुकं सार्धभागतः ।
सार्धबाणैर्जगत्युच्चं पञ्चांशं कुमुदोन्नतम् ॥ ४३ ॥
एकांशं पट्टिकोत्सेधमन्तरीं च शिवांशतः ।
प्रत्युत्सेधं द्विभागेन वेदैस्तद्वेदिकोन्नतम् ॥ ४४ ॥
ग्रीवोच्चं तत्समं कुर्यात् सपादांशकमुत्तरम् ।
तत्समं तु वलभ्युच्चं सार्धद्व्यंशं कपोतकम् ॥ ४५ ॥
आलिङ्गपट्टमर्धेन द्व्यंशार्धं पङ्कजोन्नतम् ।
सिंहव्यालादिसंयुक्तं प्रस्तरं कारयेत् पुनः ॥ ४६ ॥
प्रतेर्मुखं च कर्तव्यं कपोते नासिकाष्टकम् ।
कपोतदैर्घ्यदिग्भागं नासिकाया विशालकम् ॥ ४७ ॥
सद्वारं वाथ विद्वारं श्रीभद्रमिति कीर्तितम् ।
उत्सेधदशसप्तांशं बलिपीठस्य विस्तृतम् ॥ ४८ ॥
पञ्चत्रिंशांशके तुङ्गे द्वाभ्यां पादुकमाचरेत् ।
षडंशं जगतेरुच्चं पञ्चांशं कुमुदोन्नतम् ॥ ४९ ॥
चतुर्भागं प्रस्तरोच्चं सिंहाद्यैस्तत्र भूषयेत् ।
वेदिकोच्चं चतुर्भागैः कृतशैवलकादिकम् ॥ ५० ॥
गलं वेदांशकं व्यर्धं वलभ्यन्वितमुत्तरम् ।
वलभौ भूतहंसाद्यैर्भूषयेत् सुमनोहरम् ॥ ५१ ॥
कपोतोच्चं त्रिभागं तु मुक्तादामादिभूषितम् ।
विशेषादष्टनासाढ्यामर्धांशेनाब्जपट्टिकाम् ॥ ५२ ॥
सार्धद्विभागं पद्मोच्चं चतुर्द्वारसमन्वितम् ।
पञ्जरादिसमायुक्तं सर्वतोभद्रनामकम् ॥ ५३ ॥

तुङ्गेन नवपञ्चांशं कुर्यात् पीठस्य विस्तृतम् ।
सप्तत्रिंशत्कृते तुङ्गे द्विभागं पादुकं विदुः ॥ ५४ ॥
पञ्चांशं जगतेरुच्चं चतुरंशं तु कैरवम् ।
तथैव प्रस्तरं वेदिकोच्चं चैव तथैव च ॥ ५५ ॥
पञ्चांशं तु गलं वेदभागं वलभिकोत्तरम् ।
तत्समं तु कपोतोच्चं पद्मपट्टमिलांशकम् ॥ ५६ ॥
पद्मतुङ्गं तु वेदांशमिदं श्रीविजयाभिधम् ।
तुङ्गसप्तांशवेदांशपीठतारमुदाहृतम् ॥ ५७ ॥
एकोनत्रिंशता तुङ्गे कृते पादुकमंशतः ।
चतुरंशैर्जगत्युच्चं कुमुदं तु त्रिभागतः ॥ ५८ ॥
प्रस्तरं वेदिकोत्सेधं त्रित्रिभागैरुदाहृतम् ।
गलमानं चतुर्भागं सवलभ्युत्तरं त्रिभिः ॥ ५९ ॥
कपोतोच्चं युगांशं तु पट्टमर्धांशतस्तथा ।
पद्मतुङ्गं त्रिभिर्भागैः श्रीच्छन्दं तत् प्रकीर्तितम् ॥ ६० ॥
तुङ्गपञ्चांशरामांशं विस्तारं तुङ्गमानके ।
त्रयस्त्रिंशद्विभागे तु द्विभागं पादुकोन्नतम् ॥ ६१ ॥
चतुर्भिर्जगतीं कुर्यात त्रिभागं कुमुदोन्नतम् ।
प्रस्तरं तत्समं कुर्यात् त्रिभागं वेदिकोन्नतम् ॥ ६२ ॥
गलमानं तु वेदांशं सवलभ्युत्तरं त्रिभिः ।
कपोतोच्छ्रयमब्ध्यंशं पट्टमर्धेन कारयेत् ॥ ६३ ॥
पङ्कजोच्चं त्रिभागार्धं श्रीरुद्राविजयाभिधे ।
तुङ्गार्धं विस्तृतं कुर्यात् तुङ्गे द्वात्रिंशधा कृते ॥ ६४ ॥

पादुकं सार्धभागेन ततः कुर्याद् यथाक्रमम् ।
वप्रं कुम्भं प्रस्तरं च वेदिकां गलमेव च ॥ ६५ ॥
प्रत्येकं चतुरंशैस्तु सवलम्युत्तरं त्रिभिः ।
कपोतोच्चं चतुर्भागैः पद्मपट्टं दलांशतः ॥ ६६ ॥
त्रिभागेनाम्बुजं कुर्यात पीठे साधारणाभिधे ।
तुङ्गेऽष्टांशे सार्धवेदैरंशैस्तारमुदाहृतम् ॥ ६७ ॥
त्रयस्त्रिंशदंशे तुङ्गे तु द्वाभ्यां पादुकमाचरेत् ।
वप्रादि तत्कपोतान्तं यथा साधारणे तथा ॥ ६८ ॥
अंशेन पद्मपट्टं तु त्रिभिरम्बुजमानकम् ।
कारयेन्मतिमानत्र श्रीकेशे बलिविष्टरे ॥ ६९ ॥
तुङ्गे सप्तांशके तारं सार्धवेदांशभागतः ।
चतुर्विंशांशिते तुङ्गेऽप्येकांशं पादुकं विदुः ॥ ७० ॥
जगत्यादिकपोतान्तं त्रित्रिभागैः पृथक् पृथक् ।
पट्टमर्धेन पद्मं तु कुर्यादध्यर्धमानकम् ॥ ७१ ॥
श्रीवज्रमिति विख्यातं बलिपीठमिदं त्वपि ।
सप्तांशपञ्चकं तारं तुङ्गे नक्षत्रभाजिते ॥ ७२ ॥
अध्यर्धं पादुकं विद्याद् वप्रं सार्धाब्धिभागतः ।
कैरवोच्चं तु वेदांशैः प्रस्तरं तु त्रिभागतः ॥ ७३ ॥
तत्समं वेदिकामानं त्र्यंशार्धं कन्धरोच्छ्रयम् ।
सार्धद्विभागमानेन भूतमालान्वितोत्तरम् ॥ ७४ ॥
कपोतं तत्समं कुर्यात् पद्मपट्टं दलांशतः ।
अम्बुजोच्चं द्विभागेन सर्वालङ्कारसंयुतम् ॥ ७५ ॥

पूजितं सर्वदेवेषु श्रीकरं बलिविष्टरम् ।
पीठानि तत्पार्षदानामष्टकानि यथोचितम् ॥ ७६ ॥
इन्द्रादिदिक्षु कर्तव्यान्यन्यपीठोक्तवर्त्मना ।
स्वपादुकाद् बहिष्ठानि तले वा तत्र युक्तितः ॥ ७७ ॥
उपपीठोपरिष्टाद् वा कारयेद् बुद्धिमत्तमः ॥ ७७½ ॥

इति शिल्परत्ने बलिपीठलक्षणं नाम
त्रिचत्वारिंशोऽध्यायः ।

---

## अथ चतुश्चत्वारिंशोऽध्यायः ।

### अथ ध्वजलक्षणम् ।

मध्यहारादिमर्यादापर्यन्तस्थानतस्तथा ।
बलिपीठाद् बहिः कार्यं ध्वजस्तम्भं च लक्षणैः ॥ १ ॥
शिलया दारुणा वाथ वृत्ताकारमथापि वा ।
षोडशाश्रं तु वाष्टाश्रं कुम्भमध्यादिसंयुतम ॥ २ ॥
फलकोपरि विन्यस्येत् स्वस्ववाहनविग्रहम् ।
जन्मादिस्तूपिपर्यन्तविमानोच्छ्रयमानतः ॥ ३ ॥
शक्तिस्तम्भसमुत्सेधमर्धं पादोनमेव वा ।
तत्समं द्विगुणं वाथ कुर्यात् क्षुद्राल्पभेदतः ॥ ४ ॥
प्रासादमानत्रिगुणं चतुर्गुणमथापि वा ।
प्रासादादग्रतो नीत्वा स्थाप्यः पञ्चगुणं तु वा ॥ ५ ॥
द्वारोच्चाब्धिरसा(ष्ट)तुङ्गबहलं तस्मात् कृशं ह्रासितं
द्वारद्वादशकं विमुच्य पुरतः प्रासादतः स्थापयेत् ।

द्वाराणां दशभिश्च सप्तदशभिः पञ्चत्रिकैरुच्छ्रयं
विंशद्भिर्निजबाहुदण्डसहितं वेद्यन्वितं च ध्वजम् ॥ ६ ॥
शततालसमायामं ध्वजदण्डं करोतु वा ।
अशीतितालमानं वा प्रासादोच्छ्रयमेव वा ॥ ७ ॥
गोपुरोत्सेधमानं वा भेदच्छेदविवर्जितम् ।
अपक्कोडव्रणं स्निग्धं ग्रन्थिरन्ध्रविवर्जितम् ॥ ८ ॥
एवं लक्षणसंयुक्तं ध्वजदण्डमिहोच्यते ।
पञ्चहस्तप्रमाणं वा सप्तहस्तमथापि वा ॥ ९ ॥
नवद्वादशहस्तं वा कुर्याद् दण्डानुसारतः ।
ध्वजयष्टिं ध्वजस्याप्राग्नीत्वाधोद्वारमानकम् ॥ १० ॥
संस्थाप्य सम्मुखमदक्षिणपार्श्वलम्बि-
घण्टास्रगुज्ज्वलपताकमभीष्टपीठे ।
तत्केतुदण्डमभिक्लृप्तमनुप्रतिष्ठं
सम्भाव्य साध्वभिमृशन् प्रजपेद् ध्रुवाणुम् ॥ ११ ॥
सुषिरत्रयसंयुक्तं वामभागे सुयोजयेत् ।
सुषिरस्य प्रमाणं हि प्रतिमाकारमानतः ॥ १२ ॥
घण्टापताकामालादिबन्धनार्थमिदं स्मृतम् ।
पटस्य लक्षणं मध्ये ध्वजदण्ड(स)मायतम् ॥ १३ ॥
अथवा हस्तमानं वा तदायामदलं ततः ।
दुकूलपट्टं देवाङ्कं चित्रक्षौममथापि वा ॥ १४ ॥
अथ कार्पासकृतं वापि पटं कुर्यात् सलक्षणम् ।
चित्रितं कारयेच्छत्रध्वजचामरकादिभिः ॥ १५ ॥

प्रतिष्ठाप्य ध्वजस्योर्ध्वे गरुडं वैष्णवे गृहे ।
गगने गमनारूढं पक्षविक्षेपणान्वितम् ॥ १६ ॥
कुञ्चितं वामपादं तु दक्षिणं पृष्ठतः स्थितम् ।
किञ्चिदायतवृत्ताक्षं नीलनासाग्रमेव च ॥ १७ ॥
शान्तं च हसितं देवं मकुटादिविराजितम् ।
तप्तकाञ्चनवर्णाभं कपिलाक्षं बृहद्भुजम् ॥ १८ ॥
हृदये वन्दितकरं भक्त्या दार्वादिकल्पितम् ।
द्वारोच्चमानहस्ते तु स्थापयेद् ध्वजमुत्तमम् ॥ १९ ॥
बलिपीठस्य बाह्ये तु ध्वजस्थानं विधीयते ।
देवदारुश्च खदिरोऽरिष्टं क्रमुकमेव च ॥ २० ॥
वेणुर्वा नालिकेरो वा वृक्षः स्याद् ध्वजदण्डके ।
द्वारोत्सेधसमोत्तुङ्गः कुट्टिमं तत्समं तु वा ॥ २१ ॥
सपादं वार्धपादोन + + + द्विगुणं तु वा ।
द्विगुणं वास्य विस्तारमाकृत्याद्यङ्गवत् स्मृतम् ॥ २२ ॥
मञ्चकं पादबन्धं वा सोपपीठमथापि वा ।
अथवान्यप्रकारेण ध्वजपीठं प्रकल्पयेत् ॥ २३ ॥
एकहस्तं समुत्सेधं मेखलात्रितयान्वितम् ।
तुङ्गे षडंशिते भागं मेखलाद्यागलं त्रिभिः ॥ २४ ॥
तदूर्ध्वमेखला चैकेनान्त्या च स्यात् तथांशतः ।
अधोभागेन वा कुर्यान्मेखलात्रितयं पुनः ॥ २५ ॥
तत्कुट्टिमं तु तुर्यश्रं तत्तुङ्गस्य त्रिभागतः ।
तदूर्ध्वपद्मं तत्कर्णिकायाः स्यान्निर्गतो ध्वजः ॥ २६ ॥

अथवा सर्वदेवानां वेणुना क्रमुकेण वा ।
कुर्यादग्रे ध्वजं तत्तद्योग्यायामसमन्वितम् ॥ २७ ॥

अप्रधानध्वजस्तम्भा वैणवाः स्युस्तथाखिले ।
तद्विमानोत्तरायामतुल्यायामाः प्रकीर्तिताः ॥ २८ ॥

इति शिल्परत्ने ध्वजलक्षणकथनं नाम
चतुश्चत्वारिंशोऽध्यायः ।

## अथ पञ्चचत्वारिंशोऽध्यायः ।

### अथ सन्धिः ।

द्रव्याणां दारुमुख्यानां बलायामादिसिद्धये ।
स्थितानां शयितानां च सन्धिकर्म निगद्यते ॥ १ ॥
बाह्यान्तं द्रव्ययोगेन यत्तत् स्यात् पार्श्वसन्धिकम् ।
अथोर्ध्वद्रव्यसंयोगादाधाराधेयभागतः ॥ २ ॥
दार्विष्टकाशिलादीनि तत्तद्द्रव्याणि सर्वशः ।
पूर्वाग्रमुत्तराग्रं तु विन्यसेन्नान्यथा क्वचित् ॥ ३ ॥
नासीगतोत्तरादीनि भूषणावयवानि तु ।
अग्रनिष्क्रमणन्यायाद् विन्यसेन्नैव दिग्वशात् ॥ ४ ॥
प्रादक्षिण्यवशादग्रं कुर्याद् वित्तविमानके ।
मूलप्रदक्षिणत्वेन विन्यासोऽप्यत्र दृश्यते ॥ ५ ॥
षडश्राष्टाश्रकादीनां दिग्गतानां तु दिग्वशात् ।
कुर्यादग्रं परेषां तु प्रादक्षिण्यक्रमेण तु ॥ ६ ॥

लुपास्तम्भादि सर्वेषां स्थितानामग्रमूर्ध्वतः ।
बालकूटादिभूषाणामधोग्रं नात्र संशयः ॥ ७ ॥
तत्रापि पद्मगेहाख्यविमानस्य विशेषतः ।
कूटस्य च लुपानां च मूलमूर्ध्वेति शुश्रुमः ॥ ८ ॥
अन्तर्भागोऽन्तरे कार्यो बहिर्भागो बहिस्तथा ।
द्रव्याणां पार्श्वसंज्ञानामन्यैः प्रोक्तानि तद् यथा ॥ ९ ॥
अपिधानाख्यफलकं यथावेधपदं न्यसेत् ।
शिलां शिलाभिः सन्दध्यादिष्टकाभिस्तथेष्टकाम् ॥ १० ॥
दारुभिर्दारुमेवेह लोहं लोहेन सन्धयेत् ।
स्वजातिभिः स्वजातिं तु सन्दध्यान्न विजातिभिः ॥ ११ ॥
नवद्रव्यं नवेनैव पुराणं तु पुरातनैः ।
जीर्णं जीर्णेन सन्दध्यात् त्वक्सारैस्त्वचिसारकम् ॥ १२ ॥
जात्या विप्रेण विप्रं च क्षत्रियैः क्षत्रियं तथा ।
विशं विशान्त्यमन्त्येन शूद्रेणान्यं न सन्धयत् ॥ १३ ॥
पुरुषद्रव्यसन्धानं पुरुषेण सुशोभनम् ।
स्त्रियं चेत् संदधेत् स्त्रीभिः षण्डं षण्डेन सन्दधेत् ॥ १४ ॥
पुंस्त्रियोर्द्रव्ययोः सन्धिरविरोध इति स्मृतः ।
मूलं मूलेन सन्दध्यादग्रमग्रेण योजयेत् ॥ १५ ॥
मूलाग्रद्रव्ययोगेन सन्धानं सम्पदां पदम् ।
मूलं मूलेन नैर्ऋत्यामग्रेणाग्रं तु शूलिनि ॥ १६ ॥
योगः स्यादग्रमूलाभ्यामन्ययोर्भिन्नसन्धिषु
षडश्राष्टाश्रके गेहे क्वचिदेवं भवत्यपि ॥ १७

वास्तुमध्ये ततो द्वारे देवांशेष्वपि कर्णयोः।
दिग्विदिङ्मध्यभागे च स्तम्भमध्ये विशेषतः ॥ १८ ॥
प्रतिसन्धेस्तु मध्ये वा सन्धिकार्यं न शोभनम्।
अर्कार्किवरुणेन्दूनां स्थानं दिगिति कीर्तितम् ॥ १९ ॥
अग्निराक्षसवाय्वीशस्थानं विदिगिति स्मृतम्।
इन्द्रो ग्रहक्षतस्तद्वत् पुष्पदन्तस्तथैव च ।२०॥
फल्लाटश्चेति ये तेषां स्थानं द्वारमिति स्मृतम्।
तत्र सन्धिर्न कर्तव्यः सर्वथा सर्ववेश्मसु ॥ २१ ॥
आद्यङ्गाद्युन्नतार्थं यत् सन्धानं यत्र रोचते।
तत्र जन्मादिवर्गाणामन्ते कुर्यान्न मध्यतः॥ २२ ॥
अधोमूलं चोर्ध्वकेशमाधाराधेयसन्धिषु।
अन्तर्मूलं बहिश्चाग्रं पार्श्वद्रव्ये स्थितेऽपि च ॥ २३॥
अदीर्घदीर्घद्रव्याभ्यां सन्धानं सम्पदां पदम्।
समाभ्यां नैव सन्धानं कारयेन्मतिमानतः ॥ २४॥
चतुर्दिक्षु बहिः स्थित्वा निरीक्षेत् स्थपतिर्गृहम्।
तदा ह्रस्वं यथा वामे दीर्घद्रव्यं तु दक्षिणे ॥ २५ ॥
तथा सुधीर्विधातव्यः पुनश्च पुनरेव च।
अथवान्तर्गतः स्थित्वा स्थपतिर्वीक्ष्य तद् गृहम् ॥ २६ ॥
विज्ञाय दक्षिणं वामं दीर्घं ह्रस्वं च विन्यसेत्।
द्रव्यत्रयकृते सन्धौ समपातत्रयं पुनः ॥ २७ ॥
मध्यद्रव्यं यथा दीर्घं ह्रस्वद्रव्यौ तु पार्श्वयोः।
तत्क्रमेण यथापूर्वमुक्तं तद्वन्न्यसेत् तु वा ॥२८॥

हेमसूच्यष्टलाभ्यां तु छित्त्वोद्धृत्याङ्कयेत् ततः ।
अन्तर्बहिश्चाग्रमूलप्रदेशे पुनरानयेत् ॥ २७ ॥

स्त्रीशिलाकल्पिते लिङ्गे राष्ट्रं राजा च नश्यति ।
पुंशिलाकल्पिते पीठे लिङ्गे पीठे च षण्डके ॥ २८ ॥

स्त्रिया पुंसा च भूपीठे कृते स्याद् राष्ट्रनाशनम् ।
एवं विज्ञाय तद्योग्यामानयेदम्बरावृतम् ॥ २९ ॥

एवं कृत्वा समारोप्य रथं नीत्वा शिवालयम् ।
कौबेर्यां दिशि संस्थाप्य लिङ्गं सम्यक् प्रकल्पयेत् ॥ ३० ॥

अथ रत्नानि ।

स्फटिकं पद्मरागं च वज्रं नीलं हिरण्मयम् ।
वैडूर्यं विद्रुमं पुष्यं रत्नबिम्बं तथाष्टधा ॥ ३१ ॥

स्फटिकं सूर्यकान्तं च चन्द्रकान्तमिति त्रिधा ।
स्फटिकस्यैव भेदाः स्युः काममोक्षार्थदाः क्रमात् ॥ ३२ ॥

श्रियं कामं तथारोग्यमृद्धिं पुत्रं जयं सुखम् ।
लभते पद्मरागादिबिम्बानां क्रमशोऽर्चनात् ॥ ३३ ॥

माणिक्यं च दिवाकरस्य शशिनो मुक्ताफलं विद्रुमं
भौमस्येन्दुसुतस्य वै मरतकं तत् पुष्यरागं गुरोः ।
वज्रं दैत्यगुरोर्दिवाकरभुवो नीलं च गोमेदकं
राहोर्यद् ग्रहरत्नकं शृणु सखे ! केतोश्च वैडूर्यकम् ॥ ३४ ॥

रत्नानामिह सर्वेषां दोषाः सामान्यतो नव ।
रेखा बिन्दुः कलङ्कश्च काकाङ्घ्रिक्षतधूलयः ॥ ३५ ॥

तुषारत्रासरन्ध्राणि यत्नाद् रत्नेषु वर्जयेत् ।
रेखा बिन्दुः कलङ्कं च त्रासः काकपदं क्षतम् ॥ ३६ ॥
खद्योतो मक्षिका छायाभेदाः सन्धि¹तुषारके ।
निम्नमस्तकता चेति दोषा रत्नभवास्तथा ॥ ३७ ॥
स्त्रीपुंनपुंसकभिदा न स्याद् रत्नेषु सर्वतः ।

अथ लोहम् ।

सौवर्णं राजतं ताम्रं पैत्तलं कांस्यमायसम् ॥ ३८ ॥
सैसकं त्रापुषं चेति लौहं बिम्बं तथाष्टधा ।
भुक्तिमुक्तिप्रदं हैमं लिङ्गं रौप्यं तु पुष्टिदम् ॥ ३९ ॥
ताम्रजं पुत्रदं विद्यात् तथैव स्यात् तु पैत्तलम् ।
आयुरारोग्यदं कांस्यमायसं मारणं स्मृतम् ॥ ४० ॥
सैसकं त्रापुषं चापि विद्वेषोच्चाटनादिषु।
मुख्यलोहानि चत्वारि हेमादीनि शुभानि हि ॥ ४१ ॥
पिशाचलोहान्यन्यानि कांस्यादीनीति केचन ।

अथ दारुः ।

चन्दनं देवदारुश्च शमीपिप्पलशिंशपाः ॥ ४२ ॥
खदिरासनमालूरमधूका बकुलस्तथा ।
पद्मकं कर्णिकारं च विप्रादीनां त्रयं त्रयम् ॥ ४३ ॥
क्रमाद् दारवलिङ्गानां विज्ञेयास्तरवः शुभाः ।

अथ मृदः ।

तीर्थक्षेत्राचलारामपुण्यदेशोद्भवां मृदम् ॥ ४४ ॥

१. 'न्ति' ख. ग. पाठः.

शुक्लां रक्तां तथा पीतां कृष्णामादाय चूर्णयेत् ।
यवगोधूममाषाणां चूर्णानां गुग्गुलोरपि ॥ ४५ ॥
लाक्षाश्रीवेष्टकश्यामासर्जानां च समांशकैः ।
कुन्दुरिक्षस्य चांशेन मृच्चूर्णं सर्वसम्मतम् ॥ ४६ ॥
कपिलापञ्चगव्येन सतैलेन तु मर्दयेत् ।
तां मृदं मर्दितां पक्षं मासमात्रोषितां पुनः ॥ ४७ ॥
गृहीत्वा कारयेल्लिङ्गं सपीठं लक्षणान्वितम् ।
मासं तु शोषयेद् घर्मे बिम्बमामं तु मार्त्तिकम् ॥ ४८ ॥
अथवा केवलां मृत्स्नां कर्मयोग्यां विचूर्णिताम् ।
मर्दितां पञ्चगव्याद्भिर्मासमात्रं तथोषिताम् ॥ ४९ ॥
गृहीत्वा कारयेल्लिङ्गं सपीठं त्विष्टमानतः ।
विपचेत् कुशलैरग्नौ पक्वलिङ्गं तु तद् भवेत् ॥ ५० ॥
कृत्वा दारुमयं शूलं लोहपट्टविभूषितम् ।
मृदा विधिवदालिप्य शोषयेन्मिश्रलिङ्गकम् ॥ ५१ ॥
भित्त्यादावालिखेद् वर्णैर्लेख्यबिम्बं यथोदितम् ।
मृन्मयं वार्क्षिकं बिम्बं सर्वसिद्धिप्रदं सदा ॥ ५२ ॥
मृन्मये हेमरत्नानि मध्ये संस्थाप्य कारयेत् ।
सैकतं गौमयं पैष्टमान्नं गौलं फलात्मकम् ॥ ५३ ॥
नावनीतं च लिङ्गानि त्यज्यतां प्रतिवासरम् ।
नैतेषां पीठिका कार्या कुर्याल्लिङ्गं तदासने ॥ ५४ ॥
नैषां त्रिखण्डमानं वा न शिरोवर्तनादिकम् ।
नैषां कालं मुहूर्ताद्यं नाधिवासादिकाः क्रियाः ॥ ५५ ॥

निर्माय सद्यस्तल्लिङ्गे शिवमावाह्य पूजयेत् ।
विसृज्य निरपेक्षं तल्लिङ्गमप्सु विनिक्षिपेत् ॥ ५६ ॥

अथ पीठम् ।

स्वयोनिः पीठिकैव स्याच्छैलादीनामदूषणा ।
अभावे त्वैष्टकी शैले रत्नजानां हिरण्मयी ॥ ५७ ॥
राजती ताम्रजा वा स्याच्छ्रेष्ठमध्याधमक्रमात् ।
न्यूनैर्वा परलोहानामिष्टकाभिश्च दारवे ॥ ५८ ॥

इति शिल्परत्नेऽन्त्यभागे बिम्बादिसाधनविधिर्नाम प्रथमोऽध्यायः ॥

## अथ द्वितीयोऽध्यायः ।

अथ लिङ्गलक्षणम् ।

सुखासनं तु प्रथमं स्कन्दोमासहितं ततः ।
तृतीयं चन्द्रमूर्धानं चतुर्थं वृषवाहनम् ॥ १ ॥
पञ्चमं नृत्तमूर्तिस्तु गङ्गाधरमतः परम् ।
सप्तमं त्रिपुरारिः स्यात् ततः कल्याणसुन्दरम् ॥ २ ॥
अर्धनारीश्वरं पश्चाद् दशमं गजहा तथा ।
एकादशं पाशुपतं कङ्कालं द्वादशं स्मृतम् ॥ ३ ॥
अर्धनारायणं पश्चाद् भिक्षाटनमतः परम् ।
चण्डेश्वरप्रसादं तु दक्षिणामूर्तिरेव च ॥ ४ ॥
ततः कालारिमूर्तिश्च लिङ्गमष्टादशं स्मृतम् ।
एवं लिङ्गोद्भवं पूर्वैः प्रोक्तं शैवपरायणैः ॥ ५ ॥

१. 'दि' ग. पाठः.

अथ बिम्बं तु त्रिविधं निष्कलं सकलं तथा ।
मिश्रं चेति च तद् बिम्बमचलं च चलं तथा ॥ ६ ॥
चलाचलमिति त्रेधा तत्प्रपञ्चः प्रदर्श्यते ।
निष्कलं केवलं लिङ्गमन्यत्त्ववयवान्वितम् ॥ ७ ॥
तदेव चित्रमर्धाङ्गदर्शनं त्वर्धचित्रकम् ।
चित्राभासं तथा लेख्यमुत्तमादिक्रमेण तु ॥ ८ ॥
सकलं त्रिविधं ज्ञेयं मिश्रलक्षणलक्षितम् ।
मिश्राख्यं मुखलिङ्गं स्यादचलादिकमुच्यते ॥ ९ ॥
निधिकुम्भप्रतिष्ठादि सर्वमुक्तानुसारतः ।
कृत्वा प्रतिष्ठितं बिम्बमचलं परिकीर्तितम् ॥ १० ॥
पीठिकोपरि संस्थाप्य पूजितं चलमेव हि ।
सौधं च पार्थिवं शैलं सङ्करं त्वचलं शुभम् ॥ ११ ॥
रत्नजं दारुजं लौहं त्रयं चैतच्चलं शुभम् ।
धातुवर्णादिभिर्लेख्यं पटादौ तच्चलाचलम् ॥ १२ ॥
लिङ्गं गर्भगृहद्वारस्तम्भाधिष्ठानकिष्कुभिः ।
तालमानाङ्गुलैश्चापि तथा मात्राङ्गुलैरपि ॥ १३ ॥
यजमानोच्चमानेन चैवं नवविधं स्मृतम् ।

गर्भव्यासे विभक्ते स्मरशरनवनेत्रैस्त्रिपञ्चैकभागै-
लिङ्गानि त्रीणि तेषु त्रिषु गुणदलितेष्वेकभागैर्द्विभागैः ।
द्वे द्वे तानि स्युरेवं नव चरणयुतं तत्समं पादहीनं
द्वाराद् द्व्येकांशकाभ्यामपि गुणदलिते तत्र पञ्चेतराणि
॥ १४ ॥

प्रासादमानाच्च तथा वेदबाणर्तुभागतः ॥ १५ ॥
लिङ्गायामोऽथवा कार्यः प्रकारोऽन्यश्च कथ्यते ।
गर्भगेहविशालार्धे लिङ्गायामं प्रकल्पयेत् ॥ १६ ॥
द्वाराधिष्ठानपादानां समं पादाधिकं तु वा ।
पादहीनमथैतेषां तन्मध्येऽङ्घ्रिविभाजिते ॥ १७ ॥
पृथक्कृत्वा तत्तदंशैः स्यान्मानं नवधा स्मृतम् ।

लिङ्गानि सायककरादिपदोनिताश्वि-
हस्तान्तिमानि चराणांशवियुक्तक्लृप्त्या ।
स्युर्वर्णिनां मुखभुजोरुपदोद्भवानां
पञ्चाग्निपावकजगत्परिसङ्ख्यकानि ॥ १८ ॥

अङ्घ्र्यंशकक्रमकृतह्रसनेन भूयो
द्वे चैकमप्यनुविलोमकुलोत्थयोः स्युः ।
तान्युत्तरोत्तरकुलप्रभवेषु चानु-
लोम्यात् प्रकल्पयतु चैककरादिकानि ॥ १९ ॥

आरभ्य हस्तं नवहस्तकान्तं
लिङ्गं विधेयं नरदैत्यदेवैः ।
हस्तादिकं पञ्चकरान्तमादौ
लिङ्गं मनुष्यस्य विभिन्नवर्णम् ॥ २० ॥

दैत्यस्य षट्सप्तकरं च लिङ्गं
गीर्वाणलिङ्गं च नवाष्टहस्तम् ।
देवादियोन्यष्टकभेदकानि
लिङ्गानि सन्त्यत्र न वर्णितानि ॥ २१ ॥

हस्तोच्चमानादारभ्य पादवृद्धिक्रमेण तु ॥ २२ ॥
त्रिहस्तान्तं कनिष्ठानि लिङ्गानि स्युर्नवैव हि ।
चतुर्हस्तायताल्लिङ्गात् प्राग्वत् पादविवर्धनात् ॥ २३ ॥
षड्ढस्तान्तं मध्यमानि लिङ्गानि नव कल्पयेत् ।
सप्तहस्तोच्चमारभ्य पादवृद्ध्या तु पूर्ववत् ॥ २४ ॥
श्रेष्ठानि नव लिङ्गानां त्रयस्त्रिंशदुदाहृतम् ।
तालादिनवतालान्तं तालमानेन कीर्तितम् ॥ २५ ॥
पूजांशोच्चे चतुर्विंशत्याधिक्यशतभाजिते ।
मूललिङ्गेऽङ्गुले कृत्वा तालमानं प्रकल्पयेत् ॥ २६ ॥
एकाङ्गुलादिद्वियववर्धनेनानलाङ्गुलात् ।
कनिष्ठनवलिङ्गानि तथा वेदाङ्गुलादितः ॥ २७ ॥
मध्यानि नव लिङ्गानि तथैवाङ्गाङ्गुलान्ततः ।
सप्ताङ्गुलादिद्वियववर्धनेना नवाङ्गुलात् ॥ २८ ॥
श्रेष्ठानि नव लिङ्गानि रत्नजानि विशेषतः ।
कनिष्ठमध्यलिङ्गानि रत्नजातानि सर्वतः ॥ २९ ॥
चलानि गेहे पूज्यानि स्थिराण्येवोत्तमानि हि ।
तान्यालये प्रतिष्ठाप्य स्थिरलिङ्गानि पूजयेत् ॥ ३० ॥
रामाङ्गुलादितो लौहं लिङ्गमा षोडशाङ्गुलात् ।
चललिङ्गं स्मृतं तस्मात् स्थिराण्यूर्ध्वं भवन्ति हि ॥ ३१ ॥
मधूच्छिष्टेन निर्माय सकलं निष्कलं तु वा ।
बद्ध्वा मृदा दृढं शुष्कं[1]मधूच्छिष्टं बहिः[2] सृजेत् ॥ ३२ ॥

---

१. 'ष्के', २. 'हिस्त्यजेत्' ख. पाठः.

तत्र लोहार्द्रमापूर्य कारयेल्लौहमुत्तमम् ।
अथ तत्प्रक्रियां वक्ष्ये कर्मकारहिताय तु ॥ ३३ ॥
कठिना मन्दकठिना मृद्वी मृदुतरा तथा ।
मूषाकरणयोग्येति पञ्चधा मृत्तिका स्मृता ॥ ३४ ॥
पूर्वोक्तां नाकुजां वाथ मृत्स्नामादाय यत्नतः ।
मृल्लोष्टचूर्णसंयुक्तां यथायुक्ति विमर्दयेत् ॥ ३५ ॥
शुद्धाम्भसा पूगचर्मसारं युक्त्या सुयोजयेत् ।
कारयेत् कठिनामेवं शिलामुसलताडिताम् ॥ ३६ ॥
तस्मिन् गोमयसंयुक्ते स्यान्मन्दकठिना पुनः ।
मृद्भाण्डचूर्णसंयुक्तां तत्पादांशकमृत्तिकाम् ॥ ३७ ॥
पेषण्यां पेषयेद् यां सा मृद्वीति कथिता पुरा ।
तदेव गोमययुता मृत्स्ना मृदुतरा स्मृता ॥ ३८ ॥
तुषाद्यङ्गारचूर्णेन संयुक्ता घटमृत्तिका ।
कार्पासपटचूर्णेन समं मुसलपीडिता ॥ ३९ ॥
एषा मूषामृदाख्याता कर्तव्या सानया दृढम् ।
यत्किञ्चिदीप्सितं तन्तु किञ्चिन्न्यूनप्रमाणतः ॥ ४० ॥
कृत्वा द्वितीयया शुष्के तष्ट्वा लिप्त्वा पुनः पुनः ।
अन्ते गोमयसारेण लिप्त्वा श्लक्ष्णीकृते पुनः ॥ ४१ ॥
कृत्वा तस्मिन् मधूच्छिष्टपट्टं युक्तघनान्वितम् ।
इष्टप्रमाणं[1] तत् सर्वं कृत्वा तेन सलक्षणम् ॥ ४२ ॥
भूषणादीनि सर्वाणि मधूच्छिष्टस्य तन्तुना ।
कृत्वा तिन्त्रिणिसारेण वेणुसारेण वा तथा ॥ ४३ ॥

१. 'णात् त' ख. ग. पाठः.

कृतेन युक्तशस्त्रेण सुस्निग्धं कारयेदथ ।
पुनर्विलेपयेन्मृत्स्नामार्द्रां मृदुतरां क्रमात् ॥ ४४ ॥
शुष्के तस्मिन् पुनर्लिप्त्वा मृद्वया संशोषयेत् पुनः ।
कठिनेन पुनस्तत्र कृष्णायसपटादिभिः ॥ ४५ ॥
बद्ध्वा यथाबलं पश्चात् कठिनेन विलेपयेत् ।
आवृत्त्या लेपयेत् तेन यथालोपं यथाबलम् ॥ ४६ ॥
अप्रधानावयवगस्थाने स्याल्लोहपद्धतिः ।
एवं शुष्के पुनर्यन्त्रवशादातप्य वह्निना ॥ ४७ ॥
मधूच्छिष्टं बहिस्त्यक्त्वा तं दहेत् काष्ठवेष्टितम् ।
यदा कूश्माण्डपुष्पाभं वर्णमन्तर्गतं पुनः ॥ ४८ ॥
लोहमार्गादिरन्ध्रेण दृश्यते तत् तदैव हि ।
अवरुह्य भुवः श्वभ्रे विन्यस्योर्ध्वमुखं यथा ॥ ४९ ॥
मूषायामार्द्रितं लोहं शीघ्रमादाय यत्नतः ।
निक्षिप्य तन्मुखे मन्दमन्तर्भागं सुपूरयेत् ॥ ५० ॥
पांसुना बहिराच्छाद्य कालाच्छीतलिते पुनः ।
तीक्ष्णायसकृतैः शस्त्रैर्मृदं त्यक्त्वा सुधीः क्रमात् ॥ ५१ ॥
सुश्लक्ष्णं कारयेत् तैस्तैरुचितैः शस्त्रभेदकैः ।
एवं तत्कर्मकुशलैर्लोहजं कारयेद् बुधः ॥ ५२ ॥
घनं चेल्लोहजं बिम्बं मधूच्छिष्टेन केवलः ।
कृत्वा मृल्लेपनादीनि पूर्ववत् क्रमतश्चरेत् ॥ ५३ ॥

पुनरपि बिम्बोन्मानमाह —

अष्टाङ्गुलं समारभ्य (द्विद्य ? चाष्टा)ङ्गुलविवर्धनात् ।

लौहानि नव लिङ्गानि त्रिहस्तान्तानि कल्पयेत् ॥ ५४ ॥
तथाष्टाङ्गुलमारभ्य द्विद्व्यङ्गुलविवर्धनात् ।
त्रिहस्तान्तानि लिङ्गानि त्रयस्त्रिंशद् भवन्ति हि ॥ ५५ ॥
षोडशाङ्गुलमारभ्य दारुलिङ्गान्यनुक्रमात् ।
षोडशाङ्गुलवृद्ध्या स्युः षड्ढस्तान्तानि वै नव ॥ ५६ ॥
षोडशाङ्गुलमारभ्य चतुरङ्गुलवर्धनात् ।
दारवाणि त्रयस्त्रिंशल्लिङ्गान्या रसहस्ततः ॥ ५७ ॥
यस्य यस्मिन् भवेदास्था विभूतिर्यस्य यादृशी ।
लिङ्गं तदनुसारेण कारयेदालयोचितम् ॥ ५८ ॥
कारयेदेवमेवात्र लिङ्गं मात्राङ्गुलैरपि ।
यजमानसमं तस्य नेत्रास्यहनुदोःसमम् ॥ ५९ ॥
स्तनान्तं हृदयान्तं च लिङ्गोच्चमिति सप्तधा ।
तत्रैकहस्तलिङ्गस्य चतुर्हस्तं तु विस्तृतम् ॥ ६० ॥
विमानं स्यात् तथा पञ्चगुणं षड्गुणमेव वा ।
विस्तारद्विगुणोच्चं तु नागरं त्रिगुणं यदि ॥ ६१ ॥
भूमिजाख्यं स्मृतं तस्माद् द्विगुणं शिखरं यदा ।
नागरं वलभिर्नाम विमानं भवति स्फुटम् ॥ ६२ ॥
लिङ्गायामे विकारांशे भूतवेदाग्निविस्तरम् ।
जयदं पौष्टिकं सार्वकामिकं द्राविडे भवेत् ॥ ६३ ॥
अभिकृत्यंशके गर्भे षोडशांशं तदुत्तमम् ।
त्रयोदशांशमधमं तयोर्मध्येऽष्टभाजिते ॥ ६४ ॥
नव लिङ्गानि सिध्यन्ति वेसरे तानि कल्पयेत् ।

१. 'म' ग. पाठः.

पञ्चषञ्चांशके दैर्घ्ये वसुसप्तषडंशकैः ॥ ६५ ॥

विस्तारं वेसरे विद्यात् पूर्ववज्जयदादिकम् ।

लिङ्गं सर्वसमं समोन्मितिविभक्तांशत्रयं तत् पुनः

स्वायत्या समनाहकं यदि समांशं चाथ वृद्ध्युत्तरम् ।

भक्ते भानुयुजोच्छ्रयेऽद्रिवसुनन्दांशैस्तु मूलादिषु-

पेतं दिग्दलिते त्रिलोकयुगसङ्ख्यातैस्तथेशाधिकम् ॥ ६६ ॥

आयामे दलिते दिवाकरयुजाभीष्टेऽष्टभिर्विस्तृतिः

कार्यांशैरपि षञ्चपञ्चयवयुक्तैः सप्तभिः पञ्चभिः ।

स्वायामार्कयुगांशकद्विरसनांशः स्याद् यवः केवलैः

पञ्चांशैरपि गर्भगेहनवमांशेनापि सा स्मर्यते ॥ ६७ ॥

मार्ताण्डद्वयभागभक्तमखिलं लिङ्गं विधायांशकै-

रष्टाभिर्यवपञ्चयुक्तमुनिभिः सार्धं यवैः पञ्चभिः ।

भूतैः पञ्चभिरेव वर्णविहितैर्विप्रादितो विस्तृतैः

कुर्यात् सर्वसमं समांशविहितं वृद्ध्युत्तरेशाधिके ॥ ६८ ॥

भागैश्चतुर्विंशतिभिः समस्त-

लिङ्गस्य दीर्घं प्रविभज्य सम्यक् ।

विष्कम्भमंशैरथ पञ्चभिश्च

नाहं मितं षोडशभिश्च भागैः ॥ ६९ ॥

आरभ्य षड्भागमतः क्रमेण

पादांशवृद्ध्या नवधा विभागैः ।

वस्त्रान्तमेतानि नवोदितानि

लिङ्गानि मित्रद्वयभागभक्ते ॥ ७० ॥

अष्टाष्टार्धनवांशकैर्विभजिते विस्तारमंशद्वयं
श्रेष्ठं मध्यममंशकैस्त्रिभिरतश्चार्धांशवृद्ध्योत्तरे ।
भक्ते कन्यकमंशकैस्त्रिभिरतो भक्ते च भागद्वयं
विष्कम्भं पुनरेवमेव नवधा संकल्पयेद् वा क्रमात् ॥ ७१ ॥
रागिदाराक्षनिहतं कृत्वा विष्कम्भमार्जितम् ॥ ७२ ॥
अनूननेत्रवीभक्तं[1] परिणाहं समीपगम् ।
विष्कम्भमानात् त्रिगुणं निधाय
विष्कम्भवस्वंशकतोऽष्टमांशम् ।
विक्षिप्य वा नाहविधिस्तदेक-
विंशद्विभागो निहितोऽथवा स्यात् ॥ ७३ ॥
सर्वतोभद्रकं लिङ्गं वर्धमानं शिवाधिकम् ॥ ७४ ॥
स्वस्तिकं च चतुर्धा स्यात् तल्लक्ष्म पृथगुच्यते ।
विप्राणां सर्वतोभद्रं भूभुजां वर्धमानकम् ॥ ७५ ॥
शिवाधिकं विशामिष्टं शूद्राणां स्वस्तिकं मतम् ।
प्रतिलोमानुलोमादिवर्णानामपि स्वस्तिकम् ॥ ७६ ॥
यथोचितातानवितानयुक्तां
शिलां यथोक्तक्रमतोऽभिभज्य ।
मूलं युगाश्रं विदधीत मध्य-
मष्टाश्रकं वृत्तमयं परं च ॥ ७७ ॥
तुर्यश्रे सुसमे प्रसार्य भुजसूत्रं कर्णसूत्राध्वना
तस्यन्ताहितलक्ष्मसु प्रतिदिशं द्वे द्वे भुजासूत्रके ।

---

१. 'अन्यनेत्रविभ' ग. पाठः.

कृत्वा तद्वयमध्यसंस्थितचतुष्कोणानि संशोध्य सा-
ध्वष्टाश्रं विदधीत वृत्तमपि तद् द्व्यष्टाश्रकादिक्रमात् ॥ ७८॥

तुर्यश्रेऽष्टाश्रके वृत्ते ब्रह्मा विष्णुः शिवः क्रमात् ।
देवताः सर्वलिङ्गेषु त्रिखण्डेषु विशेषतः ॥ ७९ ॥

कांशः पादशिलायां स्याद् विष्ण्वंशः पीठिकासमम् ।
द्वयः शिवांशः पूज्यः स्यात् सर्वलिङ्गेष्वयं विधिः ॥८०॥

सममाना भवेद् वेदी लिङ्गस्यावारिका यथा ।
पूजांश एव निर्दिष्टो लिङ्गशब्देन चात्र हि ॥ ८१ ॥

वेदाश्रपीठिकायास्तु[1] लिङ्गे सर्वं समं त्विदम् ।
तल्लिङ्गपरिणाहस्थब्रह्मसूत्रचतुष्टये ॥ ८२ ॥

विस्तारः सम एव स्याच्छायादोषोऽन्यथा भवेत् ।
अ(थो ? तो) लिङ्गसमं पीठं स्याच्छायादोषवर्जितम् ॥८३॥

पीठेषु लिङ्गतुल्या स्यात् परिणाहं तु विस्तृतिः ।
तथा तुङ्गेषु लिङ्गेषु पीठिकाधिकविस्तृतिः ॥ ८४ ॥

अवगम्य शिवांशे तु वर्धयेत् तत्समं यथा ।
यावद् वृद्धं शिवांशे तु ब्रह्मांशे ह्रापयेत् तु तत् ॥ ८५ ॥

तद्वत्[2] स्थूलेषु लिङ्गेषु न्यूनतां पीठविस्तृतेः ।
विज्ञाय पूजाभागं तु कुर्याद्ध्रस्वं तदंशतः ॥ ८६ ॥

ब्रह्मांशे वर्धयेद् भागे वृद्धिहानी न वैष्णवे ।
छायादोषो विचार्योऽयं लिङ्गे सर्वसमे स्मृतः ॥ ८७ ॥

१ 'वीथिका' ग. पाठः. २. 'द्वन्मूलेषु लि' ख. ग. पाठः

वर्धमानादिलिङ्गेषु नैतत् स्यादिति केचन ।
तद्वद् व्यक्तेषु लिङ्गेषु व्यक्ताव्यक्ते च रत्नजे ॥ ८८ ॥
स्वयंभुवि तथा बाणेऽप्यार्षे वा नियमो नहि ।
वर्धमानादिलिङ्गानां त्रयाणमप्ययं विधिः ॥ ८९ ॥
यमसूत्रे तु कथिता छायादोषं विना यथा ।
लिङ्गायतिप्रमाणानीत्यादिना पीठविस्तृतिः ॥ ९० ॥
शिवभागसमा कार्या व्याख्यातं सङ्ग्रहे तथा ।
यावल्लिङ्गस्य वै दैर्घ्यं तावत् पीठस्य विस्तृतिः ॥ ९१ ॥
सङ्कृत्यंशे तु लिङ्गोच्चे सप्ताष्टनवभिः क्रमात् ।
अंशैर्ब्रह्महरीशानभागाः स्युर्वर्धमानके ॥ ९२ ॥
लिङ्गायामे प्रकृत्यंशे षट्सप्ताष्टांशकल्पिताः ।
क्रमाद् ब्रह्मादिभागास्त एवं वा वर्धमानके ॥ ९३ ॥
पञ्चषट्सप्तभागैर्वा चतुष्पञ्चषडंशकैः ।
वर्धमानं भवेल्लिङ्गं श्रेष्ठमध्याधमक्रमात् ॥ ९४ ॥
लिङ्गायामे तु पङ्क्त्यंशे रामाग्निश्रुतिसम्मितैः ।
अंशैर्ब्रह्मादिभागाः स्युः क्रमाल्लिङ्गे शिवाधिके ॥ ९५ ॥
लिङ्गोत्सेधे तु नन्दांशे षट्सप्तवसुभागकैः ।
ब्रह्मविष्ण्वीशभागानां क्रमान्नाहाः प्रकीर्तिताः ॥ ९६ ॥
लिङ्गं त्रैराशिकं नाम भवेत् सर्वसमे तु तत् ।
स्वायामार्धार्धविस्तारं स्वस्तिकं वा शिवाधिकम् ॥ ९७ ॥
वर्धमानं च तल्लिङ्गं नाम्ना सुरगणार्चितम् ।
तत् सार्वदेशिकं ज्ञेयं सर्ववर्णहितावहम् ॥ ९८ ॥

पौष्करे कारणाख्ये च यथोक्तं तत्तु कथ्यते ।
चतुरंशादि विप्राणां पञ्चांशादि नृपोचितम् ॥ ९९ ॥

षड्भागादि विशां योग्यं सप्तांशाद्यं तु वार्षलम् ।
वर्धमानं चतुर्भेदमेवं वर्णक्रमादिदम् ॥ १०० ॥

आकृत्यंशे तु लिङ्गोच्चे सप्तसप्ताष्टभागकैः ।
ब्रह्माद्यंशेषु यल्लिङ्गं विप्राभीष्टं शिवाधिकम् ॥ १०१ ॥

एकोनविंश(ता ? त्या) भक्ते तुङ्गे षट्षट्तुरङ्गकैः ।
ब्रह्मादिभागतुङ्गं चेद् भौपमीशाधिके स्मृतम् ॥ १०२ ॥

त्रयोदशांशे लिङ्गोच्चे वेदवेदशरांशकैः ।
कादिभागं विशां योग्यं लिङ्गमुक्तं शिवाधिकम् ॥ १०३॥

लिङ्गतुङ्गे दशांशे तु गुणाग्निश्रुतिभागिकम् ।
ब्रह्माद्यंशेषु शूद्राणामिष्टं लिङ्गं शिवाधिकम् ॥ १०४ ॥

पूर्वोक्तसमलिङ्गे च धारालिङ्गं विकल्पितम् ।
चतुरश्रं द्विरष्टाश्रं तन्मूले परिकल्पयेत् ॥ १०५ ॥

वैष्णवांशे च शैवांशे धारा द्विद्विगुणीकृते ।
सर्वेषामपि लिङ्गानां धारालिङ्गं त्रिधा मतम् ॥ १०६ ॥

मूलेऽष्टाश्रं वा कलाश्रं युगाश्रं
तस्मादूर्ध्वं तद्युगाः स्युश्च धाराः ।
एवं पूर्वाचार्यकैरीश्वरस्य
प्रोक्तं धारालिङ्गमेतत् त्रिधैव ॥ १०७ ॥

सर्वतोभद्रलिङ्गेषु धाराः स्युः पञ्चविंशतिः ।
सप्तपर्णदलाकाराः समाः सर्वाः समान्तराः ॥ १०८ ॥
एकैकस्यां तु धारायां चत्वारिंशत्प्रसङ्ख्यया ।
कुर्यात् समानि लिङ्गानि स्यात् तल्लिङ्गसहस्रकम् ॥ १०९ ॥
चतुरश्रस्य कोणार्धसूत्रलाञ्छनमध्यतः ।
कोणत्यागात् तदष्टाश्रं कुर्याद् विष्ण्वंशसिद्धये ॥ ११० ॥
अथवा लिङ्गविस्तारं सप्तधा विभजेत् समम् ।
मध्ये त्रिभागं संस्थाप्य द्विद्विभागविवर्जनात् ॥ १११ ॥
वस्वश्रं सिध्यति सममथ वृत्तं निगद्यते ।
चतुरश्रस्य लिङ्गस्य शिरोमध्ये निधाय तु ॥ ११२ ॥
सूत्रं दिगन्तमानेन भ्रामयेद् वृत्तसिद्धये ।

अथ शिरोवर्तनम्

कुर्वीत त्रपुषीफलाग्रसदृशं छत्रोपमं मस्तकं
बालेन्द्वाकृति कुक्कुटाण्डसदृशं विप्रादिवर्गक्रमात्
भेदाः सर्वसमांशकप्रभृतयो नाहप्रभेदान्विता-
स्तेऽप्येतत्क्रमतः स्युरेतदनुलोमाङ्गीकृतिश्चेष्यते ॥

विस्तारं शिवलिङ्गमूर्ध्नि वसुनन्दादित्यरुद्रांशकं
कृत्वात्र क्रमतो विशोध्य परितो द्व्येकद्विलोकांशकान्
कृत्वात्यष्टितिथिप्रकृत्यतिधृतिख्यातांशयुक्तं क्रमात्
पूजाभागमिहोक्तभागमुपरिष्टाच्छोधयेद् वर्णिषु ॥

१. 'णोर्ध्व' ख. पाठः. २. 'न्तं तेनैव भ्रा' ख. ग. पाठः.

तन्मस्तके नवविभागतया विभक्ते
भागं विशोध्य परितः शिवभागदैर्घ्यम् ।
द्वात्रिंशदंशकतया परिकल्प्य भागा-
नेकैकशो द्विजमुखेषु विशोधयेद् वा ॥ ११५ ॥

छत्राभं त्रपुषाकारं कुक्कुटाण्डनिभं तथा ।
अर्धेन्दुसदृशं चाथ बुद्बुदाभं तु पञ्चमम् ॥ ११६ ॥

सर्वेषामपि लिङ्गानां शिरसो वर्तनक्रमम् ।
लिङ्गव्यासात् षोडशांशमेकद्वित्रियवाधिकम् ॥ ११७ ॥

आरोप्य केऽधः संलम्ब्य लिङ्गस्योभयपार्श्वयोः ।
वर्तयेत् तत्र चत्वारि छत्राभाणि भवन्ति हि ॥ ११८ ॥

प्रथमं च द्वितीयं च समलिङ्गे नियोजयेत् ।
शिवाधिके तृतीयं तु चतुर्थं वर्धमानके ॥ ११९ ॥

वर्तनं सङ्करं नैव कुर्यात् तदशुभं यतः ।
षडंशे लिङ्गविस्तारे सार्धद्व्यंशेन वर्तयेत् ॥ १२० ॥

त्रपुषाभशिरःसिद्धयै रामांशैः कुक्कुटाण्डकम् ।
लिङ्गव्यासतृतीयांशवर्तनादर्धचन्द्रकम् ॥ १२१ ॥

लिङ्गव्यासेऽष्टधा भक्ते सार्धांशत्रयवर्तनात् ।
बुद्बुदाभस्य लिङ्गस्य शिरः सिध्यति शोभनम् ॥

लिङ्गानां शिरसीप्सितांशमुभयोः संलम्ब्य तत्पार्श्वयोः
कृत्वा मत्स्ययुगं तदास्यजघनान्निष्क्रान्तसूत्रद्वये ।
तस्माद् यत्र च संयुतिर्मतिमता बिन्दुत्रयाढ्यं यथा
तत्तद् वर्तयितव्यमत्र बहुधा सोपायमीशोदितम् ॥

अथ लिङ्गं स्थूलमूलं स्थूलं मध्ये कृशं तथा ।
शेषं स्थूलशिरस्कं च चतुर्धेति मयोदितम् ॥ १२४ ॥
लिङ्गव्यासेऽष्टधा भक्ते मूले मध्याग्रयोरपि ।
भागाधिकं च हीनं च स्थूलमूलादिकं स्मृतम् ॥ १२५ ॥
लिङ्गमार्षं तथा स्वायम्भुवमित्यत्र द्विधास्ति तत् ।
वेदाश्रौ ब्रह्मविष्ण्वंशौ लिङ्गेष्वार्षेषु सम्मतौ ॥ १२६ ॥
शिवांशो वृत्त एव स्याच्छिरसो वा न वर्तनम् ।
अथ स्वयम्भूलिङ्गानि जर्जराणि कृशानि च ॥ १२७ ॥
ह्रस्वानि चातिदीर्घाणि फलकासदृशानि च ।
अनेकाग्राणि गोकर्णमातुलुङ्गनिभान्यपि ॥ १२८ ॥
षट्पञ्चत्रिदशाग्राणि मानोन्मानादिभिर्विना ।
शृङ्गाण्यपि च वक्राणि नानावर्णाकृतीनि च ॥ १२९ ॥
सपीठानि विपीठानि सालयान्यगृहाणि च ।
वनपर्वतनद्यब्धितीर्थक्षेत्रगतान्यपि ॥ १३० ॥
दर्शनस्पर्शनार्चाभिर्येषां सिद्धिरनुत्तमा ।
विद्यात् स्वयम्भूलिङ्गानि येषु नित्यं स्थितः शिवः ॥१३१॥
मूलं न शोधयेत् तेषां शोधनं सर्वनाशकृत् ।
अमीमांस्यानि तान्याहुः पूज्यान्येव यथास्थिति ॥१३२॥
नैषां मूर्तिविभागोऽस्ति नच स्यान्मन्त्रसङ्करः ।
मानुषेष्वेव लिङ्गेषु मन्त्रमूर्त्यादिसङ्करः ॥ १३३ ॥

अथ बाणलिङ्गम् ।

बाणलिङ्गं तु यत् सर्वं यथाजातं निधापयेत् ।
स्वेच्छयार्धं तु रामांशं वा पञ्चांशं द्विभागिकम् ॥ १३४ ॥

पीठे सलक्षणे लौहे सौधे वा स्थापयेच्छुभे ।
कोट्यस्तिस्रस्तु लिङ्गाद्रौ तिस्रः श्रीपर्वते स्थिताः ॥ १३५ ॥
तिस्रस्तु कालिकागर्ते तिस्रश्चाप्यमरेश्वरे ।
कन्यातीर्थे महेन्द्राद्रौ नेपाले कन्यकाश्रमे ॥ १३६ ॥
तेष्वेकैका स्थिता कोटिरेवं कोट्यस्तु षोडश ।
सपीठं वाप्यपीठं वा सप्रासादमवर्तनम् ॥ १३७ ॥
सर्वसङ्करहीनं तत् सर्वेषां भुक्तिमुक्तिदम् ।
पूजयेद् बाणलिङ्गं तत् प्रतिष्ठाप्य विधानतः ॥ १३८ ॥
अन्यान्यपि च लिङ्गानि नद्यब्धिगिरिकान्यपि ।
अकृतानि विशिष्टानि देवदैत्यमुनीश्वरैः ॥ १३९ ॥
दिव्यैरन्यैः सिद्धमुख्यैः पूज्यान्येव हि बाणवत् ॥ १४० ॥

इति शिल्परत्ने उत्तरभागे लिङ्गलक्षणं नाम
द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः ।

### अथ लक्षणोद्धारः ।

एवं लिङ्गं कारयित्वा महात्मा
शून्यं दोषैर्लक्षणैरन्वितं च ।
लक्ष्मोद्धारं कारयेद् वर्णयोग्यं
यद्वत् प्रोक्तं तत्क्रमात् (स्वर्ग ? स्वाग)मेषु ॥ १ ॥
लिङ्गमूर्ध्नि क्षतं स्याच्चेद् राज्ञां कर्तुश्च नाशनम् ।
छिद्रं भार्यां सुतं शङ्खे वक्त्रे हन्याच्च शिल्पिनम् ॥ २ ॥

मध्ये दुःखं च दुर्भिक्षं क्रोडे वृष्टिविनाशनम् ।
अत्यायतं चातिह्रस्वं कृशं स्थूलं नृपान्तकृत् ॥ ३ ॥

पर्याप्तकर्म यल्लिङ्गं शोणादि(?)वालुकादिभिः ।
गोबालरज्जुभिश्चैव घर्षयेन्निर्व्रणं समम् ॥ ४ ॥

मुकुरोदरवच्छ्लक्ष्णं दृश्यच्छायं सुवर्तुलम् ।
ततः शुद्धाम्बुगोक्षीरनालिकेरेक्षुवारिभिः ॥ ५ ॥

प्रक्षाल्य तीर्थतोयेन प्रोक्तचिह्नानि लक्षयेत् ।
राजसर्षपमात्राश्चेद् यत्र स्युः स्वर्णबिन्दवः ॥ ६ ॥

लिङ्गे वा पीठिकायां वा सर्ववर्णहितावहम् ।
स्वल्पदोषमपि त्याज्यं लिङ्गं पीठं च तद् भवेत् ॥ ७ ॥

निर्दोषमन्यत् संपाद्य लक्षणोद्धारमाचरेत् ।

भङ्क्त्वा त्रेधा शिवांशायतिमुपरितनं भागमुत्क्षिप्य शिष्टं
कृत्वाष्टांशं समास्फाल्य च विषुवसिरासूत्रमत्राष्टमांशे ।
लिङ्गाभं लक्ष्म साधारणमथ यत्ररूपं महेश्क्षणाभं
व्रीह्याकारं च बद्धाञ्जलिनिभमपि विप्रादिक्लृप्त्या लिखेद्
[वा ॥ ८ ॥

रेखां लक्षणमूलतो मणिमयीं मूलांशयुग्मान्तिमं
रेखे लक्षणपार्श्वजे च परिलिख्यैष्वंशमध्यावधि ।
ऊर्ध्वाग्रैर्ऋतुसूत्रकैस्त्रिदशकोष्ठानि प्रकल्प्याथ ते
तत्कर्णक्रमतः परागवनिपङ्क्त्यन्ते मिथो योजयेत् ॥ ९ ॥

विस्तारोऽधमलक्षणे द्वियवतस्तत्पादवृद्ध्योर्ध्वतो
रेखा तद्दलतो मिता मणिमयी तत्सामिक्लृप्ते परे ।

रेखा दक्षिणवाममध्यरचिता ब्रह्माजितानङ्गाजि-
दैवत्यश्चतुरश्रकादिशिवलिङ्गांशाश्च तद्देवताः ॥ १० ॥

प्रथमं नागरालिङ्गे षोडशभागं कृते शिवायामे ।
षड्भूतवेदभागांस्त्यक्त्वोर्ध्वे कन्यसाद्युदयम् ॥ ११ ॥

एवं त्रिकमुत्सेधं बुद्ध्वा च त्र्यंशकास्तु सर्वेषाम् ।
विष्ण्वंशादिमुखे द्वे सूत्रे संलम्बयेत् पार्श्वे ॥ १२ ॥

पृष्ठे तयोर्युतिः स्याद्धीने वेदाग्निदस्रेषु ।
मध्ये भूतवनानिलपांशेषु (?)युतिस्तयोः पृष्ठे ॥ १३ ॥

श्रेष्ठे षड्भूतवनानलपांशेषूदिता तु युतिः ।
तेषु ग्रीवैकांशं त्रिद्व्यंशं सूत्रविष्कम्भम् ॥ १४ ॥

यावदधोविष्ण्वंशं प्रोक्तोत्सेधे नयेत् तु समम् ।
एवं नागरलिङ्गे सूत्रं सम्यङ् मयेनोक्तम् ॥ १५ ॥

पादोनं भागमर्धं वा ब्रह्मसूत्रविशालता ।
भवेद् विष्ण्वंशपर्यन्तं ब्रह्मसूत्रस्य तु स्थितिः ॥ १६ ॥

तदर्धं पार्श्वसूत्रस्य लेखा मध्यभवा भवेत् ।
तथा द्राविडलिङ्गोच्चे त्रिपञ्चांशे क्रमेण तु ॥ १७ ॥

नन्दद्विशुद्रभागोच्चे हीनादुच्चमिहोदितम् ।
सप्ताष्टनवभागे(स्यात्? भ्यः) क्रमात् सूत्रे तु लम्बयेत् ।

नीचे युगाग्निद्वितये मध्ये बाणयुगाग्निषु ।
द्वयोश्चाथोत्तमे लिङ्गे रसेषु श्रुतिभागिषु ॥ १९ ॥

युतिः स्याद् द्राविडे सू(त्रे ? त्र)व्यासः स्वांशार्धतः समः।
तदर्धं पक्षसूत्रस्य व्यासागाधे च पूर्ववत् ॥ २० ॥
षोडशांशे शिवायामे सूत्रायामो दशांशतः।
ऊर्ध्वांशश्च चतुर्भागः स्यादधश्च द्विभागिकः ॥ २१ ॥
मुकुलाकारमारभ्य पार्श्वसूत्रद्वयं क्रमात्
द्व्यंशं विहाय पृष्ठे तु युतिर्युक्ता तयोः पुनः ॥ २२ ॥
अथवा षोडशांशेऽधोभागं वेदांशमूर्ध्वतः।
त्यक्त्वा सूत्रं तु रुद्रांशैरुच्चात् प्राग्वद् युतिः स्मृता ॥
इत्थं द्राविडलिङ्गस्य लक्षणोद्धारणं स्मृतम्।
अथ वेसरलिङ्गस्य त्रिपञ्चांशे शिवोच्छ्रये ॥ २४ ॥
नालायामो दशांशः स्याद् वस्वंशप्रभृति क्रमात्।
सूत्रयोर्लम्बनं कुर्याद् भूतवेदगुणांशकैः ॥ २५ ॥
तयोर्युतिर्भवेच्छ्रेष्ठे विष्कम्भः षोडशांशतः।
मध्येऽशे वसुभागोऽच वेदांशैर्नालमुन्नतम् ॥ २६ ॥
ऊर्ध्वे त्रयोंऽशाः शोध्योंऽशो गुणभागात् प्रभृत्यधः।
सूत्रे तु लम्बयेत् त्रिद्विभागेषु स्यात् तयोर्युतिः॥ २७ ॥
गृहीतांशे त्रिधा भक्ते व्यासो भागद्वयेन तु।
एवं मध्यममुक्तं स्याल्लिङ्गे वेसरसंज्ञिते ॥ २८ ॥
कनिष्ठवेसरस्याथ द्वादशांशे शिवोच्छ्रये।
अधोंऽशमंशा(दू ? वू)र्ध्वे तु सूत्राय:(मे ? मो) नवांशतः॥
सङ्गमः पूर्ववज्ज्ञेयो भागे वै षोडशांशिते।
भागेन सूत्रव्यासः स्यात् तदर्धं पक्षसूत्रयोः ॥ ३० ॥

कनिष्ठवेसरस्यैवं लक्षणोद्धारणं स्मृतम् ।
छत्राभमस्तके लिङ्गे सूत्राग्रं स्याद् गजाक्षवत् ॥ ३१ ॥
खण्डेन्दुमस्तके लिङ्गे सूत्राग्रं बुद्बुदोपमम् ।
लिङ्गाग्रे त्रपुषाभे तु सूत्राग्रं कुक्कुटाण्डवत् ॥ ३२ ॥
कुक्कुटाण्डशिरोलिङ्गे सूत्राग्रं छत्रसन्निभम् ।
सामान्येन तु लिङ्गानां मूत्राग्रमथ कथ्यते ॥ ३३ ॥
कदलीमुकुलाभं वा सरोजमुकुलाकृति ।
अश्वत्थपत्रसदृशं सामान्यं हि यवोपमम् ॥ ३४ ॥
अत्यष्टयंशे तु लिङ्गाभे भागं त्रेधा विभज्य तु ।
मध्यसूत्रततिद्व्यंशं तदर्धं पक्षसूत्रयोः ॥ ३५ ॥
कनिष्ठवेसरस्यैवं लक्षणोद्धार ईरितः ॥ ३६ ॥

अथ मुखलिङ्गम् ।

यथोक्ताव्यक्तलिङ्गेषु शिवांशे दशभाजिते ।
अश्विनेत्राग्निभागैः स्यात् स्कन्धः कण्ठस्तथाननम् ॥ ३७ ॥
उष्णीषोंऽशस्तु मकुटं द्व्यंशमूर्ध्वं तु भागतः ।
भागेन मुखविष्कम्भो विस्तृतश्चोर्ध्वलिङ्गवत् ॥ ३८ ॥
ललाटकण्ठभ्रूनेत्रघ्राणगण्डमुखादिकम् ।
मानोन्मानप्रमाणेन सर्वं सकलवत् स्मृतम् ॥ ३९ ॥
अथैकत्रं चतुर्वक्त्रं ग्रामादिष्वेव विन्यसेत् ।
द्विवक्त्रं पर्वतेऽरण्ये परराष्ट्रान्तिकेऽपि च ॥ ४० ॥
स्थापयेत् तदरिध्वंसं विदधाति स्वलक्षणम् ।
चतुस्त्र्येकानन भूत्यै पञ्चास्यं चाभिचारकम् ॥ ४१ ॥

---

१. 'गे' ग. पाठः.

(वि ? द्वि)मुखं चारिनाशाय स्थाप्यं शैलवनादिषु ।
सर्वेषां मुखलिङ्गानां निर्गमः स्यात् पृथक् पृथक् ॥ ४२ ॥
प्रविष्टा कन्धरा कार्या विष्णुभागोपरि स्थिता ।
हस्तादिपञ्चहस्तान्तं मुखलिङ्गं प्रकल्पयेत् ॥ ४३ ॥
अतः परं न कुर्वीत मुखलिङ्गं शुभेच्छया ।
पूजांशार्धे त्रिभागैकं गाढं वा स्फाटिके मतम् ॥ ४४ ॥
समं त्रिपादमर्धं वा पूजांशात् तस्य विस्तृतिः ।
सधारं वाथ वृत्तं वा लिङ्गं स्यात् स्फाटिकं स्मृतम् ॥४५॥
शिरसो वर्तनं प्राग्वद् ब्रह्मसूत्रं न भावयेत् ।
ब्रह्मसूत्रं विनाप्येतत् तेजोद्रव्यं वरप्रदम् ॥ ४६ ॥
स्फटिकादिशिलाद्यैस्तु प्रतिमाकरणे पुनः ।
वज्रं[१] शस्त्रं प्रकर्तव्यं कारयेत् तेन शाणया ॥ ४७ ॥
दारणच्छेदनादौ तु कृष्णलोहशलाकया ।
शाणाचूर्णेन तोयेन यथायुक्ति समाचरेत् ॥ ४८ ॥
स्फाटिकं शकलं वाथ दग्ध्वा चूर्णीकरोत्वथ ।
पिष्ट्वा तच्चूर्णमम्भोभिस्तत[२] पिष्टं कदलीदले ॥ ४९ ॥
विन्यस्याङ्गारराशौ तु पाचयेन्मोदकं यथा ।
तस्मिन्नग्निनिभे जाते मन्दमादाय चूर्णयेत् ॥ ५० ॥
तच्चूर्णं किंशुकाक्लृप्तफलकायां समाहितः ।
किञ्चिदुद्धूलनं कृत्वा तल्लिङ्गं तेन मर्दयेत् ॥ ५१ ॥
यावत् सुश्लक्ष्णता तद्वत् प्रभाजालसमुद्गतिः ।
जायते तावदेवं हि मर्दयेत् स्फाटिकादिकम् ॥ ५२ ॥

१. 'ज', २. 'ष्ट्वा' ख. पाठः.

अथ योन्याद्यम् ।

त्रिविधाङ्गुलमानानां जात्यंशं नातिरोपयेत् ।
बेरेषु तेषु योन्याद्यं नयेत् स्वैः स्वैरिहाङ्गुलैः ॥ ५३ ॥
लिङ्गानामपि शिष्टानां जात्यंशारोपणं मतम् ।
(माने) चतुरशीत्यंशे (द्विषष्ट्यंशे) तदुच्छ्रये ॥ ५४ ॥
सङ्कृत्यंशे विकारांशे विप्रादीनां यथाक्रमम् ।
एकांशारोपणादुक्तं जात्यंशारोपणं हितम्[१] ॥ ५५ ॥
प्रस्तुतप्रतिमोत्सेधं त्रिंशदंशादितः क्रमात् ।
शतांशान्तं विभज्यैषु भागैरन्यतमैर्बुधैः ॥ ५६ ॥
उक्तविप्रादिमानेषु जात्यंशारोपणं स्मृतम् ।
गृहीतोत्सेधमाने तु मानाङ्गुलविभाजिते ॥ ५७ ॥
वृद्ध्या वाङ्गुलिविच्छेदं परिहृत्य प्रकल्पयेत् ।
मानं प्रमाणमित्यादि पूर्वोक्तन्यायमाश्रितः ॥ ५८ ॥
योनिवारादिघटनां योजयेच्छोभनं यथा ॥ ५८- ॥

इति शिल्परत्ने उत्तरभागे लक्षणोद्धारविधिर्नाम
तृतीयोऽध्यायः ॥

अथ चतुर्थोऽध्यायः ।

अथ सकलबिम्बोत्सेधः ।

द्वारोत्सेधसमं तदङ्घ्रिरहितं द्वारेऽखिले चोनिते
नन्दांशेन गजांशकेन च समं भक्ते त्रिधा द्व्यंशकैः ।

---

१. 'क' ख., 'का' क. ग. पाठः. २. 'त्' ख. पाठः.

कलसानीत्युदितानि पञ्च मनुबिम्बान्यत्र गर्भालये
भक्ते लोकशरेक्षणैर्द्विगुणभूम्यंशग्रहात् त्रीणि च ॥१॥
गर्भगेहे ततो नन्दभागे नन्दविधोन्नतम् ।
अथवा गर्भगेहे तु त्रिनवांशविभाजिते ॥ २ ॥
एकांशादेकवृद्ध्या तु सप्तविंशतिधा पुनः ।
अथवाष्टादशांशे तु गर्भगेहविशालके ॥ ३ ॥
तावता बिम्बमानोच्चमेकादेकांशवर्धनात् ।
गर्भद्वारस्य चोत्सेधं गजभागविभाजिते ॥ ४ ॥
पञ्चांशमुत्तमोत्सेधं मध्यमं चतुरंशकम् ।
अधमं तु गुणांशं स्यात् त्रिविधं द्वारमानतः ॥ ५ ॥
अधमोत्तमयोर्मध्यं वसुभागविभाजिते ।
नवधा सकलोत्तुङ्गं द्वारमानाद् विधीयते ॥ ६ ॥
अथवा द्वारतुङ्गं तु सप्तविंशतिभाजिते ।
एकैकांशविहीनेन बिम्बोच्चं त्र्यक्षभेदतः ॥ ७ ॥
एवं हि द्वारमानेन षट्त्रिंशद्भेदतोदितम् ।
अथाधिष्ठानमानेन एवमेवाङ्घ्रिमानतः ॥ ८ ॥
बाह्यप्रासादमानेन गर्भगेहोक्तवत् स्मृतम् ।
एकादिनवहस्तान्तं नवधा हस्तमानतः ॥ ९ ॥
तालादिदशतालान्तं तालमानेन कल्पयेत् ।
कर्तुश्च हृदयान्तं वा स्तनान्तं बाहुसीमकम् ॥ १० ॥
हन्वन्तं चास्यसीमान्तं नेत्रसूत्रावसानकम् ।
कर्तुश्चोदयतुल्यं वा यजमानवशादिमे ॥ ११ ॥

अथ वा कर्तृतुङ्गं तु नवभागविभाजिते ।
एकैकांशकहीनेनाप्यष्टधा सकलोदयम् ॥ १२ ॥
मानाङ्गुलैः पुरा प्रोक्तैस्तथा मात्राङ्गुलैरपि ।
सप्ताङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ॥ १३ ॥
त्रयोविंशाङ्गुलं यावत् तावद् बिम्बोदयं स्मृतम् ।
सर्वेषामपि बिम्बानां प्रोक्तानां बहुधात्र हि ॥ १४ ॥
उष्णीषात् पादपर्यन्तं तुङ्गमापादमूर्धकम् ।

अथ बहुबेरे—

शम्भोर्नासाग्रमानं वा हनुसीमान्तमेव वा ॥ १५ ॥
(ते कांस्ये मथाभिघार्य हविषा मूलेन लिङ्गाकृतिं
कृत्वाथा दशरुद्रदिग्वसुदो भिन्नैर्मतं चाङ्गुलैः ।
विप्रादिष्वथ वर्णभेदविहितं साज्यं दधि क्लेदितम् ?)
........................................ ॥ १६ ॥

तयोर्मध्येऽष्टधा भङ्क्त्वा नवधा शक्तितुङ्गकम् ।
सर्वेषामपि पार्श्वाङ्कस्थितशक्त्युदयं तथा ॥ १७ ॥
बहुबेरविधानमूलबिम्बं सुसमं द्वारसमुच्छ्रयेण कार्यम् ।
चरणांशविवृद्धमर्धवृद्धं पादोनद्विगुणं द्विसंगुणं च ॥

गृहे त्वात्मार्थबिम्बानां मानं मात्राङ्गुलेन तु ।
कर्तव्यमन्यथाचेत्तु वक्तव्यं कर्तृनाशनम् ॥ १९ ॥
अङ्गुलैर्निर्मितं बिम्बं सर्वजात्यर्हकं शुभम् ।
अङ्गुलीनिर्मिते बिम्बे जात्यंशं नातिरोपयेत् ॥ २० ॥

अङ्गुलादन्यबिम्बोच्चे सवेदाशीतिभाजिते ।
एकांशं रोपयेत् तत्तु विप्रजात्यर्हकं स्मृतम् ॥ २१ ॥
द्विभागाधिकषष्ट्यंशैर्भक्त्वैकांशसमन्वितम् ।
नृपजात्यर्हकं बिम्बमथार्कद्विगुणांशिते ॥ २२ ॥
एकांशारोपणं वैश्ययोग्यं बिम्बमिति स्मृतम् ।
षोडशांशेंऽशमारोप्यं बिम्बं शूद्रस्य सम्मतम् ॥ २३ ॥
एवं जात्यंशसंयुक्तबिम्बमानेन पूर्ववत् ।
योन्यादीनि समानीय चिन्तयेत्तु शुभाशुभम् ॥ २४ ॥
गृहोक्तमार्गमाश्रित्य विशेषः कथ्यतेऽत्र हि ।
यद्योनिर्निलयेऽर्चायां तद्योनिः स्यान्नचान्यथा ॥ २५ ॥
कर्तुश्च जन्मनक्षत्रान्नृपवास्तुदिनात् तथा ।
गुणयेद् बिम्बतारान्तं तेन लोकप्रसिद्धितः ॥ २६ ॥
विचार्य गणयोगादि शोभनं तु परिग्रहेत् ।
भौमवारो विवर्ज्यः स्यान्मध्यमौ सौरिसूर्ययोः ॥ २७ ॥
भानुवारादिभिर्युक्तं विशाखादि चतुश्चतुः ।
वियोगं मरणं नाशममृतं च यथाक्रमम् ॥ २८ ॥
सर्वेषामपि वृद्ध्यर्थं जात्यंशारोपणं स्मृतम् ।
तस्मात् तदनु कर्तव्यमायादीनां तु चिन्तनम् ॥ २९ ॥

अथ कौतुकोच्चम् ।

सकले सति मूलबिम्बके निगमांशोन्मिति कर्मबिम्बकम् ।
सकलाकृति निष्कलेऽपि वा स्थितमासीनमतः प्रकल्पयेत्
[॥ ३० ॥

आयामेन शिवांशकस्य रचयेन्नाहेन वा सम्मितं
व्यासेनापि च मन्त्रलिङ्गविषये तत् कर्मबिम्बं शिवे ।
भङ्क्त्वा षोडशधा पुनस्त्रयमिदं रुद्राङ्कशैलाशुगा-
न्यंशैर्वाधिकमूनितं च कुहचित् कुर्यात् तदौचित्यतः ॥३१॥
सौवर्णे.................................।
........................ ....... ॥

लिङ्गमानेन बिम्बोच्चं कथ्यते पूर्वशास्त्रतः ।
पूजांशद्विगुणा वा स्यात् तुङ्गे द्वात्रिंशदंशिते ॥ ३२ ॥
तेषु वै सप्तविंशांशं पञ्चविंशांशमेव वा ।
त्रिभागाधिकविंशांशमेकविंशांशमेव वा ॥ ३३ ॥
एकोनविंशतिर्वाथ नृपांशं विश्वभागिकम् ।
रुद्रांशं नन्दभागं वा सप्तांशं पञ्चभागिकम् ॥ ३४॥
स्थूलदेशस्य लिङ्गानां पूर्वोक्तपरिणाहतः ।
तुल्यं विस्तारतो वाथ पूर्वोक्तक्रमतो द्वयम् ॥ ३५ ॥
अंशीकृत्य यथोक्तांशैः कौतुकोच्चं करोतु वा ।
पूजांशोच्चं तु नाहं विततिमपि पृथग् ह्यष्टभागं तु कृत्वा
तैरेवांशैस्त्रिभेदैर्गुणशरमुनिनन्दांशरुद्रांशकैर्वा ।
न्यूनं चैवाधिकं वा सममपि कथितं लिङ्गतो बेरमानं
भेदैर्गीर्वाणसंख्यैरिति विदितमभूत् पूर्वशास्त्रान्तरेषु॥३६॥

अथ तालनियमः —

उत्तमं दशतालाख्यं चतुर्विंशच्छताङ्गुलम् ।
मध्यमं दशतालं स्याद् त्रिंशाधिकशताङ्गुलम् ॥ ३७ ॥

अधमं दशतालं तु कलाधिकशताङ्गुलम् ।
तालं प्रत्ययमेवं तु क्रमाद् वेदांशहानितः ॥ ३८ ॥
उत्तमं नवतालादि बिम्बमानमुदाहृतम् ।
उत्तमं दशतालेन ब्रह्मविष्णुमहेश्वराः ॥ ३९ ॥
मध्यमं दशतालेन तथैवोमासरस्वती ।
उषा भूमिश्च दुर्गा च लक्ष्मीर्ज्येष्ठा च मातरः ॥ ४० ॥
मध्यमं दशतालेन वा त्रिमूर्तीन् प्रकल्पयेत् ।
कन्यसं दशतालेन चन्द्रादित्यावथाश्विनौ ॥ ४१ ॥
आर्यं शतमखं चैव चण्डेशं क्षेत्रपालकम् ।
महर्षीणां गणांश्चैव तेषां देवीश्च कारयेत् ॥ ४२ ॥
उत्तमं नवतालेन विघ्नेशान् लोकपालकान् ।
वसूंश्च दिक्पतींश्चैव अस्त्रमूर्तीश्च गुह्यकान् ॥ ४३ ॥
देवानन्यांश्च देवीस्ताः कारयेल्लक्षणान्वितम् ।
मध्यमं नवतालेनाप्यष्टमूर्तिमरुद्गणान् ॥ ४४ ॥
यक्षासुरगणाश्चैव करोतु शुभलक्षणम् ।
कन्यसं नवतालेन विद्याधरगणांस्तथा ॥ ४५ ॥
असुरान् सिद्धगन्धर्वान् पितरश्च तथैव च ।
अष्टतालेन मर्त्यांस्तु पिशाचाः सप्ततालतः ॥ ४६ ॥
षष्ठतालेन कुब्जाश्च तत्तच्छेषान्तराधमाः ।
तत्तदुत्तममध्यादिभेदेनैव भवन्त्यतः ॥ ४७ ॥
पञ्चतालोत्तमेनैव विघ्नेशं स्कन्दमेव च ।
वामनं च करोत्वस्य भूतान् मध्येन वाधमात् ॥ ४८ ॥

बालांस्तु वेदतालेन कुर्याद् भूतगणांस्तु वा ।
त्रितालेन तु कर्तव्या यक्षकिन्नरजातयः ॥ ४९ ॥
द्वितालेनैव कूश्माण्डांस्तालात् कूर्माकृतिर्हरिः ।
यथोक्तप्रतिमायामं मूर्तिभेदवशादिह ॥ ५० ॥
विभज्यार्काङ्गुलं तालं गोलकं वा कलां तथा ।
विदिताद्यङ्गुलं मानमङ्गुलाष्टांशकं यवम् ॥ ५१ ॥
प्रायः स्ववाञ्छितमिति द्विगुणायतेष्ट-
पादोनविस्तृततदर्धघनां शिलां ताम् ।
तुर्यश्रितां समतले निपुणां निधाय
प्रस्तारमत्र तनुयादथ मन्त्रमूर्तेः ॥ ५२ ॥

इति शिल्परत्ने उत्तरभागे प्रतिमोत्सेधविधिर्नाम चतुर्थोऽध्यायः ॥

## अथ पञ्चमोऽध्यायः ।

### अथोत्तमं दशतालम् ।

त्रियवाधिकचन्द्रांशमुष्णीषोच्चमुदाहृतम् ।
तस्मादापूर्वकेशान्तं कारयेदग्निभागतः ॥ १ ॥
केशान्तादक्षिसूत्रान्तं युगांशं त्रियवाधिकम् ।
अक्षिसूत्रान्नासिकान्तं तस्माच्च हनुसीमकम् ॥ २ ॥
प्रत्येकं त्रियवाधिक्ययुगभागोदयं तथा ।
हन्वादिगलमानं तु चतुर्यवमुदाहृतम् ॥ ३ ॥
यवैकोनयुगांशं तु कण्ठोच्चं परिकीर्तितम् ।
कण्ठान्ततिर्यक्सूत्रं तु तालुसूत्रमुदाहृतम् ॥ ४ ॥

हिक्कासूत्राद्धृदयान्तं हृदयाच्चाभिसीमकम् ।
नाभेस्तु मेढ्रमूलान्तं विश्वांशत्रियवैः पृथक् ॥ ५ ॥
मेढ्रमूलगतं तिर्यक्सूत्रं मध्याभिधं स्मृतम् ।
मध्यसूत्रादूरुदीर्घं सप्तविंशांशकैः स्मृतम् ॥ ६ ॥
तस्माद् वेदाङ्गुलं जानुतुङ्गं जङ्घोरुमानवत् ।
तस्मात् पादतलोत्सेधं युगांशं परिकीर्तितम् ॥ ७ ॥
अङ्गुष्ठाग्रात्तु पार्ष्ण्यन्तं तलं सप्तदशाङ्गुलम् ।
हिक्कासूत्रादधो बाहुदीर्घमृक्षाङ्गुलं तथा ॥ ८ ॥
कोर्परायाममद्व्यंशमेकविंशांशकं ततः ।
प्रकोष्ठस्यायतं तस्मात् सार्धत्रयोदशांशकम् ॥ ९ ॥
मध्याङ्गुलाग्रपर्यन्ततलायामं करस्य तु ।
सार्धभान्वङ्गुलं तारं मुखे तस्यान्तविस्तृतिः ॥ १० ॥
सार्धत्रयोदशैरंशैर्ग्रीवाग्रे सार्धनन्दकैः ।
ग्रीवामूले दशांशैस्तु विस्तारं परिकल्पयेत् ॥ ११ ॥
हिक्काधो बाहुसीमान्तं चत्वारिंशांशमेव हि ।
सार्धद्वाविंशदंशं तु कक्षयोरन्तरं तथा ॥ १२ ॥
नवांशं चतुर्यवोपेतं बाहुमूलविशालकम् ।
एकविंशतिभागं तु स्तनदेशे तु विस्तृतिः ॥ १३ ॥
हृदयावधिविस्तारमेकोनविंशदङ्गुलम् ।
कलांशं चतुर्यवोपेतं मध्यव्यासमुदाहृतम् ॥ १४ ॥
एकोनविंशदंशं तु श्रोणीदेशविशालकम् ।
तत्र मेढ्रविशालं तु द्वियवाधिकमङ्गुलम् ॥ १५ ॥

तदधः कटिपार्श्वान्तं सार्धविंशांशकैः स्मृतम् ।
पादोनमनुभागं तदूरुमध्यविशालकम् ॥ १६ ॥
जानुदेशस्य विस्तारं पादहीननवांशकम् ।
सपादपञ्चभागं तु जङ्घामूलविशालकम् ॥ १७ ॥
पादोनसप्तभागं तु जङ्घामध्यविशालकम् ।
तयोर्मध्यततं भागैर्नवभिः संप्रकीर्तितम् ॥ १८ ॥
पादोनपञ्चभागं तु नलकायास्तु विस्तृतम् ।
त्रियवाधिकपञ्चांशं गुल्फाक्षव्यासमानकम् ॥ १९ ॥
अक्षादातलतुङ्गं तु सार्धवेदाङ्गुलं स्मृतम् ।
पार्ष्णितारं च तत्तुल्यं पार्ष्णेरुच्चं तदेव हि ॥ २० ॥
तलमध्यं षडंशं तु यवद्वयसमन्वितम् ।
तलाग्रविस्तृतं सप्तभागमित्येवमीरितम् ॥ २१ ॥
द्वियवाधिकवेदांशं पादाङ्गुष्ठाङ्गुलायतम् ।
यवोपेतद्वयांशं तु तस्य विस्तारमेव हि ॥ २२ ॥
तारार्धं नखविस्तारं ततः पादोनमायतम् ।
त्रियवोपेतवेदांशं तर्जन्यायाममानकम् ॥ २३ ॥
पादोनवेदभागं तु दीर्घं मध्यमिकाङ्गुले ।
यवोपेताग्निभागं तदुपान्त्याङ्गुलिकायतम् ॥ २४ ॥
सार्धपक्षांशमानं तु कनिष्ठाङ्गुलिकायतम् ।
देशिन्यादि क्रमात् तारं नवसप्तार्धसप्तभिः ॥ २५ ॥
षड्भिरंशैः पृथक् तत्र कल्पयेच्छिल्पवित्तमः ।
नखमानं स्वतारार्धमित्याद्युक्तप्रकारतः ॥ २६ ॥

तत्तदङ्गुलविस्तारं वेदांशैर्विभजेत् पुनः ।
त्रिभागमङ्गुलाग्रोच्चमशेषं वा नखेतरे ॥ २७ ॥
त्रियवाधिकवस्वंशं बाहुमध्यविशालकम् ।
सपादसप्तभागं तु कोर्परे व्यासमुच्यते ॥ २८ ॥
पादोनरसभागं तु प्रकोष्ठे मध्यविस्तृतिः ।
पादोनचतुरंशं तु मणिबन्धविशालकम् ॥ २९ ॥
सप्तांशं तत्तलायामं सार्धाङ्गैर्मध्यमाङ्गुलिः ।
सपादभूतभागं ह्यप्यनामिकाङ्गुलायतम् ॥ ३० ॥
यवसंयुक्तपञ्चांशं तर्जन्यङ्गुलिकायतम् ।
सपादवेदभागं तु दीर्घमन्याङ्गुलद्वये ॥ ३१ ॥
अङ्गुष्ठमूलविस्तारं सपादांशमुदाहृतम् ।
तर्जनीमूलमेकांशं मध्यायां यवनन्दकम् ॥ ३२ ॥
अनामिका तर्जनीवत् कनिष्ठा षड्यवोन्मिता ।
तत्तन्मूलविशालस्य षोडशांशविवर्जितम् ॥ ३३ ॥
तत्तदग्रविशालं तु तत्तारे रसभाजिते ।
पञ्चांशं नखविस्तारं शिष्टार्धं पार्श्वमांसलम् ॥ ३४ ॥
सपादतारं सर्वेषां नखानामायतं तथा ।
वृत्तायतं नखाकारं करयोः पादयोस्तथा ॥ ३५ ॥
नखद्विगुणमानं तदग्रपर्वायतं तथा ।
अङ्गुष्ठमूलपर्वस्य दीर्घं सप्तदशैर्यवैः ॥ ३६ ॥
तथैवाष्टादशयवैर्मध्यमामूलपर्वकम् ।
तर्जन्यनामिकामूलपर्व षोडशभिर्यवैः ॥ ३७ ॥

कनिष्ठिकामूलपर्वं त्रयोदशयवं स्मृतम् ।
मूलाग्रपर्वयोर्मध्यं दीर्घं मध्यस्थपर्वसु ॥ ३८ ॥
अङ्गुष्ठं तु द्विपर्वाढ्यं शेषास्त्रिपर्वसंयुताः ।
सार्धभूताङ्गुलं तत्र तलेऽग्रविपुलं भवेत् ॥ ३९ ॥
रसांशं मध्यविस्तारं मूले सार्धषडंशकम् ।
अङ्गुष्ठमूलात् तर्जन्या मूलं सार्धत्रिभागतः ॥ ४० ॥
अङ्गुष्ठमूलाद् वेदांशं मणिबन्धान्तमेव हि ।
अध्यर्धांशं घनं पाणितले पार्ष्णौ त्रिपार्श्वकम् ॥ ४१ ॥
तलाग्रे बाङ्गुलं कुर्याद् घनं सर्वेषु सम्मतम् ।
अङ्गुलीनामधस्तात् तु मांसलं त्वर्धमात्रतः ॥ ४२ ॥
द्विभागं पार्ष्णिहस्तस्य शुक्लोदरविशालकम् ।
शेषं मध्यतलं निम्नं भूतवेदाग्निभिर्यवैः ॥ ४३ ॥
सूक्ष्मरेखा लिखेत् तस्मिन् यवाभाश्चक्रशूलवत् ।
पद्माभं वाङ्कुशाभं वा यूकागाधतलान्वितम् ॥ ४४ ॥
वृत्ताभापेक्षिताङ्गेषु व्यासे पञ्चविभाजिते ।
एकांशं परिगृह्यात्र विस्तारत्रिगुणान्वितम् ॥ ४५ ॥
तत्तदङ्गपरीणाहं सुमतिः सम्प्रकल्पयेत् ।
कर्णोर्ध्वे शिरसो नाहं साष्टत्रिंशाङ्गुलं भवेत् ॥ ४६ ॥
कर्णोर्ध्वे तु शिरस्तारं यवोनद्वादशाङ्गुलम् ।
कर्णयोः पूर्वनाहं तु द्वाविंशद्भिरथाङ्गुलैः ॥ ४७ ॥
कर्णयोः पृष्ठनाहं तु भान्वङ्गुलमुदाहृतम् ।
तयोर्मध्यस्थभागं तु कर्णस्थितिरुदाहृता ॥ ४८ ॥

शिरसो मध्यमान्मूर्ध्नि मण्डलं चतुरङ्गुलम् ।
तथैवोदग्रकेशान्तं नवाङ्गुलमुदाहृतम् ॥ ४९ ॥
ततो वै मण्डलात् कर्णं केशान्तं च नवाङ्गुलम् ।
मण्डलात् पृष्ठकेशान्तं सार्धपर्ञ्जुलं स्मृतम् ॥ ५० ॥
ललाटे कीर्तिमानं तु नवाङ्गुलमुदाहृतम् ।
केशान्तस्याक्षिसूत्रस्य द्वयोर्मध्ये ह्यवस्थितम् ॥ ५१ ॥
भ्रुवोरग्रं नवाङ्गुल्यं चापाकारं यथा कुरु ।
अन्तरं तु भ्रुवोश्चैव सार्धवेदयवं भवेत् ॥ ५२ ॥
पञ्चाङ्गुलं भ्रुवोर्दीर्घं मध्ये तारं यवद्वयम् ।
प्रतिपच्चन्द्रवत् क्षीणौ भ्रुवाग्रौ तस्य मध्यमात् ॥ ५३ ॥
कनीनिकाया विस्तारं यवमानं विशेषतः ।
कृष्णमण्डलविस्तारं चोत्सेधं षड्यवं भवेत् ॥ ५४ ॥
सितांशं तत्समव्यासं कृष्णमण्डलपार्श्वयोः ।
शफराकृतिकं वापि सरोजाकृतिमेव वा ॥ ५५ ॥
अर्धचन्द्राकृतिर्वापि नेत्राकारं प्रकल्पयेत् ।
तत्तारकानुकूल्याच्चं सितमण्डलकस्य हि ॥ ५६ ॥
अर्धनेत्रयवं रक्तं मण्डलं त्वधिकांशके ।
कृष्णमण्डलमध्ये तु ज्योतिर्मण्डलकं यवम् ॥ ५७ ॥
तदष्टांशैकभागं तु तन्मध्ये दृष्टिमण्डलम् ।
सार्धभूयवमानं तदूर्ध्वपक्ष्मविशालकम् ॥ ५८ ॥
अथ पञ्चयवैस्तुल्यं दीर्घमष्टादशैर्यवैः ।
नेत्रयोरन्तरं कुर्यात् सपादद्व्यंशमानतः ॥ ५९ ॥

१. 'कार्यमा' क. ग. पाठः.

कर्तुर्नाशमधोदृष्टिरूर्ध्वदृष्टिस्तथा विपत् ।
बन्धुनाशं पार्श्वदृष्टिर्ग्रामहानिं करोतु वा ॥ ६० ॥
तस्मात् सर्वप्रयत्नेन समदृष्टिर्यथा कुरु ।
नासिकापुटबाह्यं तु तारमष्टादशैर्यवैः ॥ ६१ ॥
तदर्धं मध्यविस्तारं तस्यार्धं मूलविस्तृतिः ।
ओष्ठमूलात्तु नासाग्रं तुङ्गं तु द्व्यङ्गुलं भवेत् ।
द्वारतिर्यग्गतं व्यासं सार्धसप्तयवं स्मृतम् ।
द्वारतुङ्गं पञ्चयवं पुटं निष्पावबीजवत् ॥ ६३ ॥
तिलपुष्पवदाकारं नासिकाया विशेषतः ।
पुष्करोत्सेधमेकांशं तद्घनं त्रियवं भवेत् ॥ ६४ ॥
पुटयोर्मध्यभित्तिस्तु पुष्करं त्विह कथ्यते ।
अध्यर्धयवमालम्ब्य नासाग्रं पुटसूत्रतः ॥ ६५ ॥
सार्धवेदयवं गोष्ठं दीर्घं तस्यार्धविस्तृतम् ।
ऊर्ध्वोष्ठस्योर्ध्वबिम्बं तु गोजीनाम्ना प्रशंसितम् ॥ ६६ ॥
यवमानं तु तां गोजीं कृत्वैवं नासिकादधः ।
सपादचतुरंशं तु तिर्यगास्यगुहायतम् ॥ ६७ ॥
उत्तरोष्ठायतं तस्य दीर्घतुल्यमुदाहृतम् ।
उत्तरोष्ठस्य मध्ये तु ततं सार्धयवत्रयम् ॥ ६८ ॥
आनुपूर्व्या कृशं तारमास्यसीमावसानकम् ।
यवमानं घनं वापि तस्यौष्ठस्य तथोपरि ॥ ६९ ॥
त्रियवावनता वापि तदोष्ठसदृशायतम् ।
अष्टादशयवं प्रोक्तमधरोष्ठायतं तथा ॥ ७० ॥

यवाधिकाङ्गुलं तस्य विस्तारं परिकल्पयेत् ।
अधरं पालिका सार्धयवमानमधोगतम् ॥ ७१ ॥
चिबुकादधरोच्चं तु सार्धषड्यवमुच्यते ।
किञ्चित्प्रहसिताकारं सुष्ठु युक्त्या समाचरेत् ॥ ७२ ॥
अधराच्चिबुकालम्बं सार्धपक्षाङ्गुलं भवेत् ।
चिबुकात् तु हनोः स्थानं सार्धं च यवमुच्यते ॥ ७३ ॥
सार्धवह्न्यङ्गुलं तस्य तारमायतवृत्तवत् ।
हनोः सन्धेः कर्णसन्धिर्द्यन्तरं तु दशाङ्गुलम् । ७४ ॥
हनोर्बाह्ये तदारभ्य पादोनद्विगुणाग्रकम् ।
कर्णवेशमिति ख्यातं तत्र कर्णं प्रकल्पयेत् ॥ ७५ ॥
नेत्रात् तु कर्णबन्धान्तविस्तारं सप्तमात्रकम् ।
कर्णस्य तु विशालं तु अष्टादश यवाः स्मृताः ॥ ७६ ॥
अक्षिसूत्रोर्ध्वतः कर्णतुङ्गं चाष्टादश यवाः ।
तदर्धं चोर्ध्वबन्धं तु शेषं वृत्तमुदाहृतम् ॥ ७७ ॥
नेत्रसूत्रादधः कर्णं यवाः सप्तदश स्मृताः ।
सार्धवेदाङ्गुलं तस्मात् तस्य नालं प्रकल्पयेत् ॥ ७८ ॥
पूर्वभागे नतं व्योमभागं सार्धांशकं परम् ।
नालयोर्व्योसमाख्यातं पुनरर्धाङ्गुलं तयोः ॥ ७९ ॥
नालान्तरं त्रिपादांशं वेदांशं विस्तराद् घनम् ।
कर्णतुङ्गमशेषं तु यवैकोननवाङ्गुलम् ॥ ८० ॥
विफलीनवमर्धांशं द्विगुणं हि तदायतम् ।
उत्सेधं चार्धमात्रं स्यान्मूलादग्रं क्षयानुगम् ॥ ८१ ॥

द्विभागं पिञ्चषीदीर्घमध्यधाँशं हि तत्ततम् ।
अक्षिसूत्रादधः कर्णचारमर्धाङ्गुलं भवेत् ॥ ८२ ॥
कर्णद्वारं ततो निम्नं सममेव तु वर्तुलम् ।
कर्णपालिघनं सार्धयवं नीव्रं चतुर्यवम् ॥ ८३ ॥
पृष्ठकर्णस्य विस्तारमध्यधाँशमुदाहृतम् ।
केशान्तात् पृष्ठकर्णान्तस्यान्तरं त्वर्धमात्रकम् ॥ ८४ ॥
पृष्ठकर्णावसाने तु + + न्यधाँशकं घनम् ।
तस्याधः पृष्ठकण्ठोच्चं युगांशं त्रियवाधिकम् ॥ ८५ ॥
कृकाटिकाधोग्रीवाग्र+ + + तन्नवांशकम् ।
पृष्ठग्रीवस्य मूलस्य तारं सार्धदशाङ्गुलम् ॥ ८६ ॥
मूलादग्रं क्रमात् क्षीणं ग्रीवं वृत्ताभमुच्यते ।
हिक्कासूत्रोपरि स्कन्धसन्धितुङ्गं युगाङ्गुलम् ॥ ८७ ॥
कर्णबन्धादधः सार्धषण्मात्रं स्कन्धसीमकम् ।
सप्ताङ्गुलघनं स्कन्धं हिक्कावधि क्रमात्क्षयम् ॥ ८८ ॥
पृष्ठग्रीवादधस्तात् तु ककुन्मानं दशाङ्गुलम् ।
तस्मादाकटिसन्ध्यन्तं वंशमृक्षाङ्गुलायतम् ॥ ८९ ॥
तद्वंशौ[1] नतविस्तारौ सार्धषोडशकैर्यवैः ।
वंशमानादधस्तात् तु वंशमूलं गुणाङ्गुलम् ॥ ९० ॥
अपरे तुङ्गमेव स्याद् व्यासं तस्य न संशयः ।
सार्धमृक्षाङ्गुलं प्रोक्तं कक्षयोरन्तरं पुनः ॥ ९१ ॥
कक्षाधस्थांसफलकतुङ्गं सप्ताङ्गुलं भवेत् ।
कक्षोर्ध्वे बाहुसीमान्तं सप्ताङ्गुलमुदाहृतम् ॥ ९२ ॥

१. 'र्णौ' क. ग. पाठः. २. 'श' ख. पाठः.

सार्धषोडशमात्रं तु मध्यव्यासमुदाहृतम् ।
नाभिसूत्रे तु विस्तारं सार्धविंशाङ्गुलं तथा ॥ ९३ ॥
कटिबन्धे तु विस्तारं त्रिषडङ्गुलमानतः ।
पादोनधर्मभागं तु स्फिग्बिम्बं प्रति विस्तृतिः ॥ ९४ ॥
सुवृत्तौ तौ समाख्यातौ तयोर्मध्यं चतुर्यवम् ।
अपरे तारमेवोक्तं पार्श्वव्यासमथोच्यते ॥ ९५ ॥
कक्षस्याग्रविशालं तु सप्तमात्रमुदाहृतम् ।
सपादषोडशांशं तु हस्तसूत्रे तु विस्तृतिः ॥ ९६ ॥
सपादद्वादशांशं तु मध्ये पार्श्वघनं भवेत् ।
श्रोणीमध्ये घनं पार्श्वे सप्तोत्तरदशाङ्गुलम् ॥ ९७ ॥
तत्र श्रोण्युदयं पूर्वैः सप्तमात्रं विधीयते ।
नाभिसूत्रादधश्चोर्ध्वे चतुर्वद्व्यङ्गुलं हि तत् ॥ ९८ ॥
श्रोण्यधस्तात् कटेरुच्चं सार्धभूताङ्गुलं भवेत् ।
तत्कटेश्च घनं विद्यात् सार्धभान्वङ्गुलं भवेत् ॥ ९९ ॥
तत्र श्रोण्युदयं कुर्यात् + + + + + + + + + ।
+ तुङ्गं चोरुमूलात् तु नीव्रं सार्धयुगाङ्गुलम् ॥ १०० ॥
कक्षाज्जठरनिम्नं तु सार्धद्व्यङ्गुलमुच्यते ।
सूत्रं सुवृत्तनाभेस्तु रेखे द्वे परिवेष्टिते ॥ १०१ ॥
कर्णमूले तु तत्तारं तुङ्गं चैव चतुर्यवम् ।
हिक्कादक्षाक्षिसूत्रं तज्जानुसूत्रमुदाहृतम् ॥ १०२ ॥
हिक्कामध्यात् तु कक्षान्तं कल्पयेत् त्रिभिरंशकैः ।
कर्णमूले तु तां हिक्कासूत्राधस्तात् तु कल्पयेत् ॥ १०३ ॥

हिक्कासूत्रोपरिष्टात् तु नीलकण्ठं प्रकल्पयेत् ।
हृदयात् स्तनपीठोच्चं द्व्यङ्गुलं समुदाहृतम् ॥ १०४ ॥
सप्तादशयवं स्यात् स्तनमण्डलविस्तृतम् ।
तन्मध्ये चूचुकोच्चं तु व्यासं चैव यवद्वयम् ॥ १०५ ॥
नाभेस्तु स्तनविस्तारं व्योमांशं द्वियवं पुनः ।
तन्नाभिर्दक्षिणावर्तं मूले तारं यवद्वयम् ॥ १०६ ॥
तन्नाभ्यवटमध्यस्थसूत्रं + + + + + + + ।
नाभेरधः स( दाते ? पादे)न श्रोण्युच्चं पञ्चमात्रकम् ॥ १०७ ॥
तदर्धं तत्कटिश्रोणिगाढं तु त्र्यङ्गुलं भवेत् ।
तस्मादामेढ्रमूलं तु मेढ्रमूलं युगाङ्गुलम् ॥ १०८ ॥
सपादपञ्चमात्रं तु लिङ्गदीर्घमुदाहृतम् ।
लिङ्गमूलविशालं तु सप्तादशयवं स्मृतम् ॥ १०९ ॥
लिङ्गायामत्रिभागैकमग्रखण्डायतं स्मृतम् ।
यदग्रखण्डिमूलं तु यवमानं बृहत्तरम् ॥ ११० ॥
रक्तोत्पलस्य मुकुलसन्निभं तु तदग्रकम् ।
मुष्कायामं विशालं च सार्धवेदाङ्गुलं भवेत् ॥ १११ ॥
घनं सार्धगुणांशं तु तन्मूलोर्ध्वोरुबन्धनम् ।
मेढ्रमूलस्य पीठस्य व्यासं सप्तार्धमात्रकम् ॥ ११२ ॥
मेढ्रमूलस्य पीठान्तमूरुमूलस्य मांसलम् ।
जानुमण्डलविस्तारं सपादचतुरङ्गुलम् ॥ ११३ ॥
सार्धं तु द्व्यङ्गुलं प्रोक्तं जानुमण्डलनीव्रकम् ।
सार्धं तु द्व्यङ्गुलं प्रोक्तं पृष्ठजानुनतं विदुः ॥ ११४ ॥

मध्ये तु पार्श्वयोः शेषं यथासौन्दर्यमाचरेत् ॥ ११४½ ॥

इति शिल्परत्ने उत्तरभागे उत्तमदशतालक्षणं नाम पञ्चमोऽध्यायः ॥

---

अथ षष्ठोऽध्यायः ।

अथ मध्यमं दशतालम् ।

मध्यमं दशतालेन स्त्रीमानमिह वक्ष्यते ।
उष्णीषोदयमेकांशं केशान्तं तु गुणाङ्गुलम् ॥ १ ॥

केशान्तादक्षिसूत्रान्तं सत्रिपादयुगांशकम् ।
अक्षिसूत्रात् पुटान्तं तु सार्धवेदांशमिष्यते ॥ २ ॥

नासापुटात् तु हन्वन्तं सत्रिपादगुणांशकम् ।
तस्याधः कम्बुमानं तु चतुर्भागमुदाहृतम् ॥ ३ ॥

हिक्कादिहृदयान्तं च हृदयान्नाभिसीमकम् ।
नाभ्यादियोनिपर्यन्तं त्रयोदशांशकं पृथक् ॥ ४ ॥

ऊरुदीर्घं तु षड्विंशदंशं जानु युगांशकम् ।
ऊरुदीर्घसमं जङ्घा तलोच्चं तु युगांशकम् ॥ ५ ॥

विस्तारः शिवशैलकैर्मुखगलेऽत्यष्टया डिकक्षान्तरे
वक्षोजे नवभिः पृथक् च तदधो विश्वैः शिवैर्मध्यतः ।
कृत्या श्रोणितले कटौ रवियुगैनोर्वोः सजानुद्वये
जङ्घायुङ्नलकेऽर्कशैलरसवेदैश्चाङ्गुलैः सम्मितैः ॥ ६ ॥

उत्कृत्याधिभुजं प्रकोर्परमनु द्वाभ्यां प्रकोष्ठे तले
धृत्या सप्तभिराततिर्युगशराङ्गेष्वर्णवैरङ्गुलैः ।
अङ्गुष्ठादिषु तत्ततिर्नवनगाद्यद्यङ्गसङ्ख्यैर्यवैः
स्त्रीष्वश्वैर्मणिबन्धकोर्परभुजामूलेऽङ्गुलैर्विस्तृतिः ॥ ७ ॥

तर्जन्यग्रिमयोर्युगैर्युगयवन्यूनैः पराङ्घ्रयङ्गुलि-
ष्वायामोऽङ्गुलकैर्नृपाष्टसदलाद्यब्ध्यङ्गसङ्कल्पैर्यवैः ।
व्यासः सार्धयुगाङ्गुलैः स्तनसमुत्सेधस्त्रिभिश्चूचुके
व्यासोऽक्षे श्रुतिभिर्यवैर्ऋतुमितैर्नाभौ दृशाक्षोन्नतिः ॥ ८ ॥

योनिपीठविशालं तु सप्ताङ्गुलमुदाहृतम् ।
योनितारं चतुर्भागं विस्तारसदृशोन्नतम् ॥ ९ ॥

कार्यं वटस्य पत्राभं योनिं कुर्यान्मनोहरम् ।
स्तनान्तरं यवाष्टांशमन्तरं तु स्तनाक्षयोः ॥ १० ॥

अत्यष्टयंशं बाहुबाह्यमेकत्रिंशाङ्गुलं ततम् ।
शेषमुत्तमतालोक्तमार्गेणैव समाचरेत् ॥ ११ ॥

एवमेव प्रकर्तव्यं युक्त्या पुंमानकं त्वपि ॥ ११½ ॥

इति शिल्परत्ने उत्तरभागे मध्यमदशताल-
विधिर्नाम षष्ठोऽध्यायः ॥

अथ सप्तमोऽध्यायः ।

अथाधमं दशतालम् ।

उष्णीषमङ्गुलं प्रोक्तं केशमानं गुणाङ्गुलम् ।
केशान्ताद्धनुपर्यन्तं सार्धबाणाङ्गुलं भवेत् ॥ १ ॥

युगाङ्गुलं कण्ठमानं हिक्कासूत्रान्तमाचरेत् ।
हिक्कादिहृदयान्तं च तस्मान्नाभ्यन्तमेव च ॥ २ ॥

नाभेस्तु मेढ्रपर्यन्तं सार्धभान्वङ्गुलं पृथक् ।
मेढ्राज्जान्वग्रपर्यन्तं पञ्चविंशाङ्गुलं स्मृतम् ॥ ३ ॥
वेदाङ्गुलं तु जानुः स्याज्जङ्घा चोरुसमा स्मृता ।
वेदांशं चरणोत्सेधमेवं स्यादङ्गतुङ्गता ॥ ४ ॥
उष्णीषात् पृष्ठकेशान्तं सार्धभान्वङ्गुलं स्मृतम् ।
उष्णीषात् पार्श्वकेशान्तमष्टमात्रमुदाहृतम् ॥ ५ ॥
उष्णीषात् पूर्वकेशान्तं पञ्चमात्रमिति स्मृतम् ।
केशान्ताद्धनुपर्यन्तं त्रिभिर्भागैर्विभाजिते ॥ ६ ॥
केशान्तादक्षिसूत्रान्तं तस्मान्नासापुटान्तकम् ।
तस्मात् तद्धनुपर्यन्तं प्रत्येकं चैकभागतः ॥ ७ ॥
यवान्वितद्विमात्रं तु नेत्रयोरन्तरं तथा ।
तत्समं नयनायामं भूतमात्रं भ्रुवायतम् ॥ ८ ॥
भ्रूमध्याचूर्ध्वकेशान्तं सप्तादशयवं स्मृतम् ।
यवं भ्रुवोर्मध्यतारं कृशाग्रौ क्रमात् ततः ॥ ९ ॥
षड्यवं नेत्रविस्तारमूर्ध्वचर्म यवार्धकम् ।
अधोचर्म च तत्तुल्यं कंबीरं तु पदं भवेत् ॥ १० ॥
नेत्रायामत्रिभागैकं कृष्णमण्डलविस्तृतम् ।
यवमानं तु तन्मध्ये ज्योतिर्मण्डलकं स्मृतम् ॥ ११ ॥
अधोचर्मस्थितिं नेत्रसूत्रे कुर्याद् विशेषतः ।
तस्य केशान्तयोर्मध्ये भ्रूस्थितिर्बालचन्द्रवत् ॥ १२ ॥

१. 'सीमान्तं' ग. पाठः.

कर्णस्थानं च कर्णं च उत्तमंदशतालवत् ।
घ्राणमूलस्य विस्तारं यवमात्रमुदाहृतम् ॥ १३ ॥
नासिकाग्रविशालं तु व्योममात्रामिति स्मृतम् ।
अधरोष्ठस्य चायामं पक्षमात्रमुदाहृतम् ॥ १४ ॥
तदर्धं तस्य विस्तारं चिबुकं तु यवद्वयम् ।
विस्तारं तत्समं विद्यान्निम्नमर्धयवं स्मृतम् ॥ १५ ॥
ततोऽधोभागनिष्क्रान्तं यवोनव्योममात्रकम् ।
ग्रीवामूलविशालं तु वस्वङ्गुलमुदाहृतम् ॥ १६ ॥
ग्रीवाग्रस्य तु विस्तारं सार्धसप्ताङ्गुलं तथा ।
वक्षःस्थलस्य विस्तारं सप्तत्रिंशतिमात्रकम् ॥ १७ ॥
पञ्चविंशतिमात्रं तु बाहुदीर्घमुदाहृतम् ।
आयामं तु प्रकोष्ठस्य एकोनविंशदङ्गुलम् ॥ १८ ॥
तस्मान्मध्याङ्गुलाग्रान्तं सार्धद्वादशमात्रकम् ।
तदर्धं तु तलायामं शेषं मध्याङ्गुलायतम् ॥ १९ ॥
अङ्गुष्ठस्य तु तद्दीर्घमष्टाविंशद्यवं स्मृतम् ।
सार्धवेदाङ्गुलं प्रोक्तमनामिकाङ्गुलायतिः ॥ २० ॥
तथैव तर्जनीदीर्घं कनिष्ठस्य युगाङ्गुलम् ।
धर्माष्टवसुषड्भूतयवा ज्येष्ठादिविस्तृतिः ॥ २१ ॥
तत्तदष्टमभागोनं तेषामग्रविशालकम् ।
अग्रव्यासे तु भूतांशे त्रिभागं नखविस्तृतम् ॥ २२ ॥
विस्तरेण सपादं तु नखायामं प्रकीर्तितम् ।
यवत्रयं तलघनं तदष्टांशोनमग्रतः ॥ २३ ॥

तलायामसमं ज्ञेयं तलस्यैव विशालकम् ।
मणिबन्धस्य विस्तारं यवाधिकगुणाङ्गुलम् ॥ २४ ॥
प्रकोष्ठमूलविस्तारं वस्वङ्गुलमुदाहृतम् ।
अर्धभूतांशकं बाह्वोरग्रदेशविशालकम् ॥ २५ ॥
सार्धषण्मात्रकं ज्ञेयं बाहुमध्यस्य विस्तृतम् ।
बाहुमूलविशालं तु वस्वङ्गुलमुदाहृतम् ॥ २६ ॥
बाहुपर्वान्तविस्तारमष्टत्रिंशाङ्गुलं भवेत् ।
हिक्कासूत्रात्तु कक्षान्तं वस्वङ्गुलमुदाहृतम् ॥ २७ ॥
द्वाविंशदङ्गुलं प्रोक्तं कक्षयोरन्तरं पुनः ।
हृदयावधि विस्तारं भवेदष्टादशाङ्गुलम् ॥ २८ ॥
उदरस्य तु विस्तारं सप्तादशाङ्गुलं भवेत् ।
श्रोणिप्रदेशविस्तारमष्टादशांशमुच्यते ॥ २९ ॥
षड्यवं नाभिविस्तारं निम्नमर्धयवं[1] भवेत् ।
स्तनमण्डलविस्तारमर्धमात्रमुदाहृतम् ॥ ३० ॥
चूचुकं च यवं प्रोक्तमुत्सेधं तत्समं भवेत् ।
द्वयोः स्तनाक्षयोरन्तः सार्धद्वादशमात्रकम् ॥ ३१ ॥
मुष्कायामं तु वेदांशं विस्तारं चैव तत्समम् ।
लिङ्गं पञ्चाङ्गुलायाममौत्पलं मुकुलं तथा ॥ ३२ ॥
कटिप्रदेशे विस्तारं षड्यवाष्टादशाङ्गुलम् ।
ऊरुमूलविशालं तु सार्धद्वादशमात्रकम् ॥ ३३ ॥
ऊर्वग्रस्य तु विस्तारं सार्धरन्ध्राङ्गुलं स्मृतम् ।
जानुमध्यविशालं तु सार्धवस्वङ्गुलं भवेत् ॥ ३४ ॥

१. 'र्धे' क. ग. पाठः.

जङ्घामूलविशालं तु सार्धषण्मात्रमुच्यते ।
नलकायास्तु विस्तारं सार्धवेदाङ्गुलं भवेत् ॥ ३५ ॥
अङ्घ्रेस्तलस्य विस्तारं चतुरङ्गुलमिष्यते ।
तलमध्यविशालं तु भूताङ्गुलमुदाहृतम् ॥ ३६ ॥
पादाङ्गुष्ठसमायामं चतुर्मात्रमुदाहृतम् ।
अनामिकादीर्घमानं कुर्यात् त्रिंशद्यवैस्तथा ॥ ३७ ॥
मध्याङ्गुलं च तत्तुल्यं वेदांशं तदनामिका ।
कनिष्ठिकाया दीर्घं तु सार्धवह्न्यङ्गुलं भवेत् ॥ ३८ ॥
सप्ताष्टनवधर्माख्यैर्यवैर्विश्वाभिधैः क्रमात् ।
कनिष्ठाद्यङ्गुलीनां तु विस्तारं प्रविधीयते ॥ ३९ ॥
अग्रमूलसमं प्रोक्तं तत्तारं त्रिभिरंशयेत् ।
द्विभागं नखविस्तारमायामं तत्समं तथा ॥ ४० ॥
आयामवर्तुलाकारमर्धचन्द्राकृतिर्भवेत् ।
तलाग्रेऽङ्गुष्ठमूले तु द्विमात्रं तु घनं स्मृतम् ॥ ४१ ॥
कनिष्ठायां नवयवं तलस्य घनमुच्यते ।
कक्षयोरन्तरं पृष्ठे चतुर्विंशतिमात्रकम् ॥ ४२ ॥
अत्रानुक्तं तु यत् सर्वमुत्तमं दशतालवत् ॥ ४२½ ॥

इति शिल्परत्ने उत्तरभागेऽधमदशतालं नाम
सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः ।

### अथोत्तमं नवतालम् ।

उष्णीषं त्वेकभागेन केशान्तं तद्गुणाङ्गुलम् ।
केशान्तादक्षिसूत्रान्तं वेदमात्रमिति स्मृतम् ॥ १ ॥

तस्मात् पुटान्तं वेदांशं पुटाद्धन्वन्तकं तथा ।
कण्ठमानं तु वेदांशं भान्वंशं हृदयावधि ॥ २ ॥
ततस्तु नाभिसूत्रान्तं तथा द्वादशमात्रकम् ।
नाभ्यादिमेढ्रमूलान्तं भानुमात्रं विधीयते ॥ ३ ॥
ऊरुदीर्घं चतुर्विंशदंशं जानु युगांशकम् ।
जङ्घादीर्घं तूरुतुल्यं वेदांशं चरणोदयम् ॥ ४ ॥
छत्राकारं भवेच्छीर्षं शिखादेशं समुन्नतम् ।
शिखायाः पूर्वभागे तु किञ्चिन्निम्नं भवेत् तथा ॥ ५ ॥
शिखायाः पार्श्वयोर्निम्नं कलामात्रं विहाय तत् ।
शिखायाः पश्चिमे भागे प्रोन्नतं जायते मनाक् ॥ ६ ॥
ततोऽधस्ताद् भवेद् गर्तः प्रणालसदृशाकृतिः ।
एकाङ्गुलस्तु विस्तारो दैर्घ्यं स्यादङ्गुलद्वयम् ॥ ७ ॥
कर्णाग्रसन्धौ संलग्नं कर्णपृष्ठेऽङ्गुलान्ततः ।
ततो द्विद्व्यङ्गुलातीतस्त्र्यङ्गुलोऽथ कथोद्भवः ॥ ८ ॥
एकैकाङ्गुलविस्तारः शिरोगर्तस्य पार्श्वयोः ।
इत्येष पश्चिमे भागे कथितः केशसम्भवः ॥ ९ ॥
केशाः कृष्णाः पिशङ्गा वा जटिलाः कुटिलाः क्वचित् ।
विरच्यन्ते यथाशोभं तत्तद्रूपानुसारतः ॥ १० ॥
अष्टादशाङ्गुलं पूर्वं पश्चिमार्धं तथैव च ।
भवेतां कर्णयोरूर्ध्वभागौ पूर्वापरौ यमौ ॥ ११ ॥
सीमन्ताद् गर्तमध्यान्तं भवेदष्टादशाङ्गुलम् ।
वामदक्षिणयोर्वेष्टाद् भवेत्तालैस्त्रिभिर्मितम् ॥ १२ ॥

१. 'णे' क. ख. पाठ.

एवं भागद्वयेऽप्युक्तो विस्तारो मस्तकाश्रयः ।
षट्त्रिंशदङ्गुलो ज्ञेयः परिणाहो विचक्षणैः ॥ १३ ॥
भ्रूपृष्ठात् केशपर्यन्तं ललाटं त्र्यङ्गुलं भवेत् ।
भ्रूयुग्ममध्यादारभ्य ततोऽध्यर्धकलामितम् ॥ १४ ॥
भ्रुवोः प्रान्तं तदेव स्यात् कलाद्वितयसम्मितम् ।
आरोपितधनुःप्रख्या भ्रुवोर्लेखा विरच्यते ॥ १५ ॥
मात्रार्धकृतविस्तारात् क्रमशः परिहीयते ।
प्रान्ते श्लक्ष्णा च तीक्ष्णा च सा दैर्घ्ये त्र्यङ्गुला भवेत् ॥
त्रियवं रोमदैर्घ्यं तु भ्रुवोर्मध्ये विधीयते ।
द्वियवं तु भवेदादौ प्रान्ते स्याद् यवमात्रकम् ॥ १७ ॥
वितर्कसहने कोपे विस्मये मध्यकुञ्चिता ।
जुगुप्सिते सूक्ष्मदृष्टौ भ्रूमूलं कुञ्चितं भवेत् ॥ १८ ॥
केशान्तरेखाविन्यासे द्वितीयेन्दुकलाकृतिः ।
प्रान्तादुत्प्रेक्षनामानौ प्रदेशौ परिकीर्तितौ ॥ १९ ॥
उत्क्षेपाभ्यां समौ कुर्याद् भ्रुवोः प्रान्तौ विचक्षणः ।
एवं ललाटमानं तु चतुष्कलमुदाहृतम् ॥ २० ॥
उत्क्षेपः प्रान्तदेशे स्याद् ऋजुरूपाल(ता ?का)वली ।
कलामात्रे च सा ज्ञेया स्थापनीसूत्रकावधिः ॥ २१ ॥
ततस्तिर्यग् भवेद् रेखा मात्राद्वितयसम्मिता ।
निर्गच्छति ततः कूर्चं तद्रेखामात्रया मिता ॥ २२ ॥
कूर्चरेखा भ्रुवोः प्रान्तं मध्यं स्यादङ्गुलद्वयम् ।
स एव शङ्खो विख्यातः प्रदेशविधिकोविदैः ॥ २३ ॥

पिप्पल्याः कूर्चरेखाया भवेदन्तरमङ्गुलम् ।
एवं ललाटविन्यासः कथितः सोमभूभुजा ॥ २४ ॥
अर्धाङ्गुलं भ्रुवोर्मध्यान्नसो मूलं निरूपितम् ।
किञ्चिल्ललाटतो निम्नं तस्याः पार्श्वे निरूपिते ॥ २५ ॥
समन्तान्नेत्रयोर्गर्तावक्षिकूटौ प्रकल्पितौ ।
अर्धाङ्गुलप्रमाणौ तौ (तेन ? नेत्र)वर्त्मबहिःस्थितौ ॥ २६ ॥
अर्धाङ्गुलप्रमाणेन नेत्रे वर्त्मद्वयं भवेत् ।
निमीलनादूर्ध्ववर्त्म भवेदङ्गुलसम्मितम् ॥ २७ ॥
त्रियवं पक्ष्मणोर्दैर्घ्यं (सान्द्रमापतिमाशुभाः ?) ।
अर्धाङ्गुलमिते स्यातां नेत्रमूले निरूपिते ॥ २८ ॥
द्व्यङ्गुलं नेत्रयोर्दैर्घ्यं विस्तारं स्यात्तदर्धतः ।
पञ्चपञ्चयवौ कार्यौ शुक्लभागौ विचक्षणैः ॥ २९ ॥
तन्मध्ये मेचकं कुर्यान्मण्डलं वर्तुलाकृति ।
तच्च पञ्चयवं प्रोक्तं तन्मध्ये दृष्टिरिष्यते ॥ ३० ॥
वर्तुला यवमात्रा च पुत्रिकाप्रतिबन्धिनी ।
रक्तता प्रान्तयोः शस्ता तीक्ष्णतापाङ्गयोः शुभा ॥ ३१ ॥
मध्योन्नतं नेत्रगोलं (कर्त्रा कार्यं प्रयत्नतः ।
आकारो नेत्रयोः कार्यो नीलोत्पलदलोपमः ॥ ३२ ॥
अपाङ्गयोरधः कार्यौ) कपोलौ द्व्यङ्गुलोन्नतौ ।
कर्णपिप्पलिदेशान्तौ तिर्यक्सूत्रेण मापितौ ॥ ३३ ॥
अपाङ्गपिप्पलीमध्यं पञ्चाङ्गुलमुदाहृतम् ।
तदेव च समं तिर्यञ्चापितं चतुरङ्गुलम् ॥ ३४ ॥

ऊर्ध्वाधोबन्धयोर्मध्यं कर्णाधस्त्र्यङ्गुलं भवेत् ।
उपर्येकाङ्गुलं यस्मात् कर्णावर्तस्य मण्डलम् ॥ ३५ ॥
कर्णावर्तबहिर्लेखा वृत्तायतस्त्ररूपिणी ।
षडङ्गुलायता रम्या सा रेखा परिकीर्तिता ॥ ३६ ॥
अन्तःस्था तु भवेद् रेखा तदाकाराभिरुच्यते ।
रेखाद्वितीयमध्यस्य विस्तारः परिकथ्यते ॥ ३७ ॥
आदौ चतुर्यवः प्रोक्तो मध्ये च द्वियवो भवेत् ।
प्रान्ते तु यवमात्रं स्यात् क्रमेणैव निरूपितम् ॥ ३८ ॥
ऊर्ध्वाधोबन्धयोर्मध्यमङ्गुलत्रयमीरितम् ।
तन्मध्ये पिप्पलीमात्रं पिप्पलीफलसन्निभा ॥ ३९ ॥
तस्य मूले भवेद् रन्ध्रं शब्दश्रवणकारणम् ।
चतुर्यवप्रमाणं तत् पिप्पल्या विनिगूहितम् ॥ ४० ॥
अधस्तात् पिप्पलीभागाल्लकाराख्या भवेद् बहिः ।
सा स्यादर्धाङ्गुलायामा यवत्रितयविस्तृता ॥ ४१ ॥
ऊर्ध्वांङ्गत्वात् स्पृशेद् रेखां कर्णाभ्यन्तरवर्तिनीम् ।
रेखायाश्च बिलं मध्यं पिञ्छषीति निगद्यते ॥ ४२ ॥
बिलं बाह्यप्रदेशः स्यादुत्पात इति संज्ञया ।
अधोभागेन पिञ्छप्या लकारो यत्र सङ्गतः ॥ ४३ ॥
बहिस्तत्रोन्नता दृश्या सा चूलीति निगद्यते ।
चतुर्यवायता ज्ञेया यवद्वितयविस्तृता ॥ ४४ ॥
लकारमध्ये यद् दृश्यं श्रोत्रमध्यस्य पार्श्वगम् ।
यत्कर्णकुहरं प्रोक्तमर्धाङ्गुलमितं शुभम् ॥ ४५ ॥

१. 'र्ध्वांशत्वा' ख. पाठः.

ऊर्ध्वकर्णस्य विस्तारः स यवद्वयगोलकः ।
मध्ये च द्व्यङ्गुलो ज्ञेयस्तले मात्रा च षड्यवा ॥ ४६ ॥
ततोऽधः पालिका कार्या चतुरङ्गुलमायता ।
स्यादर्धाङ्गुलविस्तारा मूले मात्रामिता शुभा ॥ ४७ ॥
मुनिबालादिकर्णानामविद्धानां विशेषतः ।
प्रमाणमङ्गुलं प्रोक्तं कर्णपाल्या विचक्षणैः ॥ ४८ ॥
कनीनिमध्यमुद्दिष्टं नासामूलं तदङ्गुलम् ।
अध्यर्धमङ्गुलं मध्यं नासाग्रं द्व्यङ्गुलं भवेत् ॥ ४९ ॥
घोणाग्रमङ्गुलं तच्च तदर्धेन पुटो भवेत् ।
अङ्गुलद्वयविस्तारं नासायामिति कीर्तितम् ॥ ५० ॥
घोणाबिलं समुद्दिष्टं कनिष्ठाङ्गुलिमात्रकम् ।
श्रमे श्वासे स हासे च कोपे कामे ततोऽधिकम् ॥ ५१ ॥
तिलपुष्पसमाकारा किञ्चिदग्रे समुन्नता ।
ततोऽर्धमात्रं विस्तारं श्मश्रुदेशो निगद्यते ॥ ५२ ॥
तस्य द्विगोलकायामो नासायाः पुरतः स्थितः ।
तस्य मध्ये भवेद् गोजिः प्रणालाकारधारिणी ॥ ५३ ॥
अर्धाङ्गुलं भवेद् दैर्घ्यं विस्तारं त्रियवं भवेत् ।
उत्तरोष्ठो भवेत्तस्य अधस्ताद् भागदैर्घ्यकः ॥ ५४ ॥
यवपञ्चकविस्तारः क्रमशः परिहीयते ।
श्मश्रूत्तरोष्ठयोर्मध्ये रेखा किञ्चित् समुज्ज्वला ॥ ५५ ॥
उन्नता यवमात्रा स्याद् दैर्घ्यादोष्ठप्रमाणिनी ।
अधरोष्ठो भवेत्तस्या अधस्ताद् भागदैर्घ्यकः ॥ ५६ ॥

ओष्ठयोरुभयोः प्रान्तसंयोगौ सृक्किणी मतौ ।
नेत्रज्योतिःसमे कार्ये विकाररहिताकृतौ ॥ ५७ ॥
विकारे वर्धते सृक्कं तथा सङ्कोचमेति च ।
हसनोदनविष्कासे भीते तर्के च रोदने ॥ ५८ ॥
वर्धते सृक्कणोर्द्वन्द्वमेकाङ्गुलमथायतौ ।
चुम्बने तौ + + तद्वदाम्रादिफलचूषणे ॥ ५९ ॥
संकुचेत् सृक्कणोऽत्यर्थमेकैकाङ्गुलहानितः ।
गोजिकाधारयोर्मध्यं त्वाधाने चतुरङ्गुलम् ॥ ६० ॥
पार्श्वद्वयं क्रमाद्धीनं त्रिद्वयेकाङ्गुलमानतः ।
दन्ता द्वादश दृश्याः स्युः पङ्क्तिद्वयसमाश्रिताः ॥ ६१ ॥
ऊर्ध्वाः पञ्चयवा दृश्यास्तलस्थास्त्रियवास्तथा ।
राजदन्तौ तु मध्यस्थावूर्ध्वपङ्क्तिसमाश्रितौ ॥ ६२ ॥
तयोः पार्श्वगतौ मध्यौ तत्पार्श्वे परिपक्षके ।
अधः पङ्क्तिगतौ मध्यौ दन्तिसन्दर्शनामकौ ॥ ६३ ॥
तत्पार्श्वगौ कर्तनाख्यौ ततः स्यातां तु खण्डनौ ।
सुश्लक्ष्णाः कान्तिसम्पन्नाः स्वच्छाः शुभ्रा निरन्तराः [॥ ६४ ॥
दशनाः शिल्पिभिः कार्या अच्छायालेखनेऽपि च ।
चिबुकाखण्डने हासे त्रासादङ्गुलिचर्मणा ॥ ६५ ॥
दर्पणालोकने दृश्या दशनच्छदगूहिताः ।
स्रक्कणः पार्श्वगौ देशौ गलान्तात्तु निरस्थिकौ ॥ ६६ ॥

---

१. 'ध' क. ग. पाठः.

तस्माद् बहिश्चलास्थि स्यात् कर्णमूलेन सङ्गतम् ।
क्रमशो हीयते तत् तु यावत् स्याद्धनुमण्डलम् ॥ ६७ ॥
सार्धाङ्गुलं भवेदूर्ध्वे तिर्यक् स्याच्चतुरङ्गुलम् ।
अधरोष्ठतलोद्देशे चिबुकं समुदाहृतम् ॥ ६८ ॥
कुञ्जकूर्चं भवेत्तस्मिन्निम्नं मात्राप्रमाणकम् ।
हनुपृष्ठे भवेत् कूर्चं प्रबलास्थिक्रमेण तु ॥ ६९ ॥
यवमात्रं प्रकुर्वीत कूर्चं प्रथमसम्भवम् ।
द्व्यष्टवत्सरदेहस्य पुरुषस्य विचक्षणः ॥ ७० ॥
प्रकुर्वीत ततश्चोर्ध्वमधिकं यवमानतः ।
अष्टाङ्गुलं भवेद् ग्रीवा विस्तारेण निरूपिता ॥ ७१
द्विगोलार्धं च दैर्घ्येण परिणाहे द्वितालिका ।
ग्रीवामध्यप्रदेशे तु तदधस्तु ततोऽधिका ॥ ७२ ॥
हिक्काया हृदयं तालस्तालश्च स्तनचूचुके ।
कक्षमूले तथा तालस्तालः कक्षधरो भवेत् ॥ ७३ ॥
कन्धरात् स्कन्धसन्धिः स्याद्धिक्कायाश्चतुरङ्गुलः ।
कक्षमूलात् कक्षधरो भवेदष्टाङ्गुलायतः ॥ ७४ ॥
हिक्कायाः पार्श्वयोर्लग्ने जत्रुणी भुजमूर्धगे ।
एकादशाङ्गुले प्रोक्ते किञ्चिदुन्नतविग्रहे ॥ ७५ ॥
हिक्कायाः कक्षमूलाच्च स्तनचूचुकलाधृतः ।
मध्ये वक्षःस्थलं प्रोक्तं तालमात्रं समन्ततः ॥ ७६ ॥
द्वयोश्चूचुकयोर्मध्यं तालमात्रमुदाहृतम् ।
कुचचूचुकयोर्वृत्तं मेचकं द्व्यङ्गुलं भवेत् ॥ ७७ ॥

चूचुको(न्म ? म)ण्डलस्यान्तर्यवमात्रो निगद्यते ।
उत्सेधं विस्तृतं तद्वत् प्रमाणेन निगद्यते ॥ ७८ ॥
स्त्रीणां तु द्वियवः कार्यश्चिबुकश्चित्रकारकैः ।
प्रोक्तः स्तनपरीणाहस्तासामष्टादशाङ्गुलः ॥ ७९ ॥
बृहती नाम तत् ख्यातं कक्षमूलस्तनान्तरम् ।
षडङ्गुलं च मानेन सूचितं सूत्रकोविदैः ॥ ८० ॥
स्तनद्वितयमध्यस्थः किञ्चिन्निम्नः कलामितः ।
प्रदेशो वार्ध इत्युक्तः शिल्पशास्त्रविशारदैः ॥ ८१ ॥
कन्धरात् स्कन्धसन्धेस्तु बाहुमूर्धाद् द्विभागतः ।
पूर्वापरे कक्षमूले तालेनैकेन सम्मिते ॥ ८२ ॥
अभ्यन्तरे तथैव स्यात् ताल एको निरूपितः ।
कक्षमूलपरीणाहस्तदैव स्याद् द्वितालकः । ८३ ॥
बाहुशीर्षोश्च बाह्वोश्च सन्धिस्थानं निरूपितम् ।
कक्षमूला + + द्वन्द्वतिर्यक्सूत्रप्रमाणतः ॥ ८४ ॥
वार्धदेशाद् भवेन्नाभिस्तालेनैकेन मापिता ।
नाभिरङ्गुलविस्तारा वर्तुलार्धाङ्गुलोपगा ॥ ८५ ॥
वार्धस्य पार्श्वयोस्तिर्यग् विस्तारस्तु द्विभागिकः ।
चतुर्यवसमोपेतस्त्वेवं सप्तदशाङ्गुलः ॥ ८६ ॥
वार्धदेशे परीणाह एकपञ्चाशदङ्गुलः ।
ततोऽ(धान्म ? धोम)ध्यभागस्तु प्रोक्तो मनुमिताङ्गुलः [॥ ८७ ॥
मध्यदेशपरीणाहो द्विचत्वारिंशदङ्गुलः ।
नाभिदेशस्य विस्तारो भवेच्चन्द्रकलाङ्गुलः ॥ ८८ ॥

नाभिस्थाने परीणाहो भवेत् तालचतुष्टयम् ।
श्रोणिदेशः स विख्यातः कायस्थानपरीक्षकैः ॥ ८९ ॥
पक्वाशयाख्यके गात्रे विस्तारोऽष्टादशाङ्गुलः ।
पक्वाशयपरीणाहश्चतुष्पञ्चाशदङ्गुलः ॥ ९० ॥
स प्रदेशः कटिर्नाम काञ्चीनामपि धारकः ।
स्त्रीणां चेदधिकः कार्यो भागेनैकेन कर्तृभिः ॥ ९१ ॥
वस्तिमस्तकसूत्रस्य सतपञ्चाशदङ्गुलः ।
परिणाहो विधातव्यस्त्रिभागे वितस्तिभिः ॥ ९२ ॥
वस्तिसूत्रस्य विस्तारो त्रिंशत्यङ्गुलसम्मितः ।
तस्य प्रोक्तः परीणाहः षट्यङ्गुलमितो बुधैः ॥ ९३ ॥
जठ(रे ? रो) वक्षसा युक्तः कार्यो गोमुखसन्निभः ।
स्त्रीणां मध्यं कृशं कार्यं भागेन त्रिंशदङ्गुलैः ॥ ९४ ॥
भागेनैकेन तस्याधो लिङ्गसूत्रं प्रकल्पयेत् ।
पञ्चाङ्गुलं लिङ्गदैर्घ्यं मुष्कयोश्चतुरङ्गुलम् ॥ ९५ ॥
लिङ्गसूत्रस्य विस्तारः कलामात्रो निगद्यते ।
पार्श्वयोरुभयोस्तस्य मुष्कमूलाद् द्विमात्रकम् ॥ ९६ ॥
एवं चली स्यान्मुष्कस्य मूलं स्याच्चतुरङ्गुलम् ।
मूले प्रान्ते प्रकर्तव्ये रेखे वङ्क्षणमाश्रिते ॥ ९७ ॥
विनिर्गते कलामात्रं तयोर्मध्यं द्विभागिकम् ।
रेखयोः प्रान्तयोर्वस्तेर्विस्तारः स्यात् षडङ्गुलः ॥ ९८ ॥
भाग एको लिङ्गदैर्घ्यं मणिरेखाङ्गुलं ततः ।
षडङ्गुलः परीणाहो मणिमूलि + को मनाक् ॥ ९९ ॥

मुष्कयोर्भागिकं दैर्घ्यं तदर्धं बीजसंयुतम् ।
भागे वा मूलभागे स्यात् कपिनासा प्रकल्प्यते ॥ १०० ॥

मुष्कौ सबीजकौ वृत्तौ भागद्वयविभाजितौ ।
तावन्मात्रपरीणाहौ कर्तव्यौ शिल्पकोविदैः ॥ १०१ ॥

अधस्तान्नीतसूत्रस्य लग्ने स्यातां कुकुन्दरे ।
स्फिजोरधःपरीणाहस्त्रयस्त्रिंशन्मिताङ्गुलः ॥ १०२ ॥

ऊरुमध्यपरीणाहः कार्यः षट्त्रिंशदङ्गुलः ।
आणिदेशपरीणाहो भवेत् तालद्वयान्वितः ॥ १०३ ॥

क्रमशो हीयमानौ तावूरू कार्यौ विचक्षणैः ।
अरोमकौ वलीशून्यौ रम्भास्तम्भकृतोपमौ ॥ १०४ ॥

श्लक्ष्णौ मनोहरौ वृत्तौ पुंसां वा युवतीषु वा ।
ततस्तु जानुनी कार्ये चतुरङ्गुलमायते ॥ १०५ ॥

अङ्गुलत्रयविस्तारे तत्पार्श्वौ द्विकलौ मतौ ।
परिणाहोऽपि तस्य स्यादङ्गुलान्येकविंशतिः ॥ १०६ ॥

पश्चाद्भागे मनाङ् निम्ने मध्ये किञ्चित्समुन्नते ।
जङ्घामूलपरीणाहो भवेत् षोडशमात्रकः ॥ १०७ ॥

इन्द्रबस्तिपरीणाहो भवेदष्टादशाङ्गुलः ।
तिर्यक्सूत्रं समं पार्ष्णेरङ्गुलं समुदाहृतम् ॥ १०८ ॥

पार्ष्णिदेशस्य विस्तारो भवेत् पञ्चभिरङ्गुलैः ।
भागमात्रात् तलादूर्ध्वं पार्ष्णितो भागतः पुरः ॥ १०९ ॥

गुल्फौ द्व्यङ्गुलकौ कार्यौ विस्तारेण समन्ततः ।
पादपृष्ठं तु कर्तव्यं प्रोन्नतं गजपृष्ठवत् ॥ ११० ॥
तस्याधस्तलदेशस्तु निम्ने ह्यन्तरतो भवेत् ।
बहिर्भागे समं कार्यं पार्ष्णेर्यावत् कनिष्ठिका ॥ १११ ॥
अङ्गुष्ठमूलदेशे तु तलं कार्यं समुन्नतम् ।
पादाग्रतलविस्तारं षडङ्गुलमुदाहृतम् ॥ ११२ ॥
पार्ष्णेश्च तलविस्तारः कथितश्चतुरङ्गुलः ।
पादपृष्ठस्य चोत्सेधो भागस्त्वर्धाङ्गुलाधिकः ॥ ११३ ॥
अग्रपादस्य चोत्सेधस्त्र्यङ्गुलः समुदाहृतः ।
अङ्गुष्ठमूलदेशे तु द्व्यङ्गुलः स्यात् समुच्छ्रयः ॥ ११४ ॥
अङ्गुष्ठस्य समुत्सेधो मात्रा स्याद् द्वियवाधिका ।
अङ्गुष्ठदैर्घ्यमुद्दिष्टमङ्गुलत्रयमीरितम् ॥ ११५ ॥
अङ्गुष्ठस्य परीणाहो भवेत् पञ्चभिरङ्गुलैः ।
द्विपर्वाङ्गुष्ठमुद्दिष्टं प्रान्तपर्वार्धतो नखः ॥ ११६ ॥
तर्जनीदीर्घमुद्दिष्टं त्र्यङ्गुलं द्वियवाधिकम् ।
त्र्यङ्गुलस्तु परीणाहस्तस्याः पर्वत्रयं भवेत् ॥ ११७ ॥
मध्यमादीर्घमुद्दिष्टं यवद्वाविंशतिर्बुधैः ।
परीणाहस्तु तस्यास्तु यवानामेकविंशतिः ॥ ११८ ॥
आयामोऽनामिकायास्तु यवविंशतिरिष्यते ।
अनामिकापरीणाहः कार्योऽष्टादशभिर्यवैः ॥ ११९ ॥
कनिष्ठादैर्घ्यमाख्यातं सप्तभिर्दशभिर्यवैः ।
कनिष्ठायाः परीणाहो यवाः पञ्चदश स्मृताः ॥ १२० ॥

पर्वत्रयं तु सर्वासामङ्गुलीनां प्रकीर्तितम् ।
अर्धाङ्गुलं समुत्सेधः सर्वासामग्रतो भवेत् ॥ १२१ ॥
सर्वासां पादशाखानामग्रपर्वार्धतो नखाः ।
आताम्रास्ते तु कर्तव्याश्चित्रकर्मविशारदैः ॥ १२२ ॥
करास्तु स्कन्धसन्धेस्तु पश्चाद्भागे कृकाटिका ।
देशस्तु ततः कक्षमूलमेकादशाङ्गुलम् ॥ १२३ ॥
स्कन्धाभ्यां निर्गतावंसौ फलकौ षट्षडङ्गुलौ ।
तयोर्मध्ये भवेद् वंशः कलामात्रप्रमाणतः ॥ १२४ ॥
उत्तानकदलीपुष्पसन्निभः पृथुवंशकः ।
तदेव पृष्ठभागस्य स्वरूपं परिकीर्तितम् ॥ १२५ ॥
कक्षात्तत् कोर्परं यावद् बाहुपर्वेति कथ्यते ।
अष्टादशाङ्गुलं दैर्घ्यं नाहोऽप्यष्टादशाङ्गुलम् ॥ १२६ ॥
कोर्परात् तलपर्यन्तं पर्व सप्तदशाङ्गुलम् ।
परीणाहः प्रबाहोस्तु षोडशाङ्गुलसम्मितः ॥ १२७ ॥
प्रकोष्ठस्य परीणाहश्चतुर्दशभिरङ्गुलैः ।
मणिबन्धपरीणाहः कर्तव्यो द्वादशाङ्गुलः ॥ १२८ ॥
विस्तारस्त्रिकलो बाह्वोः कोर्परेऽङ्गुलपञ्चकम् ।
परिणाहत्रिभागैकं प्रबाहोर्विस्तृतिर्मता ॥ १२९ ॥
प्रकोष्ठे मणिबन्धे च परीणाहत्रिभागतः ।
सप्ताङ्गुलानि पार्ष्णेः स्युर्मध्यमाङ्गुलिमूलतः ॥ १३० ॥
षडङ्गुलं तु तर्जन्या नाहो ह्यर्धांशपञ्चकम् ।
कनिष्ठामूलरेखाया भवेदङ्गुलिपञ्चकम् ॥ १३१ ॥

इत्यायामैस्तलः प्रोक्तः पञ्चमात्रा तु विस्तृतिः ।
अङ्गुष्ठमूलरेखायास्तर्जन्याश्च तथैव च ॥ १३२ ॥
मध्यभागप्रमाणं स्यादङ्गुलत्रयसम्मितम् ।
कनिष्ठामूलरेखाया अधस्तादङ्गुलान्तरे ॥ १३३ ॥
अनामेः कलया मूलान्मध्यायाः सार्धमात्रया ।
आयुर्लेखा भवेत् सा तु किञ्चिद् वक्रा प्रदृश्यते ॥
मध्यमातर्जनीमध्यं प्रविष्टा सा प्रकल्प्यते ।
अङ्गुष्ठमूलतर्जन्योस्त्र्यङ्गुलान्तरमध्यगा ॥ १३५ ॥
शक्तिरेखा प्रकल्प्या स्यात् सापि वक्रा भवेन्मनाक् ।
मध्यमाया अधोभागे गोलकद्वितयान्तरे ॥ १३६ ॥
अनामिकाकनिष्ठाया सा स्यात् त्र्यङ्गुलदूरगा ।
तलमध्ये भवेदन्या रेखा कार्मुकसन्निभा ॥ १३७ ॥
पुंरेखा लेखनीया तु सङ्गता शक्तिरेखया ।
कनिष्ठानामि(क?)मध्यानां सन्धिः सङ्कोचकारकः ॥
आलेख्या तु भवेत्तत्र पुरा प्रोक्ता च या मया ।
तर्जनीसन्धिदेशे तु शक्तिरेखासमुद्भवः ॥ १३९ ॥
अङ्गुष्ठतलसन्धौ तु पुंरेखा संव्यवस्थिता ।
अङ्गुलत्रितयं सार्धमायामेन कनिष्ठिका ॥ १४० ॥
अनामिर्द्विकलायामा यवद्वयसमन्विता ।
पञ्चाङ्गुलायता मध्या तर्जनी चतुरङ्गुला ॥ १४१ ॥
अङ्गुष्ठस्य तदा दैर्घ्यं चतुरङ्गुलमीरितम् ।
अङ्गुष्ठस्य परीणाहः (स्फुटं प्रोक्तप्रमाणतः) ॥ १४२ ॥

अङ्गुष्ठप्रथमं पर्व द्व्यङ्गुलं द्वियवाधिकम् ।
अग्रपर्व तथा प्रोक्तं द्व्यङ्गुलं द्वियवोनितम् ॥ १४३ ॥

अङ्गुष्ठस्य बहिः पर्व तृतीयं द्व्यङ्गुलं भवेत् ।
पृष्ठोर्ध्वपर्वणश्चार्धे भवेन्नखसमुद्भवः ॥ १४४ ॥

तर्जन्याः प्रथमं पर्व सार्धाङ्गुलमितं भवेत् ।
अङ्गुलं मध्यमं पर्व कीर्तितं द्वियवाधिकम् ॥ १४५ ॥

अग्रिमं च तथैवोक्तं तदर्धे नखसम्भवः ।
मध्यमाप्रथमं पर्व सार्धमङ्गुलमिष्यते ॥ १४६ ॥

द्वितीयं च तथैव स्यात् तृतीयं द्व्यङ्गुलं पुनः ।
अनामेरेवमेव स्यादग्रिमं द्विगयवं स्मृतम् ॥ १४७ ॥

कनिष्ठा प्रथमं पर्व यवा दश तथाग्रिमम् ।
अङ्गुलं मध्यपर्व स्यात् कार्यः स्यात् पूर्ववन्नखः ॥ १४८ ॥

निर्लोमं प्रोज्ज्वलं कार्यं पाण्यङ्गुलितलं बुधैः ।
अङ्गुल्यग्रे यवादर्वाक् सजीवः क्रियते नखः ॥ १४९ ॥

तत्राग्रे जीवहीनं तु नखाग्रं परिकल्प्यते ।
सजीवो लोहितः किञ्चिन्निर्जीवो मधुकच्छविः ॥ १५० ॥

यवत्रितयमानेन नखाग्रं परिकल्पयेत् ।
अत्रानुक्तं तु यत् सर्वमुत्तमं दशतालवत् ॥ १५१ ॥

इति शिल्परत्ने उत्तरभागे उत्तमनवताललक्षणं नामाष्टमोऽध्यायः ॥

## अथ नवमोऽध्यायः ।

### अथ मध्यमं नवतालम् ।

शीर्षग्रीवलिकान्तिमं त्रिभिरतो भास्वन्मितैरङ्गुलै-
रुन्मेयं चिबुकान्तिमं त्रिभिरतः कण्ठो हृदन्तं ततः ।
नाभ्यन्तं च शिवान्तिमं च दिनकृत्सङ्ख्यैस्त्रिभिर्जानुनी
गुल्फाद्यङ्घ्रियुगं च सङ्कृतिमितैर्जङ्घाद्वयोरुद्वये ॥ १ ॥

सीमास्वासु सनालपद्मकुटान्तासूरुजङ्घाद्वयी-
मध्याद्यासु करोतु षोडश तिरश्चीनानि सूत्राण्यथ ।
मध्ये कर्णकराख्यसीमसु तथा मर्मोर्ध्वगान्यप्यनो
वक्त्रं द्वादशवर्गकोष्ठसुविचित्रं कल्पयेत् सूत्रकैः ॥ २ ॥

अष्टाङ्गुलाततमतोऽर्धततं ललाट-
मर्धेन्दुसुन्दरमतोऽङ्घ्रिपदायता स्यात् ।
नासा पदद्वयतताङ्गुलिनिम्नमूला
व्यासोच्छ्रिताग्ररुचिरा तिलपुष्पकल्पा ॥ ३ ॥

तन्मूलपार्श्वयुजि पञ्चमपङ्क्तिसंस्थे
कोष्ठद्वयाततिमती पदविस्तृते च ।
मध्यत्रिभागकृततारकतत्रिभाग-
क्लृप्तार्चिषी विरचयेन्नयनाम्बुजे द्वे ॥ ४ ॥

फालेक्षणान्तरगते द्विकलायते च
चिल्ल्यौ कलाव्यवहिते द्वियवप्रताने ।
नेत्रैकवीथिविसरच्चुटुकान्तरन्ध्रौ
कर्णौ कराणवपदप्रततातितौ च ॥ ५ ॥

द्व्येकाङ्गुलाततदर्धततताधरोत्त-
रोष्ठान्ततोऽङ्गुलविनिस्सृतसृक्कयुग्मम् ।
कम्बीरकादिरुचिरं प्रकरोतु गोजिं
घोणाग्रसामिपिहिताष्टयवावतीर्णाम् ॥ ६ ॥

शब्दग्रहादिचिबुकावधि मानमिष्ट-
मष्टाङ्गुलैश्चिबुकमानमथाङ्गुलाभ्याम् ।
ग्रीवा गजाङ्गुलततार्ककलोपपन्नं
कक्षान्तरं स्तनयुगान्तरमेकतालम् ॥ ७ ॥

नाभिस्थली प्रविततता नृपतिप्रमाणैः
स्यादङ्गुलैः कटितटी धृतिसम्मितैश्च ।
कक्षस्तनान्तरमृतुप्रमिताङ्गुलाढ्यं
कक्षांसमध्यमपि मांसलमंसयुग्मम् ॥ ८ ॥

कक्षादिसन्ध्यवधिकायतिरङ्कसङ्ख्यैः
स्याद् गोलकैः शिवमितैर्मणिबन्धनिष्ठा ।
दिक्सङ्ख्यकैरुपभुजेऽथ ततिश्चतुर्भि-
र्मूले प्रकोर्परयुगे भुजयोस्त्रिभिश्च ॥ ९ ॥

अष्टाङ्गुलैः करतलाततिरश्चिहीनै-
स्तद्विस्तृतिर्भवति मध्यमिकायतिश्च ।
मध्याद् दशांशरहिते निजपार्श्वजे तत्-
पञ्चांशमात्ररहिते प्रथमान्त्यशाखे ॥ १० ॥

अङ्गुष्ठके विततिरर्कयवैः परासु
त्र्यंशोनितैः प्रतिपरं लघिमा यवेन ।

मध्योद्भवाप्रथमपर्वयुगं समान-
दैर्घ्यं तदर्धपरिमाणमथाग्र्यपर्व ॥ ११ ॥

देशिन्युपावरजयोरमुतो द्विपांश-
हीनानि पादरहितानि कनिष्ठिकायाः ।
पर्वाणि पर्वयुगलं क्रमशोऽथ तर्जा-
मध्याद्यपर्वसुसमं प्रथमोद्भवायाः ॥ १२ ॥

स्वस्वाग्र्यपर्वदलतो रचिता नखाः स्यु-
र्नाहोऽङ्गुलैः श्रुतिमितैः प्रथमप्रसूतेः ।
मध्याद्विपार्श्वजनितावरजास्वतोऽतो
नाहोऽष्टमांशरहितो विहितः क्रमेण ॥ १३ ॥

अङ्गुष्ठतर्जनिकयोर्नयनाङ्गुलाढ्य-
मभ्यन्तरं प्रथमजामणिबन्धमध्यम् ।
अब्ध्यङ्गुलैः परिमितं मणिबन्धकेऽपि
तैर्विस्तृतिः करभदैर्घ्यमथार्धतालम् ॥ १४ ॥

लिङ्गं युगाङ्गुलमितं वृषणद्वयं स्याद्
द्विद्व्यङ्गुलं द्विरदकुम्भनिभे स्फिजौ द्वे ।
वृत्ते षडङ्गुलतते द्वयमध्यसंस्था
कौपीनराज्यपि कलावितता कृशाग्रा ॥ १५ ॥

मूलान्तराग्रविततिः क्रमशोऽङ्गुलैः स्या-
दूरुद्वये सुषिरभानुशरप्रमाणैः ।
जङ्घाद्वयेऽङ्गिरिसत्रियवत्रिसंख्यैः
कार्या ककुप्परिमितैरधिजानुयुग्मम् ॥ १६ ॥

मूलादिवेदशरसाङ्घ्रिरसाङ्गसंख्यै-
र्व्यासोऽङ्गुलैः पदतलेऽर्कमितैश्च दैर्घ्यम् ।
अङ्गुष्ठसीम्नि कलयोन्नतिरर्धतोऽन्य-
पार्श्वेऽङ्गुलैः प्रपददैर्घ्यमृतुप्रमाणैः ॥ १७ ॥
अङ्गुष्ठतत्सहभुवोर्जगदङ्गुलाढ्यं
दैर्घ्यं नखान्नखमितिद्व्यसितास्ततोऽन्याः ।
पर्वत्रयाहितरुचोऽङ्गुलयो द्विपर्वा-
ङ्गुष्ठोऽर्धपर्वशशिखण्डनिभा नखाः स्युः ॥ १८ ॥
अङ्गुष्ठके रसमितैः परिधिः परस्यां
स्यादङ्गुलैस्त्रिभिरथाष्टमभागहीनैः ।
कार्यः क्रमात् तदित(रेष्व ? रास्व)खिलेषु तत्त-
द्व्यासेन लोकगुणितेन करोतु नाहम् ॥ १९ ॥
तालैस्त्रिभिः शिरसि साष्टियवेषुसंख्यैः
कक्षान्तरे रहितविश्वयवैश्चतुर्भिः ।
कुक्षौ त्रिभिर्भवति नाभितलेऽर्धयुक्तै-
र्नाहस्तथा कटितटेऽर्धयुताब्धिसंख्यैः ॥ २० ॥
जङ्घोरुबाहुयुगमध्यकराङ्गुलीषु
कार्या करीन्द्रकरवत् परिवृत्तता च ।
कूर्माभता प्रपदयोर्जलजाभता च
कण्ठे कपोलतलयोर्मुकुराभता च ॥ २१ ॥
यद्यदत्र तु न कथ्यते मया तत्तदङ्गमखिलं तु युक्तितः ।
उत्तमाख्यनवताललक्षणप्रोक्तमार्गमनुसृत्य कारयेत् ॥२२॥

इति शिल्परत्ने उत्तरभागे मध्यमनवताललक्षणं नाम
नवमोऽध्यायः ॥

## अथ दशमोऽध्यायः ।

### अथाधमं नवतालम् ।

उष्णीषोच्चं शिवांशं स्यात् केशं सार्धद्विभागया ।
केशान्तान्नेत्रसूत्रान्तं पादोनचतुरंशकम् ॥ १ ॥
तथैव तस्मान्नासान्तं तथा तद्धनुसीमकम् ।
सार्धलोकाङ्गुलं ग्रीवातुङ्गमानं ततः पुनः ॥ २ ॥
हृदयान्तं ततो नाभिसीमान्तं च ततः पुनः ।
मेढ्रान्तं च पृथक् पादयुक्तरुद्रांशमानकम् ॥ ३ ॥
ऊरुदीर्घं तथार्धोनत्रयोविंशांशकं स्मृतम् ।
गलतुङ्गसमं जानु जङ्घामूरुवदाचरेत् ॥ ४ ॥
गुल्फमानं तु सार्धाग्निभागमेव विधीयते ।
बाह्वोश्चोरुसमं दीर्घं प्रकोष्ठं षोडशाङ्गुलम् ॥ ५ ॥
तलदीर्घं तु भूतांशं तत्समं मध्यमाङ्गुलम् ।
शेषं युक्त्या सुकर्तव्यमुत्तमाद्युक्तवर्त्मना ॥ ६ ॥

इति शिल्परत्ने उत्तरभागे अधमनवतालविधिर्नाम
दशमोऽध्यायः ॥

## अथैकादशोऽध्यायः ।

### अथाष्टतालोत्तमम् ।

उष्णीषोच्चं शिवांशं स्यात् केशं सार्धद्विभागतः ।
पादोनरुद्रभागं स्यात् केशान्ताद्धनुसीमकम् ॥ १ ॥
केशान्तादक्षिसूत्रान्तं तत्त्रिभागैकमानतः ।
तथैव च पुटान्तं तु शेषं तद्धनुसीमकम् ॥ २ ॥

साधीग्न्यंशं गलोत्सेधं हिक्कादिहृदयान्तकम् ।
पादोनरुद्रभागं स्यात् तस्मान्नाभ्यन्तकं ततः ॥ ३ ॥
तथा तस्मान्मेढ्रमूलमूरुदीर्घं पुनस्ततः ।
सार्धत्रिसप्तभागं तु जानुतुङ्गं गलोक्तवत् ॥ ४ ॥
जङ्घादीर्घं चोरुतुल्यं जानुतुल्यं तलोदयम् ।
बाह्वोश्चोरुसमं दीर्घं प्रकोष्ठं तु कलांशकम् ॥ ५ ॥
बाह्वोस्तलं भूतभागं तत्समं मध्यमायतम् ।
अनुक्तं सकलं पूर्वं नवतालोक्तमाचरेत् ॥ ६ ॥

इति शिल्परत्ने उत्तरभागे अष्टतालविधानं नाम
एकादशोऽध्यायः ॥

## अथ द्वादशोऽध्यायः ।

### अथोत्तमं सप्ततालम् ।

उष्णीषं त्वर्धभागेन केशान्तं शशिभागतः ।
सार्धद्व्यंशं तु नेत्रान्तं सार्धाग्न्यंशं पुटान्तकम् ॥ १ ॥
चिबुकान्तं च तत्तुल्यं वेदांशं तु गलोदयम् ।
स्तनान्तं सप्तभागं तु रुद्रांशं नाभिसीमकम् ॥ २ ॥
तथैव योनिमूलान्तं विंशांशं चोरुदीर्घकम् ।
जानुमानं द्विभागं तु जङ्घा चोरुसमा भवेत् ॥ ३ ॥
चरणोच्चं द्विभागेन मन्वंशं तु तलायतम् ।
ऊरुदीर्घसमं बाहुं प्रकोष्ठं तु कलाङ्गुलम् ॥ ४ ॥

तलायामं तु भूतांशं वेदांशं तस्य विस्तृतम्।
तत्तलायामसदृशं मध्यमाङ्गुलिदीर्घकम्[1] ॥ ५ ॥
शेषं प्रागुक्तमार्गेण कार्यमङ्गमशेषतः ॥ ५½ ॥

इति शिल्परत्ने उत्तरभागे सप्तताललक्षणं नाम
द्वादशोऽध्यायः ॥

---

## अथ त्रयोदशोऽध्यायः।

### अथ षट्तालम्।

उष्णीषमर्धभागं स्यादेकांशं केशमानकम्।
सार्धवस्वङ्गुलं प्राग्वद् केशान्ताद्धनुसमिकम् ॥ १ ॥
गलोदयं त्रिभागार्धं मुखतुल्यमतः पृथक्।
हिक्कादिहृदयान्तं च नाभ्यन्तं च ततः क्रमात् ॥ २ ॥
तस्मान्मेढ्रस्य मूलान्तमूरू चाप्यष्टिभागतः।
सार्धभागं जानुदीर्घं जङ्घा[2] चोरुसमोन्नता ॥ ३ ॥
आगुल्फतलतुङ्गं तु सार्धभागमुदाहृतम्।
ऊरुदीर्घसमं बाहुं कुर्याद् विश्वाङ्गुलं पुनः ॥ ४ ॥
प्रकोष्ठं भूतभागं तत्तलं मध्याङ्गुलं तथा।
भास्कराङ्गुलमानेन कुर्यात् पादतलायतम् ॥ ५ ॥
पूर्वस्मादूहयेत् सर्वमत्रानुक्तं विशारदः ॥ ५½ ॥

इति शिल्परत्ने उत्तरभागे षट्काललक्षणं नाम
त्रयोदशोऽध्यायः ॥

---

१. 'ल' ग. पाठः. २. 'तुङ्गं ज' ख. पाठः.

## अथ चतुर्दशोऽध्यायः ।

### अथ पञ्चतालोत्तमेन विघ्नेश्वरलक्षणम् ।

मूर्ध्नो मस्तकसीमान्तमङ्गुलद्वयमुच्यते ।
तस्माद् वै नेत्रसूत्रान्तं चतुर्मात्रमुदाहृतम् ॥ १ ॥
ततोऽष्टमात्रमानं तु हनुसीमान्तमाततम् ।
गलं तु चतुरंशं स्यादाशांशं हृदयं ततः ॥ २ ॥
ततो नाभिस्ततो मेढ्रं नवांशमिति कथ्यते ।
ऊरू सार्धषडंशोच्चौ जानुनी गुणभागतः ॥ ३ ॥
जङ्घा चोरुसमायामा तलोत्सेधं गुणांशकम् ।
सप्ताङ्गुलं तलायाममङ्गुष्ठाग्रावसानकम् ॥ ४ ॥
पादाङ्गुष्ठायतं द्व्यंशं सार्धांशं तु कनिष्ठिका ।
तर्जन्यादिकनिष्ठान्तं प्रत्येकं यवहीनतः ॥ ५ ॥
त्रयोदशाङ्गुलं बाहुं कोष्ठायामं नवाङ्गुलम् ।
चतुर्मात्रं तलायाममग्न्यंशं मध्यमायतम् ॥ ६ ॥
तर्जन्यनामिके द्वे च एकविंशद्यवायते ।
सप्तोत्तरदशयवं दीर्घे ज्येष्ठकनिष्ठयोः ॥ ७ ॥
द्वादशाष्टनवाष्टांशयवा ज्येष्ठादिविस्तृतिः ।
तत्तद्व्यासत्रिपादं स्यान्नखव्यासमुदाहृतम् ॥ ८ ॥
तत्तद्व्यासस्य पादोनं नखायामं प्रकीर्तितम् ।
व्यासं प्रकोष्ठे वेदांशं कोर्परोर्ध्वे षडंशकम् ॥ ९ ॥
बाहुमूले तु वस्वंशं मस्तकेऽष्टाङ्गुलं ततः ।
सप्ताङ्गुलं निम्नदेशे मुखमध्ये दशाङ्गुलम् ॥ १० ॥

मुखहस्तस्य मानं तु नाभिदेशसमायतम् ।
मूले षडङ्गुलं तारमग्रे सार्धांशमत्र हि ॥ ११ ॥
सुषिरद्वयसंयुक्तं कार्यं तद्धस्तमीरितम् ।
कण्ठादूर्ध्वं गजेन्द्राभं मुखं कुर्याद् विचक्षणः॥ १२ ॥
वामदन्तायतं वेदमात्रं द्वयं हि बाह्यतः ।
दक्षदन्तं पादमात्रं भिन्नाकारं प्रकल्पयेत् ॥ १३ ॥
अधरस्य तु निष्कान्तं लम्बनं च द्विमात्रकम् ।
(तैला ? ताल्वा)यामविशालं च षड्यवं परिकीर्तितम्
[॥ १४ ॥
कर्णव्यासं भूतमात्रमुत्सेधं चैव तत्समम् ।
अर्धाङ्गुलं नतं तस्य कर्णमूलं द्विभागतः ॥ १५ ॥
बाहुपर्यन्तविस्तारो द्वात्रिंशदङ्गुलं भवेत् ।
एकोनविंशदंशं तु कक्षान्तरमुदाहृतम् ॥ १६ ॥
स्तनान्तरं दशांशं तु हिक्कायास्तद्वदेव हि ।
स्तनान्ताद् द्वियवं व्यासं द्व्यङ्गुलं स्तनमण्डलम् ॥ १७ ॥
स्तनाधस्ताद् विशालं तु भागैः पञ्चदशान्वितैः ।
द्वाविंशदङ्गुलं ख्यातं जठरार्धे विशालकम् ॥ १८ ॥
नाभेर्निम्नविशालं तु सार्धाङ्गुलमुदाहृतम् ।
लिङ्गायामं गुणांशं तु तदर्धं तस्य विस्तृतम् ॥ १९ ॥
मुष्कायामं विशालं च गुणाङ्गुलमुदाहृतम् ।
ऊरोर्व्यासं तु भान्वंशं जानुव्यासं नवाङ्गुलम् ॥ २० ॥
जङ्घामूलविशालं तु सप्तमात्रमुदाहृतम् ।
नलकाविस्तृतं चापि सार्धाङ्गुलमुच्यते ॥ २१ ॥

तलाग्रस्य ततिः सार्धषडङ्गुलमिति स्मृतम् ।
पार्ष्ण्यायामं विशालं च गुणाङ्गुलमुदाहृतम् ॥ २२ ॥
द्वादशाष्टषडंशार्धषट्पञ्चकयवैः क्रमात् ।
अङ्गुष्ठादिकनिष्ठान्तपादाङ्गुलिविशालकम् ॥ २३ ॥
तच्चिपादं नखव्यासं व्यासार्धं तत्तदायतम् ।
यद्यन्नोक्तं ततस्तांस्तान् कारयेत् पूर्वमुक्तवत् ॥ २४ ॥

अथान्यथा —

अक्ष्यङ्गुलं तु केशोच्चं सप्तांशं मुखमानकम् ।
ग्रीवोच्चं तु युगांशं स्यात् तस्माच्चूचुकमंशतः ॥ २५ ॥
तस्मान्नाभिस्ततो मेढ्रं सप्तभागेन कल्पयेत् ।
भान्वंशमूरुदीर्घं च जानुदीर्घं द्विभागतः ॥ २६ ॥
जङ्घादीर्घं द्वादशांशं द्व्यंशं पादतलोन्नतम् ।
दशांशं तु तलायामं मन्वंशं बाहुमानकम् ॥ २७ ॥
प्रकोष्ठायतमाशांशं तलायामं युगांशकम् ।
तत्समं मध्यमायाममन्यत् सर्वं पुरोक्तवत् ॥ २८ ॥

अथ मध्यमपञ्चतालेन विघ्नेशः ।

विघ्नेशं शरतालकैर्विरचयेत् त्र्यक्षं महेभाननं
गूढाभुमगलं स्थितं समुपविष्टं वातिपीनाङ्गकम् ।
उष्णीषान्मुखमेककेन सदलाभ्यां तालकाभ्यां ततः
कट्यन्तं चरणौ कराश्च करणीयाः सार्धतस्तालतः ॥ २९ ॥

इति शिल्परत्ने उत्तरभागे पञ्चताललक्षणं नाम
चतुर्दशोऽध्यायः ॥

—

१. 'ल' ग. पाठः. २. 'क' क. ख. ग. पाठः.

अथ पञ्चदशोऽध्यायः ।

अथ चतुस्तालम् ।

एकाङ्गुलं शिरोन्मानं केशान्तं चैव तत्समम् ।
द्विभागं नेत्रसूत्रान्तं पुटान्तं चैव तत्समम् ॥ १ ॥
गुणांशं हनुसीमान्तं ग्रीवोच्चं तु गुणाङ्गुलम् ।
हिक्कासूत्रात् स्तनान्तं तु नवभागमुदाहृतम् ॥ २ ॥
स्तनो(स्तु ? त्तु) मेढ्रमूलान्तं सप्तमात्रमिति स्मृतम् ।
भान्वंशमूरुदीर्घं स्याज्जानु द्व्यङ्गुलमेव हि ॥ ३ ॥
जङ्घादीर्घं दशांशं तु द्व्यंशं पादतलोन्नतम् ।
दशांशोऽङ्घ्रितलायामो बाहुर्मन्वंशकं स्मृतम् ॥ ४ ॥
प्रकोष्ठं तु दशांशं स्यात् तलं वेदाङ्गुलायतम् ।
युगांशं मध्यमायाम सार्धाग्न्यंशमनामिका ॥ ५ ॥
तत्समं तर्जनीदीर्घं कनिष्ठायां गुणाङ्गुलम् ।
अङ्गुष्ठायाममग्न्यंशं + + + तलविस्तृतम् ॥ ६ ॥
प्रकोष्ठाग्रं गुणांशं तु तन्मूलं चतुरङ्गुलम् ।
भूतांशं बाहुमूलस्य विस्तारं समुदाहृतम् ॥ ७ ॥
सार्धाष्टांशं मुखव्यासं सप्तांशं कण्ठविस्तृतम् ।
कक्षयोरन्तरव्यासं त्रयोदशाङ्गुलं भवेत् ॥ ८ ॥
भान्वंशं हृदि विस्तारं रुद्रांशं मध्यविस्तृतम् ।
श्रोणिस्थाने तु भान्वंशं कटौ विश्वाङ्गुलं स्मृतम् ॥ ९ ॥
ऊरुमूलविशालं तु वस्वङ्गुलमुदाहृतम् ।
षडंशं जानुविस्तारं जङ्घामूलं युगाङ्गुलम् ॥ १० ॥

१. 'नादेस्तु', २. 'पञ्चमा' ख. पाठः.

गुणांशं नलकातारं षडंशं तलविस्तृतम् ।
पार्ष्णिव्यासं युगांशं स्याच्छेषं युक्त्या प्रकल्पयेत् ॥ ११॥

अथ मध्यमं चतुस्तालम् ।

उष्णीषं चैकभागेन केशान्तं च तथा भवेत् ।
वस्वंशं तु मुखायामं गलमष्ट्यंशमेव च ॥ १२ ॥
हिक्कादिहृदयान्तं तु षडङ्गुलमुदाहृतम् ।
हृदयान्मेढ्रपर्यन्तं षडङ्गुलमुदाहृतम् ॥ १३ ॥
वशांशामूरुदीर्घं स्याद् द्व्यङ्गुलं जानुतुङ्गता ।
जङ्घादीर्घं तूरुतुल्यं द्विभागं चरणोदयम् ॥ १४ ॥
मन्वंशं तु करायामं मध्यमाङ्गुलिसीमकम् ।
शेषं युक्त्या तु कर्तव्यमुक्तमार्गानुसारतः ॥ १५ ॥
त्रिद्वेकतालमेयानां प्रतिमानां विचक्षणः ।
अङ्गोपाङ्गादिमानानि प्रोन्नयेत् पूर्वशास्त्रतः ॥ १६ ॥

इति शिल्परत्ने उत्तरभागे चतुस्तालविधिर्नाम
पञ्चदशोऽध्यायः ॥

---

अथ षोडशोऽध्यायः ।

अथ किरीटादिलक्षणम् ।

अत्रैकाङ्गुलसम्मितेन परिवेष्टयोष्णीषपट्टेन के
कोटीरं मकुटोज्ज्वलं विरचयेदष्टाङ्गुलैः सर्वतः ।
द्व्यष्टाभिर्धृतिसम्मितैर्दिनकरद्वन्द्वप्रमैरङ्गुलै-
रुष्णीषोपरि भासमानमकुटोपेतं किरीटं हरौ ॥ १ ॥

---

१. 'ध्यं' ख. पाठः. २. 'रसाङ्गु' ख, ग. पाठः.

कुर्यात् किरीटं शिखरैरुपेतं त्रिपञ्चसप्तप्रमितैर्यथार्हम्।
अण्डोपमं वा कमलोपमं वा छत्रोपमं वा कमठोपमं वा॥ २॥

युग्मसङ्ख्या जटा कार्या उभयोः पार्श्वयोः पृथक्।
द्वात्रिंशन्मात्रमारभ्य अथैकाङ्गुलवृद्धितः॥ ३॥
एकषष्ट्यङ्गुलान्तं तु जटादीर्घमुदाहृतम्।
अधोजटा दीर्घतमास्तस्मादूर्ध्वोर्ध्वगास्तथा॥ ४॥
क्रमान्न्यूना तु कर्तव्या तदर्हेषु समान्तरा।
कनिष्ठाङ्गुलपरीणाहं जटानाहमुदाहृतम्॥ ५॥
जटामकुटतुङ्गं तु चतुर्विंशाङ्गुलं तु वा।
एकविंशाङ्गुलं वाथ कुर्यादष्टादशाङ्गुलम्॥ ६॥
सप्तादशाङ्गुलं वाथ षोडशाङ्गुलमेव वा।
केशान्तान्मकुटान्तं तु ललाटे पट्टसंयुतम्॥ ७॥
मुखान्तव्याससदृशं मकुटस्य विशालकम्।
तुङ्गार्धं वा त्रिपादं वा यथाशोभं प्रकल्पयेत्॥ ८॥
तत्सप्ताष्टनवांशैकहीनमग्रविशालकम।
चतुष्पूरिमसंयुक्तं भान्वंशं पूरिमोदयम्॥ ९॥
शम्भौ जटायां कर्तव्या मूर्ध्नि गङ्गा प्रमाणतः।
भान्वङ्गुलायता वाथ षोडशांशसमुच्छ्रया॥ १०॥
हृदयेऽञ्जलिसंयुक्ता प्रोक्तस्त्रीलक्षणान्विता।
किरीटमकुटं चैव केशं वा तत्र कल्पयेत्॥ ११॥
मूलादग्रं क्रमात् क्षीणं करण्डमकुटस्य तु।
अग्रस्य मुकुलाकारं मकुटस्य प्रकल्पयेत्॥ १२॥

त्रिपञ्चसप्तसङ्ख्यैस्तु करण्डैश्च विराजितम् ।
करण्डमकुटं कार्यमन्यत् सर्वं यथापुरम् ॥ १३ ॥
त्रिचतुष्पञ्चमात्र स्यात् पत्रकुण्डलविस्तृतम् ।
यवं वृत्तघनं प्रोक्तं श्वेताभं वात्र चार्तवम् ॥ १४ ॥
मकरं कुण्डलं वाथ सिंहकुण्डलमेव वा ।
गजादिकुण्डलं वाथ द्विचतुष्पञ्चमात्रकम् ॥ १५ ॥
कुर्याद् व्यासं च तुङ्गं च तत्तदाकारभेदतः ।
वृत्तकुण्डलविस्तारमष्टादशयवं भवेत् ॥ १६ ॥
वेदाङ्गुलं तु तत्तुङ्गं रम्भाब्जमुकुलोपमम् ।
हिक्कासूत्रोपरिष्टात्तु उपग्रीवं तु बन्धयेत् ॥ १७ ॥
रुद्राक्षं वाथ रत्नं वा हेमक्लृप्तमणिं तु वा ।
नानाचित्रविचित्रं तु ग्रैवेयं वा यथोचितम् ॥ १८ ॥
कटकं वलयोपेतं प्रकोष्ठे तु प्रकल्पयेत् ।
कनिष्ठाङ्गुलिपरीणाहं वलयं वर्तुलं तु वा ॥ १९ ॥
अथवा वलयस्यैव घनं द्वित्रियवं तु वा ।
घनद्विगुणविस्तारं नानारत्नविचित्रितम् ॥ २० ॥
युगलं युगलं तत्तु प्रकोष्ठेषु प्रकल्पयेत् ।
केयूरं कोर्परादूर्ध्वे वलयोक्तघनान्वितम् ॥ २१ ॥
एकाकारं तु केयूरं साष्टपादाब्जसंयुतम् ।
नानारत्नसमायुक्तं शैवलाभमथापि वा ॥ २२ ॥
पत्रपूरितसंयुक्तं बाहुमध्ये प्रकल्पयेत् ।
पत्रपूरितनालं तु केयूरसदृशं घनम् ॥ २३ ॥

तत्पूरितादधोनालं बाहुमित्यावृतं तु वा ।
त्रिचतुष्पञ्चमात्रं वा पत्रपूरितविस्तृतम् ॥ २४ ॥
तद्व्यासार्धं तु तत्तुङ्गं पादोनद्विगुणं तु वा ।
द्विगुणं वापि कर्तव्यं तद् बाहुवलयं भवेत् ॥ २५ ॥
मध्याङ्गुलं विना शेषा अङ्गुला मुद्रिकान्विताः ।
मुद्रिकामूलपर्वस्था वृत्ता यवघनान्विताः ॥ २६ ॥
रत्नचित्रविचित्रा वा तत्तद्योग्यं समाचरेत् ।
मध्याङ्गुलाग्रमभये चूचुकोर्ध्वसमं भवेत् ॥ २७ ॥
तर्जन्यादिकनिष्ठान्तास्तुल्यमूलास्तु वक्रिताः ।
ईषद् वक्रितमङ्गुष्ठमूर्ध्वाग्रं तु बहिर्मुखम् ॥ २८ ॥
तथैव वरदं कृत्वा मणिबन्धकटौ पुनः ।
मध्याङ्गुलाग्रमालम्ब्य मेढ्राग्रान्तं बहिर्मुखम् ॥ २९ ॥
तदेव सिंहकर्णाख्यं तलमध्यगतं यदि ।
मध्याङ्गुलाग्रं वक्राभं तदुपान्तगतं तथा ॥ ३० ॥
अनामिकाग्रे[1] शेषाः स्युः पूर्ववत् परिकल्पिताः[2] ।
अभयाकारमालम्ब्य हस्तमूरौ समर्पितम् ॥ ३१ ॥
यदि तत् कटकं प्रोक्तं मणिबन्धं तूरुबाह्यतः ।
एकद्वित्र्यङ्गुलाद् बाह्ये कर्तव्यं बुद्धिमत्तमैः ॥ ३२ ॥
हिक्कासूत्रसमं मध्यमाग्रमूर्ध्वाननं करम् ।
बहिर्मुखं कर्तरी सा शङ्खचक्रादिसंयुता ॥ ३३ ॥
वक्रौ त्वनामिकाङ्गुष्ठौ तलमध्यगतौ पुनः ।
किञ्चिद् वक्रा कनिष्ठा सा द्वावन्यावप्यृजुक्रियौ ॥ ३४ ॥

१. 'म्राः', २. 'ल्पयेत्' क. ग. पाठः.

तथा सूचीति विख्याता कर्णसूत्रसमोन्नता ।
तर्जन्याग्रं तदा तत्र योजयेदङ्कुशादिकम् ॥ ३५ ॥
अङ्गुष्ठानामिकामध्यमाङ्गुल्यस्तलमध्यगाः ।
किञ्चिद् वक्रा कनिष्ठा सा तर्जन्यृजुतरा भवेत् ॥ ३६ ॥
यज्ञोपवीतं सर्वेषां यवाष्टांशघनान्वितम् ।
उपवीतं त्रिसूत्राढ्यमुरस्सूत्रसमन्वितम् ॥ ३७ ॥
एकमेव ह्युरस्सूत्रमुपवीतघनान्वितम् ।
वामस्कन्धोपरिष्टात्तु नाभ्य(धो) ह्यङ्गुलान्ततः ॥ ३८ ॥
यज्ञोपवीतदीर्घं तु नाभेर्दक्षिणपार्श्वगम् ।
अपरे वंशमाश्रित्य यज्ञसूत्रं निधापयेत् ॥ ३९ ॥
ऊरु ? उरस्सूत्रं समालम्ब्य स्तनादष्टाङ्गुलान्तरे ।
यज्ञोपवीतवत् कार्यं स्कन्धयोरुभयोरपि ॥ ४० ॥
पार्श्वयोश्चैव योन्यूर्ध्वे चन्नवीरमिदं विदुः ।
हिक्कात् षडङ्गुलाधस्तात् स्तनयोर्मध्यदेशतः ॥ ४१ ॥
ग्रैवेयहारमाख्यातं वेदमात्रवितानकम् ।
यवत्रयं घनं तस्य नानामणिहिरण्मयम् ॥ ४२ ॥
कण्ठादुदरबन्धान्तमक्षमालां प्रकल्पयेत् ।
हृन्मालेति प्रसिद्धा सा स्कन्धमालां च कारयेत् ॥ ४३ ॥
नानापुष्पमयी स्कन्धदेशे सा सम्प्रकीर्तिता ।
कटिसूत्रं त्रिभिः सूत्रैः सूत्रं प्रति यवं घनम् ॥ ४४ ॥
कटिसन्ध्योपरिष्टात्तु रत्नचित्रितमाचरेत् ।
मेढ्रादधः कृत्तिमास्यं पञ्चषट्सप्तमात्रकम् ॥ ४५ ॥

तारं तारसमं तुङ्गं घनमर्धाङ्गुलं स्मृतम् ।
ततोरुमानत्र्यंशान्तं मुक्तादामादि लम्बयेत् ॥ ४६ ॥
पादौ जालकसंयुक्तौ गुल्फाधस्तात्तथैव च ।
जालकाबद्धसूत्रं तु यवद्वयघनान्वितम् ॥ ४७ ॥
तत्सूत्राज्जालकालम्बं त्रिपञ्चयवमानकम् ।
त्रियवं जालनालं तु व्यासतुल्यं तदुन्नतम् ॥ ४८ ॥
यवमानं घनं शेषं गाढमत्र प्रकल्पयेत् ।
गाढयुक्तं तु वृत्ताभमन्तःपाषाणसंयुतम् ॥ ४९ ॥
गाढहीनं घनं वान्तर्द्दषदत्र न कारयेत् ।
भुजङ्गवलयं यत्र प्रकोष्ठादिषु रोचते ॥ ५० ॥
तत्प्रदेशपरीणाहात् सपादं स्यात्तदायतम् ।
तद्दीर्घादुपरि ख्यातं फणं भान्वङ्गुलायतम् ॥ ५१ ॥
सप्ताङ्गुलं तु विस्तारं घनं चैकाङ्गुलं फणे ।
अतितीक्ष्णतरे जिह्वे मुखे कुर्यात्तु लोचने ॥ ५२ ॥
वस्त्रं कौशेयकार्पासचीरचर्मादिकं पुनः ।
तत्तद्योग्यं प्रकर्तव्यं युक्त्या सर्वत्र बुद्धिमान् ॥ ५३ ॥
यद्द्रव्येण कृतं बिम्बं तेनैवायुधमाचरेत् ।
शताङ्गुलायतं चापं नवसप्ताशुगानलैः ॥ ५४ ॥
मात्रैर्युतं विहीनं वा नवधा धनुषोदयम् ।
पूर्णमुष्टिस्तु नाहः स्यान्मध्यादग्रौ क्रमात् कृशौ ॥ ५५ ॥
अग्रावर्धाङ्गुलौ व्यासौ वृत्तौ कार्यौ गुणाङ्गुलौ ।
चितौ आयात्रिभागैके बाणनाभिस्तु मूलतः(?)॥

१. 'चीतौ आयामस्य त्रि' क. ख. पाठः.

चापायामाष्टभागोनं रज्जुदीर्घमुदाहृतम् ।
त्रिवक्रसहितं वाथ बालेन्द्वाकारमेव वा ॥ ५७ ॥
एकविंशाङ्गुलं बाणदीर्घं तद्विगुणं तु वा ।
कनिष्ठाङ्गुलिमानेन परिणाहं शरस्य तु ॥ ५८ ॥
आस्यायामं पञ्चमात्रं तत्तारं चैव तत्समम् ।
आस्यदीर्घसमं पुच्छं पत्रबन्धविचित्रितम् ॥ ५९ ॥
पैत्राणामङ्गुलं व्यासं पृष्ठे ज्यानाभिमाचरेत् ।
पुच्छतारत्रिभागैकं ना(भ्या ? भ्य)गाधं च विस्तृतम् ॥६०॥
टङ्कं भान्वङ्गुलायामं कुर्याद् युक्त्या बहिर्मुखम् ।
मृगं बहिर्मुखं वाथ कुर्यादन्तर्मुखं तथा ॥ ६१ ॥
द्वादशाङ्गुलमायामं तयोश्च युक्तितश्चरेत् ।
द्वादशाङ्गुलविस्तारं चक्रं शङ्खं तथैव च ॥ ६२ ॥
डमरोर्दीर्घविस्तारे वसुपञ्चाङ्गुलान्विते ।
मध्यं गुणाङ्गुलं व्यासमायामं चैव तत्समम् ॥ ६३ ॥
वलयद्वयसंयुक्तं चर्मसूत्रादिसंयुतम् ।
नवाङ्गुलं तु विस्तारं तारादर्धं त्रिपादकम् ॥ ६४ ॥
उच्चं कमण्डलोः कुर्याद् यथाकारं तथैव च ।
पद्मं तालसमुच्छ्रयं द्विगुणविस्तारं च षोढा कृते
मूले पट्टिमिलांशतो द्वितयतो वाधस्तनाष्टच्छदम् ।
अङ्घ्र्यूनप्रथमञ्जमध्यमुपरिष्टादष्टपत्रं त्रिभि-
र्भागैः पट्टयुतं करोतु कमलेनामात्र पीठोच्छ्रयः ॥६५॥
विंशत्या प्रतिमाङ्गुलैः प्रविततं वृन्ते तया सैकया
नालं सद्वितयापि वाथ वितसेरष्टाचलाङ्गांशकैः ।

---

१. 'पा' ग. पाठः.

अन्ते हीनवितानमारचयतु ब्रह्मोपलान्तायतं
तुर्याश्रं सकलेषु वैधसमिदं वृत्तं क्वचिच्चैश्वरम् ॥ ६६[1] ॥

इति शिल्परत्ने उत्तरभागे किरीटकटकादिलक्षणं नाम
षोडशोऽध्यायः ॥

---

## अथ सप्तदशोऽध्यायः।

### अथ लेप्यबिम्बे शूललक्षणम्।

लेप्यबिम्बे प्रकर्तव्ये कारयेच्छूलमादितः।
तत्तदङ्गान्तरङ्गस्थमस्थिवच्छूलमेव तत् ॥ १ ॥
खदिराद्यैः सारवृक्षैर्युक्तितः शूलमाचरेत्।
शिलासंग्रहवद् दारुस्त्रीकारं कारयेदिह ॥ २ ॥
पुंवृक्षैरेव देवानां देवीनां स्त्रीमहीरुहैः।
हिक्काधःकायतुल्यं स्याद् वंशदण्डायतं स्मृतम् ॥ ३ ॥
मध्योदरविशालस्य चतुर्भागैकविस्तृतम्।
तदष्टांशविहीनं स्याद् वंशदण्डाग्रविस्तृतम् ॥ ४ ॥
नाभ्यन्तं चतुरश्रं तु हिक्कान्तं वसुकोणकम्।
तदूर्ध्वं वृत्तमाख्यातमशेषं वृत्तमेव वा ॥ ५ ॥
द्वात्रिंशदङ्गुलं दीर्घं पक्षदण्डायतं स्मृतम्।
विस्तारं सार्धषण्मात्रमथ सप्ताङ्गुलं तु वा ॥ ६ ॥
विस्तारार्धं घनं प्रोक्तं पक्षदण्डस्य तस्य तु।
मध्यादंशक्रमादग्रौ कृशौ स्यातां युगाङ्गुलौ ॥ ७ ॥
पक्षदण्डस्य मध्ये तुच्छिद्रं सार्धगुणाङ्गुलम्।
हिक्कादण्डादधस्तात्तु पक्षदण्डोर्ध्वपार्श्वकम् ॥ ८ ॥

द्व्यङ्गुलं स्याद् यथा तद्वद् वंशदण्डे तु योजयेत् ।
षोडशाङ्गुलमायामं कटिदण्डाभिधस्य तु ॥ ९ ॥
वस्वङ्गुलं तु तत्तारं घनं वेदाङ्गुलं स्मृतम् ।
मध्ये युगाङ्गुलं छिद्रं नाभेः पञ्चाङ्गुलादधः ॥ १० ॥
कटिदण्डोर्ध्वपार्श्वे स्याद् यथा वंशे सुयोजयेत् ।
पक्षदण्डाग्रयोश्चैव कटिदण्डाग्रयोस्तथा ॥ ११ ॥
हस्तपद्दण्डयोगार्थं कुर्याद् वक्रशिखाः क्रमात् ।
द्व्यङ्गुलं तु शिखायामं हस्तसंख्योचितं ततम् ॥ १२ ॥
पक्षदण्डविशालस्य मानेनैवं विचक्षणः ।
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टादिभिः पुनः ॥ १३ ॥
तत्तद्बिम्बोचितकरसंख्यैः सम्यग् विभाजयेत् ।
शिखाव्यासं तदेकांशं मूलेऽग्रे मूलतः कृशम् ॥ १४ ॥
कटिदण्डाग्रयोर्वक्रशिखा कार्या गुणाङ्गुला ।
सार्धाङ्गुलं तु तत्तारं सुवृत्तं तत्समं घनम् ॥ १५ ॥
स्थानकं सकलं चेत्तु ऊरुदीर्घोर्ध्वदेशतः ।
अष्टाङ्गुलं समारोप्य ऊरुशूलायतं भवेत् ॥ १६ ॥
आसीने सकले चोरुदीर्घादूर्ध्वेऽष्टमात्रकम् ।
ऊरुमूले तु सुषिरं कृत्वा तु कटिदण्डके ॥ १७ ॥
शिखायान्तु समायोज्य बध्नीयात् यथाबलम् ।
जानुमानं तथा कृत्वा ऊरु जङ्घां द्वयोरपि ॥ १८ ॥
शिखां कृत्वा तयोर्मध्ये सम्यगारोपयेद् बुधः ।
गुणाङ्गुलं शिखा जानौ जङ्घा चोरुसमायता ॥ १९ ॥

ऊरुमध्ये त्रिभागैकमूरुशूलस्य विस्तृतम् ।
तस्याग्रं तन्निभागं स्याज्जाङ्घमूलस्य तत्समम् ॥ २० ॥
जङ्घामूलत्रिभागैकहीनं जङ्घाग्रविस्तृतम् ।
जान्वग्रे योजयेज्जङ्घामथवा स्थानके पुनः ॥ २१ ॥
सन्धिं विनाङ्घ्रिशूलं तु एक एव विधीयते ।
जङ्घादीर्घोपरिष्टात्तु तलशूलं तु रो(च ? प)येत् ॥ २२ ॥
त्रिधा पादतलायामं कृत्वा भागद्वयायतम् ।
तलाग्रविस्तृतस्यापि त्रिभ्यंशं विस्तृतं तथा ॥ २३ ॥
व्यासार्धं वाथ विस्तारं तन्मूलाद् द्व्यङ्गुले पुनः ।
कर्तव्यं सुषिरं तस्मिञ्जङ्घाग्रगशिखां न्यसेत् ॥ २४ ॥
बाहुशूलविशालं तु गुणाङ्गुलमुदाहृतम् ।
अग्रं तद्द्व्यङ्गुलं व्यासं प्रकोष्ठं चैव तत्समम् ॥ २५ ॥
मूलतारार्धमग्रस्य व्यासं कुर्यात् प्रकोष्ठयोः ।
बाहुप्रकोष्ठयोर्मध्ये कोर्परं जानुवद् भवेत् ॥ २६ ॥
द्व्यङ्गुलं तु शिखामानं योजयेत्तु दृढं यथा ।
पार्श्वयोर्वंशदण्डस्य पार्श्वदण्डं तु योजयेत् ॥ २७ ॥
कटिपक्षान्तरं दीर्घं तद्व्यासं तु गुणाङ्गुलम् ।
वंशदण्डसमं तीव्रमूर्ध्वाधस्ताच्छिखान्वितम् ॥ २८ ॥
गुणाङ्गुलान्तरे वंशपुच्छयोर्योजयेद् दृढम् ।
हस्तपादतलं श्रोत्रं ताम्रपट्टेन योजयेत् ॥ २९ ॥
आर्जवे त्वार्जवं शूलं वक्रबिम्बे तु कुञ्चितम् ।
देवानां शूलमेवं स्याद् देवीनां तु भिदा त्वियम् ॥ ३० ॥

१. 'क' ख. पाठः.

मध्योदरं त्रिधा भज्य एकांशं वंशविस्तृतम् ।
अष्टांशहीनमग्रस्य विशालं तत्सुवृत्तकम् ॥ ३१ ॥
बाहुपर्यन्तविस्ताराद् बाहुतत्पर्धवर्जितम् ।
पक्षदण्डायतं शेषं तस्यार्धं विस्तृतं भवेत् ॥ ३२ ॥
तदर्धं बहलं ख्यातं कटिदण्डं पुनस्तथा ।
कटितारे तु भूतांशे युगांशं तस्य दीर्घकम् ॥ ३३ ॥
शेषं प्रागिव कर्तव्यमासने तु विशेषतः ।
आसने वंशदण्डात्तु वस्वङ्गुलं तु योजयेत् ॥ ३४ ॥
युगांशं पृष्ठमानं तु शेषं गर्ते तु वेशनम् ।
जङ्घादण्डात्तु षण्मात्रं योजयेत् स्थानके बुधः ॥ ३५ ॥
गर्भगर्तप्रवेशार्थमुपशूलमथोच्यते ।
भित्तौ मध्यं समारभ्य पक्षदण्डपुरान्तकम् ॥ ३६ ॥
उपशूलायतं प्रोक्तमष्टाङ्गुलततं भवेत् ।
वेदाङ्गुलं तु तन्नीपं शूलयोग्यद्रुमे बुध! ॥ ३७ ॥
शूलव्याससमं मध्यच्छिद्रं तदङ्घ्रिशिखान्वितम् ।
भित्तिमध्यात्तु शूलस्य मूलं बद्ध्वा दृढं बुध! ॥ ३८ ॥
कटिदण्डं पक्षदण्डं धृत्वा वंशाख्यशूलकम् ।
छिद्रे दृढतरं मन्दं तत्पुरं कीलबन्धितम् ॥ ३९ ॥
उपशूलशिखान्तं च पक्षदण्डपुरं समम् ।
उपशूलशिखायां तु वंशाग्रे सुषिरं कुरु ॥ ४० ॥
लोहजं दारुजं वार्थे यथायुक्ति यथा दृढम् ।
बिम्बास्थि शूलमाख्यातं तस्मादुक्तं समाचरेत् ॥ ४१ ॥

---

१. 'अ तद् कीलं यथा' ख. ग. पाठः.

शूलस्य बिम्बवत् कृत्वा संस्कारान् गुरुरञ्जसा ।
जलाधिवासप्रभृतीन् प्रतिष्ठां कारयेद् बुधः ॥ ४२ ॥

इति शिल्परत्ने उत्तरभागे शूलस्थापनलक्षणं नाम
सप्तदशोऽध्यायः ॥

---

अथाष्टादशोऽध्यायः ।

अथ रज्जुबन्धनम् ।

एवं कृत्वा गृहीत्वाथ शूलं विधिपुरःसरम् ।
शुद्धिं कृत्वाधिवास्यात्र प्रतिष्ठां तु समाचरेत् ॥ १ ॥
गर्भे तु पीठिकां कृत्वा शिलयेष्टकयापि वा ।
तत्प्रतिष्ठावटे कृत्वा शिलामाधारसंज्ञिताम् ॥ २ ॥
षण्मात्रं स्थानके बेरे प्रतिष्ठावटयोर्द्वयोः ।
अगाधं व्यासमन्यंशं स्थानके सकले तथा ॥ ३ ॥
पीठमध्ये चतुर्मात्रागाधमेकावटं स्मृतम् ।
कृत्वाधारशिलायां तु रत्नन्यासं यथाविधि ॥ ४ ॥
आनीय देशिकः शूलं विधिवद् गर्भवेश्मनि ।
जङ्घाशूलकमूलौ व वंशशूलस्य मूलकम् (?) ॥ ५ ॥
तत्तदर्होवटे न्यस्य सुधया वाष्टबन्धतः ।
आचरेन्निश्चलं शूलं दृढीकृत्य यथाबलम् ॥ ६ ॥
अथवा पूर्ववद् गर्भन्यासं कृत्वा यथाविधि ।
गर्भस्योपरि शूलस्य प्रतिष्ठामेवमाचरेत् ॥ ७ ॥
अथ सन्धिषु सर्वेषु ताम्रपट्टैस्तु वेष्टयेत् ।
शूलेऽष्टबन्धमालिप्य कारयेद् रज्जुबन्धनम् ॥ ८ ॥

श्रीवेष्टकं चतुर्भागं कुन्दुरिष्कं गुणांशकम् ।
गुग्गुलुं पञ्चभागं तु गुलमेकांशमानकम् ॥ ९ ॥
सर्जारसं तु वस्वंशं गैरिकं तु गुणांशकम् ।
संयोज्य चूर्णयेत् सम्यङ् मृत्पात्रे निक्षिपेत् पुनः ॥ १० ॥
आसिच्य घृततैलाभ्यां मन्दाग्नौ पच्यतामिदम् ।
यदा क्षौद्रमिवायाति तदा शूले विलिम्पयेत् ॥ ११ ॥
अष्टबन्धमिदं ख्यातमिदं शिल्पविशारदैः ।
नालिकेरफले पक्वे तच्चर्मे तु जलोषिते ॥ १२ ॥
यत्नाद् गृहीत्वा तत्सारं सारादन्यं व्यपोह्य च ।
तत्सारैर्नाडयः सम्यक्कार्यास्तत्तत्प्रमाणतः ॥ १३ ॥
रज्जुवर्त्म तु नाभौ स्यान्मूलाधारात्त्रयोर्ध्वगाः ।
सुषुम्ना मध्यगा ख्याता पिङ्गला दक्षपार्श्वगा ॥ १४ ॥
इडा वै तस्य वामस्था प्रधाना नाडयस्त्विमे ।
द्विद्व्यङ्गुलपरीणाहयुतास्ता वै त्रिवर्तिकाः ॥ १५ ॥
तेषां नाडित्रयाणां तु योगं भ्रूमध्यमे भवेत् ।
तदधोविग्रहास्त्विष्टवंशदण्डपुराश्रिताः ॥ १६ ॥
भ्रूमध्यान्मूर्ध्निपर्यन्तं त्रिनाडी चैकवद् भवेत् ।
सा मूर्धानोपरिगता सप्तशाखाविभेदिता ॥ १७ ॥
गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ।
अलम्बुषा कुहूश्चैव शङ्खिनीत्यभिधानकाः ॥ १८ ॥
गान्धारी सर्वगात्रान्ता हस्तिजिह्वान्तरान्तका ।
पूषा दक्षिणकर्णान्ता वामकर्णा यशस्विनी ॥ १९ ॥

अलम्बुषा मेढ्रमूलान्ता गुदान्ता कुहू भवेत् ।
नाभिमध्यावसानं तु शङ्खिनीलम्बनं भवेत् ॥ २० ॥
तेष्वादौ तु चतुर्नाडी यवत्रयघनान्विता ।
शेषनाडीत्रियाणां तु (यवं ?) चतुर्यव(घनं) भवेत् ॥ २१ ॥
दक्षिणावर्तिताः सर्वे द्विवर्तैते प्रकीर्तिताः (?) ।
प्रधाननाडीत्रितयमूलं मेढ्रस्य मूलके ॥ २२ ॥
तन्नाडिमूलाद् भिन्नास्तु नाड्योऽष्टादश स्मृताः ।
विमला घोषणी पृथ्वी वाहिनी तेजसी तथा ॥ २३ ॥
वायसी गगनी चैव मदनी रोदनी तथा ।
रसवादी मृदङ्गी च स्रंसिनी च तथैव च ॥ २४ ॥
शब्दस्पृशाङ्गी पूर्णा च संहारी च सवारिणी ।
वाहिनी तामसी ख्याता मेढ्रमूलसमुद्भवाः ॥ २५ ॥
तासामाद्यास्तु नाड्यः षड् दक्षिणं पादमाश्रिताः ।
अन्तस्थाः षट् तथा वामपादमेव समाश्रिताः ॥ २६ ॥
अधोमुखगता विष्वक्छूलस्यास्य भवन्ति ताः ।
नलकाग्रे समावृत्य षण्णामग्रं तथैकवत् ॥ २७ ॥
सुषुम्नामूलमाश्रित्य शेषा वंशस्य पार्श्वतः ।
आरुह्य पक्षदण्डोर्ध्वं ततस्ते बाहुमूलगाः ॥ २८ ॥
गगनी मदिनी चैव रोदनी दक्षिणे करे ।
रसवादी मृदङ्गी च स्रंसिनी वामबाहुगा ॥ २९ ॥
बाहुमूलं समावृत्य तदग्रं त्वेकवद् भवेत् ।
तदग्रादष्टशाखाः स्युर्दक्षिणेऽदक्षिणे तथा ॥ ३० ॥

पात्रेषु मर्दयेत् सम्यग् दशाहादिक्रमेण तु ।
श्रीवेष्टं गुल्गुलुं चैव कुन्दुरिकं तथैव च ॥ १२ ॥
सर्जोरसं च तुल्यांशानेतान् संचूर्ण्य योजयेत् ।
मृत्कलांशं मृदौ तस्मिन् दधिना मर्दयेत् पुनः (?) ॥ १३ ॥
शुण्ठी च पिप्पली चैव मरिची रजनी तथा ।
समांशं चूर्णयेद् विद्वान् तच्चूर्णं तु मृदा सह ॥ १४ ॥
मृत्तिकाचतुर्विंशांशं योजयित्वा तु मर्दयेत् ।
मधुक्षीरघृतैरेवं मर्दयेच्च पुनस्तथा ॥ १५ ॥
कपित्थबिल्वनिर्यासचूर्णौ द्वौ समतां कुरु ।
मृदः पञ्चदशांशेन तच्चूर्णेन विमर्दयेत् ॥ १६ ॥
तैलेनासिच्य संमर्द्य पुनः कुङ्कुमचन्दनौ ।
हरितालकुष्ठकर्पूरागरुगोरोचनानि च ॥ १७ ॥
समं संचूर्ण्य मृत्स्नायां त्रिंशांशं योजयेत् पुनः ।
अतसीकाष्ठजस्नेहसंयुक्तं तु विमर्दयेत् ॥ १८ ॥
स्वर्णराजतचूर्णं च नदीसागरसम्भवम् ।
कुलीरावासवल्मीकहलस्थलसमुद्भवम् ॥ १९ ॥
सस्यमूलोक्षशृङ्गेभदन्तजामृत्तिकारजः ।
यथालाभं तु संगृह्य नानागन्धसमन्वितम् ॥ २० ॥
संयोज्याथ मधूकत्वक्कषायजलसंयुतैः ।
कपित्थबिल्वनिर्यासैः सम्मर्द्य दिनपञ्चकम् ॥ २१ ॥
नीत्वा पश्चान्नालिकेरफलपक्वत्वचां पुनः ।
सारमेकाङ्गुलायामं सार्धं वा द्व्यङ्गुलं तु वा ॥ २२ ॥

छित्वा तु मृच्चतुर्थांशं युक्त्वा सम्मर्दयेन्मुहुः ।
रज्ज्वावृतास्थिबाह्ये तु तन्मृदालेपयेत् पुनः ॥ २३ ॥
तस्मिञ्छुष्के रज्जुबन्धं ततो मृल्लेपनं पुनः ।
मृद्धनं चन्द्रनेत्राग्निमात्रं योग्यवशाद् भवेत् ॥ २४ ॥
एवं निरीक्ष्य कर्तव्यं मृल्लेपनमतः शनैः ।
तत्तदङ्गप्रदेशेषु शूलबाह्यगतं घनम् ॥ २५ ॥
चतुरंशैर्विभज्यात्र प्रथमांशावसानकम् ।
मृल्लेपं त(द)नूपं तत्तद्बाह्येंऽशं तु मिश्रकम् ॥ २६ ॥
तद्बा(हु ? ह्य)गतमेकांशं जाङ्गलाख्यमुदाहृतम् ।
तत्तद्देशमृदैनैव तत्तद्भागं समालिपेत् ॥ २७ ॥
कल्केन पूरयेच्छेषं कल्कनिर्माणमाचरेत् ।
अतिकृष्णतारनदीशर्करया समम्(?) ॥ २८ ॥
नदीवालुकमायोज्य सुसूक्ष्मं चूर्णयेद् बुधः ।
कपित्थनिर्यासजलैर्मर्दयित्वा विशोषयेत् ॥ २९ ॥
पुनः कार्पासतूलेन संयुक्तं परिवेष्टयेत् ।
शिलापृष्ठे पुनः शोषं कृत्वा पश्चात्तु पेषयेत् ॥ ३० ॥
त्रिवारं पेषयित्वैवं तेन शेषं प्रपूरयेत् ।
अङ्गोपाङ्गानि संपूर्य भूषावस्त्रादिकान्यपि ॥ ३१ ॥
कल्केनैव विधायात्र सम्यक् संशोषणे सति ।
त्रिफलोत्थकाथजलैः सम्यगालिप्य सर्वतः ॥ ३२ ॥
शुष्के तु स्वर्णपिष्टेन लेपं कृत्वा पुनः क्रमात् ।
चित्रोक्तमार्गमाश्रित्य वर्णलेपं च कारयेत् ॥ ३३ ॥

मुक्ताफलस्य चूर्णस्य पिष्टः स्यात् सितवर्णके ॥ ३३१/२ ॥

इति शिल्परत्ने उत्तरभागे मृल्लेपनविधिर्नाम
एकोनविंशोऽध्यायः ॥

## अथ विंशोऽध्यायः ।

### अथ देवीकुमारलक्षणम् ।

स्थानकानां तु देवानां देव्यः स्युः स्थानकास्तथा ।
आसीनास्त्वासिते देवे विपरीतं विपत्करम् ॥ १ ॥
देवस्य वामपार्श्वे तु देवी तत्पीठगा भवेत् ।
पीठान्तरगता वापि देवमालिङ्ग्य वा भवेत् ॥ २ ॥
देवस्य नासिकान्तं वा ललाटान्तमथापि वा ।
हन्वन्तं वा प्रकर्तव्यं देव्यायाममिहोदितम् ॥ ३ ॥
क्रीडापद्मं वामहस्ते कटिबन्धं तु वान्यतः ।
सर्वाभरणसंयुक्ता तत्तद्युक्तविभूषणैः ॥ ४ ॥
किञ्चिद्देवाश्रितं वक्त्रं प्रसन्नमधुरं भवेत् ।
देवीदेवेशयोर्मध्ये कुमारं स्थापयेत्तु वा ॥ ५ ॥
हिक्कान्तं वा स्तनान्तं वा तयोर्मध्येऽष्टभाजिते ।
एकैकांशकहीनेन नवधा तुङ्गमाचरेत् ॥ ६ ॥
देवीबिम्बोच्चमानेन कुमारप्रतिमोन्नतम् ॥ ६१/२ ॥

इति शिल्परत्ने उत्तरभागे देवीकुमारलक्षणं नाम
विंशोऽध्यायः ॥

## अथैकविंशोऽध्यायः ।

### अथ वाहलक्षणम्—तत्र पूर्वं वृषलक्षणम् ।

तुङ्गे पञ्चदशांशे तु एकांशं त्वङ्गुलं भवेत् ।
चत्वारिंशाङ्गुलायामं मुखात् पृष्ठावसानकम् ॥ १ ॥
मूर्तेस्त्वध उपर्यन्तं धर्ममात्रमुदाहृतम् ।
तस्माद् ग्रीवोच्चमष्टांशमुरोन्तं षोडशाङ्गुलम् ॥ २ ॥
ऊरुदीर्घं तु षण्मात्रं जानुमानं द्विमात्रकम् ।
जङ्घामानं षडंशं स्यात् खुरमानं द्विमात्रकम् ॥ ३ ॥
शृङ्गान्तरं तु वस्वंशं शृङ्गोच्चं चतुरङ्गुलम् ।
शृङ्गमूलविशालं तु चतुरङ्गुलमेव च ॥ ४ ॥
तदग्रव्यासमर्धांशं मूलादग्रं क्रमात् कृशम् ।
किञ्चिद् वक्रसमायुक्तौ शृङ्गावभ्यन्तरे क्रमात् ॥ ५ ॥
ललाटतारं नन्दांशं मुखव्यासं शरांशकम् ।
घनं तु तत्समं ख्यातं नेत्रायं द्व्यङ्गुलं भवेत् ॥ ६ ॥
अध्यर्धाङ्गुलमुत्सेधं शफराकृति कारयेत् ।
नेत्रमध्यान्मुखायाममष्टाङ्गुलमुदाहृतम् ॥ ७ ॥
तस्माद् वै पृष्ठग्रीवान्तं षण्मात्रं परिकीर्तितम् ।
नेत्रमध्याल्ललाटोच्चं वेदमात्रमुदाहृतम् ॥ ८ ॥
नेत्रात् कर्णान्तरं तद्वत् कर्णायामं शरांशकम् ।
कर्णमूलविशालं तु द्विमात्रमिति कथ्यते ॥ ९ ॥
मध्यव्यासं चतुर्मात्रमग्रमङ्गुलविस्तृतम् ।
घनमर्धाङ्गुलं ख्यातं गण्डं तत्सममुच्यते ॥ १० ॥

अङ्गुलं नासिकादीर्घं* ++ ++ + + ++॥ १०½॥

अथाश्वलक्षणम्।

मुखं तालत्रयं प्रोक्तमायामेन तुरङ्गमे ।
तन्मध्यवर्तिनो वक्ष्ये प्रदेशान्मात्रया मितान् ॥ १॥
वर्तुलं मस्तकं कार्यं षडङ्गुलमितं पुनः ।
त्र्यङ्गुलं कर्णमूलान्तमुत्सेधेन व्यवस्थितम् ॥ २ ॥
कर्णमूलात्तथा कर्णौ कार्योवष्टाङ्गुलायतौ ।
ना(ग)वल्लीदलप्रख्यौ चतुरङ्गुलविस्तृतौ ॥ ३ ॥
कर्णमूलस्य नेत्रस्य मध्यं कार्यं नवाङ्गुलम् ।
नेत्रे गोलद्वयायामे सार्धद्व्यङ्गुलविस्तृते ॥ ४ ॥
भ्रुवौ द्व्यङ्गुलविस्तारे षडङ्गुलसमायते ।
भ्रुवोर्मध्यप्रदेशस्तु द्वादशाङ्गुलसम्मितः ॥ ५ ॥
षडङ्गुलं भवेत् फालं केशान्ते मध्यदेशतः ।
अष्टाङ्गुलं ततश्चाधो द्वादशाङ्गुलविस्तृतम् ॥ ६ ॥
एकतालो भवेद् दैर्घ्यं ललाटस्य प्रमाणतः ।
नयनाद् गण्डविस्तारः षोडशाङ्गुल इष्यते ॥ ७ ॥
नासावंशस्य दैर्घ्यं स्यात् षोडशाङ्गुलमिष्यते ।
विस्तारस्त्र्यङ्गुलः प्रोक्तो नासिका चतुरङ्गुला ॥ ८ ॥
नासापुटस्य विस्तारो द्व्यङ्गुलः परिकीर्तितः ।
पुटयोरन्तरं प्रोक्तमूर्ध्वभागे षडङ्गुलम् ॥ ९ ॥

---

* इत ऊर्ध्वं क-ख-मातृकयोः सप्ताष्टश्लोकलेखनपर्याप्तं तालपत्रमलेखं दृश्यते ।

चतुर्मात्रमधोभागे तत्र लेखात्रयं भवेत् ।
तस्याधः(प्रौढ? प्रोथ)देशः स्याच्चतुरङ्गुलसम्मितः ॥ २० ॥
चतुरङ्गुलविस्तारः पीनत्वं चतुरङ्गुलम् ।
मुखराजे(:) पुटस्यापि मध्यं स्याच्चतुरङ्गुलम् ॥ २१ ॥
मुखरेखाबहिर्भागे हनुः स्याच्चतुरङ्गुलः ।
चिबुकं तत्र कर्तव्यं पञ्चाङ्गुलमितं बुधैः ॥ २२ ॥
(प्रौढा? प्रोथा)च्च सृक्कपर्यन्तमास्यरेखा स्वराङ्गुला ।
मस्तकात् काकसां यावच्चतुस्तालमितं भवेत् ॥ २३ ॥
स्यात् केसरस्य विस्तारः शीर्षदेशेऽङ्गुलत्रयम् ।
चतुरङ्गुलं भवेन्मध्ये प्रान्ते मात्रमितो भवेत् ॥ २४ ॥
कृत्तकेसरकः स्कन्धः कर्तव्यः काकसावधि ।
काकसायां तथा कार्याः केसरा दैर्घ्यशालिनः ॥ २५ ॥
मस्तके च तथा केशा द्वादशाङ्गुलदैर्घ्यकाः ।
तरङ्गिता घनाः स्निग्धाः श्लक्ष्णाः कार्या मनोहराः ॥
नि(गपा? गाला)दंसपर्यन्तं ग्रीवा तालद्वयायता ।
अङ्गुलत्रयविस्तारा कार्या निखिलघोटके ॥ २७ ॥
स्कन्धदेशपरीणाहः षट्तालः साङ्गुलत्रयः ।
स्कन्धमध्यपरीणाहश्चतुष्पञ्चदशाङ्गुलः ॥ २८ ॥
ग्रीवासन्धिपरीणाहस्त्रितालश्च नवाङ्गुलः ।
वक्षोदेशस्य विस्तारो द्वादशाङ्गुलसम्मितः ॥ २९ ॥
अष्टादशाङ्गुलं दैर्घ्यं वक्षोदेशस्य कल्पितम् ।
वक्षःकाकसयोर्मध्यं द्विचत्वारिंशदङ्गुलम् ॥ ३० ॥

तथा चरणयोर्दैर्घ्यं द्विचत्वारिंशदङ्गुलम् ।
बाहु(दीर्घं ? दैर्घ्यं) भवेत् त्रयं प्रोक्तं पञ्चदशाङ्गुलम् ॥ ३१॥
बाहुमूलपरीणाहस्त्रिंशदङ्गुलसम्मितः ।
बाहुमध्यपरीणाहो वितस्तिद्वयवेष्टनात् ॥ ३२ ॥
बाहुप्रान्तपरीणाहो भवेदष्टादशाङ्गुलम् ।
(अष्टादशाङ्गुलो) जानुनाह एकोनविंशतिः॥ ३३ ॥
जङ्घानलकदैर्घ्यं स्यान्नाहो द्वादशमात्रकः ।
पलिहस्तस्य दैर्घ्यं तु षडङ्गुलमुदीरितम् ॥ ३४ ॥
पलिहस्तपरीणाहो भवेदष्टादशाङ्गुलः ।
कुष्ठिकाया भवेद् दैर्घ्यं षडङ्गुलमुदीरितम् ॥ ३५ ॥
कुष्ठिकायाः परीणाहो द्वादशाङ्गुलसम्मितः ।
खुरदैर्घ्यं समुद्दिष्टं षडङ्गुलमितं बुधैः ॥ ३६ ॥
भवेत् खुरपरीणाहो विंशत्यङ्गुलसम्मितः ।
पृष्ठप्रदेशदैर्घ्यं च चतुस्तालमुदाहृतम् ॥ ३७ ॥
कक्षदेशपरीणाहः शताङ्गुलमितो भवेत् ।
रन्ध्रस्थानपरीणाहः सप्ततालं स्वराङ्गुलम् ॥ ३८ ॥
रन्ध्रोपरन्ध्रयोर्मध्यं विंशत्यङ्गुलमायतम् ।
त्रिकस्थानस्य विस्तारस्त्रिगुणैः षोडशाङ्गुलैः ॥ ३९ ॥
(ज्वल ? जघ)नस्य तु विस्तारः षट्चत्वारिंशदङ्गुलः ।
सक्थिप्रान्तपरीणाहस्तालद्वितयसम्मितः ॥ ४० ॥
नवाङ्गुलायता रथ्(ला ? रा) ना(भे ? हे)न त्रिंशदङ्गुला ।
उपरन्ध्रात् समारभ्य कोशस्थानं तु तालतः ॥ ४१ ॥

चतुरङ्गुलायतः कोशो मुष्कावष्टाङ्गुलायतौ।
(स्व ? स्थू)रायां बुध्नभागस्थे जङ्घे च परिहस्तकौ ॥ ४२॥
रुष्टिके च खुरद्वन्द्वं कार्यं पौ(ल ? र)स्त्यपादवत्।
स्कन्धोऽङ्गुष्ठं च मध्यं च कृशं कार्यं प्रमाणतः ॥ ४३ ॥
ब(न्धा ? ङ्वा)यां महद् वक्षो जघनं च सुविस्तृतम्।
खुरपृष्ठान्तमालम्ब्य लाङ्गूलं चामराकृति ॥ ४४ ॥
यान्यनुक्तानि तान्यत्र कुर्यादङ्गानि युक्तितः।

अथ गजलक्षणम्।

गजस्य लक्षणं वक्ष्ये ज्ञानार्थं चित्रवेदिनाम् ॥ ४५ ॥
केशान्ततः समारभ्य यावत् स्यात् प्रतिमान(त ? क)म।
(सु ? मु)खं तत् कथितं तज्ज्ञैर्गजानां चित्रवेदिभिः ॥
ऊर्ध्वं केशान्ततः शीर्षं यावत् कुम्भसमुद्भवः।
शीर्षस्योपरि कुम्भौ द्वौ कर्तव्यौ कुचसन्निभौ ॥ ४७ ॥
वायुकुम्भस्य शीर्षस्य सन्धेरा प्रतिमानतः।
पिप्पलीदन्तवेष्टाभ्यां वेष्टितं मुखमीरितम् ॥ ४८ ॥
त्रिधा विभज्य तत्तालांस्त्रीन् भागान् परिकल्पयेत्।
त्रिधा विभज्य तद्वक्त्रं त्रितालं परिकल्पयेत् ॥ ४९ ॥
यावत्प्रमाणकं नागं कर्तुमिच्छति शिल्पिराट्।
चतुर्धा भाजिते तस्मिन् माने तालस्ततोऽङ्गुलम् ॥ ५० ॥
ऋजूनि लम्बसूत्राणि विधेयानि त्रयोदश।
एकैकतालभिन्नानि चित्रकर्मविशारदैः ॥ ५१ ॥
तत्तत्प्रमाणकान्येव तिर्यक्सूत्राणि कारयेत्।
एकादशैव तानि स्युः करिणां चित्रकर्मणि ॥ ५२ ॥

सविंशच्छतमुद्दिष्टाः (सूत्रा ? कोष्ठा)स्तत्सूत्रमध्यगाः ।
तत्र सूत्रेषु वक्ष्यामि प्रदेशान् नागसम्भवान् ॥ ५३ ॥
लम्बसूत्रं बहिष्ठं यत्तच्छिष्टं प्रतिमानके ।
निदा(ने ? नं) वायुकुम्भाग्रे दन्तमूले द्वितीयकम् ॥ ५४ ।
बिन्दुमध्ये मदच्छिद्रे सृक्कदेशे तृतीयकम् ।
कण्ठे च पिप्पलीदेशे कुम्भप्रान्ते तुरीयकम् ॥ ५५ ॥
आसने कर्णमध्ये च पुरोनखरपश्चिमे ।
द्वितीये नखरे लग्नं कार्यं सूत्रं तु पञ्चमम् ॥ ५६ ॥
अंसे कर्णतलस्याग्रे पश्चान्नखरपश्चिमे ।
सूत्रं षष्ठं प्रकुर्वीत सूत्रन्यासविशारदः ॥ ५७ ॥
मध्यदेशे प्रयुञ्जीत लम्बसूत्रचतुष्टयम् ।
सूत्राणां दशकं चैवं कथितं सूत्रवेदिभिः ॥ ५८ ॥
पेचकं पाचरांजितं (?) पाश्चात्यनखमध्यगम् ।
एकादशं भवेत् सूत्रं द्वादशं जघनस्पृशम् ॥ ५९ ॥
त्रयोदशं बहिष्ठं तु पुच्छमूले सुघट्टितम् ।
मस्तके वंशपृष्ठे च तिर्यक्सूत्रमथादिमम् ॥ ६० ॥
वायुकुम्भस्य शीर्षस्य सन्धौ पिप्पलिदेशतः ।
पेचके च विधातव्यं सूत्रमत्र द्वितीयकम् ॥ ६१ ॥
वायुकुम्भस्य मध्ये च नेत्रकर्णदलाग्रतः ।
पेचकस्याप्यधोभागे सूत्रं कार्यं तृतीयकम् ॥ ६२ ॥
मुखमध्ये सृक्कदेशे पुच्छमध्यसुसङ्गतम् ।
चतुर्थं कल्पयेत् सूत्रं चित्रकल्पनकोविदः ॥ ६३ ॥

तदधः पञ्चमं सूत्रं षष्ठं तु जठरान्ततः ।
सप्तमं बाहुमध्ये स्यादष्टमं जानुमध्यगम् ॥ ६४ ॥
जङ्घामध्ये च नवमं दशमं गुल्फ(तो ? को)र्ध्वतः ।
एकादशं तु पादानां तलस्पृष्टं विधीयते ॥ ६५ ॥
मुखस्य त्रिगुणं दैर्घ्यं कण्ठात् पुच्छावसानकम् ।
जठरेण समं गात्रं कलाहीनं तु वा भवेत् ॥ ६६ ॥
गात्रतुङ्गसमं पादं पुच्छमागुल्फलम्बितम् ।
पुच्छमूलपरीणाहं तालमात्रं निरूपितम् ॥ ६७ ॥
तदर्धमग्रं कर्तव्यं कृशाग्रं वर्तुलाकृति ।
तदग्रस्योभये पार्श्वे स्थूलरोमाणि कारयेत् ॥ ६८ ॥
श्रोत्रकुम्भाक्षदन्तोष्ठहस्तादीनि विशेषतः ।
विघ्नेशप्रोक्तमालोच्य कारयेत् सुमनोहरम् ॥ ६९ ॥
एवमन्यानि वाहानि तत्तद्देवोचितान्यपि ।
युक्त्या सम्यक् प्रकुर्वीत तत्तच्छास्त्रानुसारतः ॥ ७०½ ॥

इति शिल्परत्ने उत्तरभागे वाहनलक्षणं नाम
एकविंशोऽध्यायः ॥

## अथ द्वाविंशोऽध्यायः ।

**अथ ध्यानं — तत्र पूर्वं शैवे सुखासनमूर्तिः ।**

आर्जवं राजराजाभं भद्रपीठोपरि स्थितम् ।
वामाङ्घ्रिं शाययेत् पीठे दक्षिणाङ्घ्रिं तु लम्बयेत् ॥ १ ॥
जागतं(?) तु सुखासीनं प्रवालसदृशप्रभम् ।
त्रिनेत्रं तु प्रसन्नास्यं सम्पन्नं राजसैर्गुणैः ॥ २ ॥

व्याघ्राजिनवरोपेतं दुकूलवसनान्वितम् ।
दक्षिणे परशुं वामे कृष्णां हस्ते समुद्धृतम् ॥ ३ ॥
अभयं दक्षिणे वामे कटकं सिंहकर्णवत् ।
दक्षिणे मकराख्यं वा कुण्डलं सिंहमेव वा ॥ ४ ॥
पत्रकुण्डलमन्यत्र वामकर्णे विशेषतः ।
अथवा कर्णयुगले वृत्तकुण्डलकं न्यसेत् ॥ ५ ॥
जटामकुटसंयुक्तं नानाभरणभूषितम् ।
यज्ञोपवीतसंयुक्तं सर्पराट्कङ्कणान्वितम् ॥ ६ ॥
एवं सुखासनं प्रोक्तं राजराष्ट्रसुखावहम् ।

अथ सोमास्कन्देश्वरः ।

अथ वक्ष्ये विशेषेण सोमास्कन्देश्वरं वरम् ॥ ७ ॥
सुखासनं यथा प्रोक्तं तथा देवो विधीयते ।
देवस्य वामपार्श्वे तु पार्वती च सहासने ॥ ८ ॥
शाययेद् दक्षिणं पादं वामपादं प्रलम्बयेत् ।
वरदं वामहस्ते तु दक्षिणे चोत्पलं करे ॥ ९ ॥
दूर्वाश्यामनिभा देवी सर्वाभरणभूषिता ।
रक्ताम्बरधरा हा[१]रकिरीटमकुटान्विता ॥ १० ॥
वामोरुवाह्ये पीठे तु वामहस्ततलं न्यसेत् ।
प्रह्वदुत्पलसंयुक्तमन्यमेवं[२] करोतु वा ॥ ११ ॥
देवीदेवेशयोर्मध्ये स्थापयेत् स्कन्दमूर्तिनम् ।
केशान्ते वा(पि ? चि)कोपेतैकरण्डमकुटान्वितम् ॥ १२ ॥

१. 'रि', २. 'व', ३. 'तम' घ. पाठः.

उभयोर्हस्तयोः पुष्पं वामे वरदमेव वा ।
कटकं वाथ तद्धस्ते सिंहकर्णमथापि वा ॥ १३ ॥
अथवा पुस्तकं दक्षहस्ते वामे पुरोक्तवत् ।
कटिसूत्रयुतं नग्नं बाहुभूषणभूषितम् ॥ १४ ॥
आसीनं वा स्थितं वाथ नृत्तं वा स्कन्दमाचरेत् ।
नृत्तं चेत् फलवद्वामहस्तमन्यत्र सूचिकम् ॥ १५ ॥
अथवा वामहस्तं तु फलं त्यक्त्वा प्रसारयेत् ।
वक्ष्यमाणविधानेन स्कन्दं नृत्तं समाचरेत् ॥ १६ ॥

अथ चन्द्रशेखरः ।

केवलं गौरिसहितमालिङ्गं च त्रिधा भवेत् ।
केवलं समपादं तु स्थानकं परिकल्पयेत् ॥ १७ ॥
अभयं दक्षिणं हस्तं वरदं वाममुच्यते ।
हरिणीं वामहस्ते तु टङ्कं वै दक्षिणे करे ॥ १८ ॥
जटामकुटसंयुक्तं दक्षिणेऽर्धेन्दुशेखरम् ।
वामेन्दुशेखरं वाथ प्रवालसदृशप्रभम् ॥ १९ ॥
त्रिनेत्रं सौम्यवदनं सर्वाभरणभूषितम् ।
पीताम्बरधरं देवं बस्राग्रा नलकान्तगौ ॥ २० ॥
उभयोः पार्श्वयोरेव मध्यतश्चोरुमध्यगम् ।
केवलं त्वेवमाख्यातं वामे गौरीसमन्वितम् ॥ २१ ॥
भिन्नपीठेऽविशेषेण तद् गौरीसहितं विदुः ।
देवो वरदहस्तेन देवीं तत्पार्श्वमाश्रिताम् ॥ २२ ॥
स्त(न)नाभ्यन्तरे वामपार्श्वमालिङ्गनं कुरु ।
पार्श्वसूत्रात् परे वामबाहुमालिङ्गनं तु वा ॥ २३ ॥

देवीदक्षिणहस्तेन शम्भोर्दक्षिणपार्श्वतः ।
कटिसूत्रोपरि तथा वामे पुष्पधृता करे ॥ २४ ॥

अथवा प्राग्वदेवेशो देवी रक्तोत्पलान्विता ।
करे तु दक्षिणे वामहस्तमत्र प्रलम्बयेत् ॥ २५ ॥

एवमालिङ्गमूर्तिं तु त्रिधा मार्गेण कल्पयेत् ।
एवं पञ्चविधं प्रोक्तं चन्द्रशेखरमूर्तिनम् ॥ २६ ॥

अथ वृषारूढमूर्तिः ।

दक्षिणं सुस्थितं वामपादं तु कुञ्चितम् ।
वृषस्य मस्तकोर्ध्वे तु न्यसेद् वै वामकोर्परम् ॥ २७ ॥

तस्य दक्षिणहस्तं तु वक्रदण्डमुदाहृतम् ।
कनिष्ठाङ्गुलिपरीणाहमग्रे वक्रत्रयान्वितम् ॥ २८ ॥

लोहजं दारुजं वापि वक्रदण्डं प्रकीर्तितम् ।
परहस्तद्वयोश्चैव टङ्कं कृष्णमृगं न्यसेत् ॥ २९ ॥

जटामकुटयुक्तं वा जटाभारं तु लम्बितम् ।
जटाबन्धशिरो वापि कर्तुरिच्छानुसारतः ॥ ३० ॥

सर्वाभरणसंयुक्तं रक्ताभं रक्तवाससम् ।
वामपार्श्वे तु वा देवी दक्षिणे वा विशेषतः ॥ ३१ ॥

सुस्थितं दक्षिणं पादं वामपादं तु कुञ्चितम् ।
उत्पलं दक्षिणे हस्ते वामहस्तं प्रलम्बितम् ॥ ३२ ॥

अथ नृत्तम् ।

नृत्तमष्टशतविधं तत्रादौ नव कथ्यते ।
भानुरुद्रदशांशं वा तुङ्गं नृत्तनतं भवेत् ॥ ३३ ॥

हिक्कासमं समुन्नम्य दक्षहस्ताङ्गुलाग्रकम् ।
तद्धस्ततलमध्ये वा मध्यमाङ्गुलिकाग्रके ॥ ३४ ॥
तन्मध्यपर्वगं वाथ वह्निपात्रगतं तु वा ।
पात्रं विनाथवा कुर्यादपरे डमरुं तथा ॥ ३५ ॥
दक्षिणे त्वन्यहस्ते स्यादभयं पूर्वमुक्तवत् ।
अभये कोष्ठमध्ये तु भुजङ्गवलयं न्यसेत् ॥ ३६ ॥
डोलायमानं तद् वामहस्तं कुर्याद् यथोचितम् ।
स्थिताङ्घ्रिजानोर्वामाङ्घ्रिजानुनीप्रं कलाङ्गुलम् ॥ ३७ ॥
सुविकीर्य जटाभारं नानानागविचित्रितम् ।
करोटिकाभिर्धुत्तूरकुसुमैश्च भुजङ्गमैः ॥ ३८ ॥
भूषितं मकुटं कुर्याद् दक्षिणेऽर्धेन्दुशेखरम् ।
सिन्दूरालंकृतोत्तंसमक्षमालावलम्बितम् ॥ ३९ ॥
भस्मोद्धूलितदिव्याङ्गं किंचित् प्रहसिताननम् ।
यज्ञोपवीतादियुतं व्याघ्रचर्माम्बरान्वितम् ॥ ४० ॥
दक्षिणं कुञ्चितं पादमपस्मारोपरि स्थितम् ।
चतुस्तालेन कर्तव्यमपस्मारं प्रमाणतः ॥ ४१ ॥
शम्भोः सव्यगतं तस्य शिरः कुर्यादधोमुखम् ।
पादौ विकीर्णहस्ताभ्यां व्यालीलीलामुदान्वितम् ॥ ४२ ॥
व्यालं वै वामहस्ते वा दक्षिणं मुद्रयान्वितम् ।
सस्यश्यामनिभं कुर्यादपस्मारं विशेषतः ॥ ४३ ॥
पद्मपीठमधः कुर्यात् कलाङ्गुलसमुच्छ्रयम् ।
तच्चतुर्गुणविस्तारं प्रभामण्डलसंयुतम् ॥ ४४ ॥

रविमण्डलवृत्तं तु प्रभामण्डलमत्र तु ।
तत्र वामेऽप्युमादेवीं प्रागुक्तविधिना कुरु ॥ ४५ ॥
एतत् स्यात् प्रथमं नृत्तं सर्वलोकहितावहम् ।
तदेव दक्षिणे पार्श्वे जटाग्रे जाह्नवी भवेत् ॥ ४६ ॥
शम्भोरर्चाङ्गुलेनैव षोडशाङ्गुलमुन्नता ।
स्त्रीमानोत्तुङ्गसम्पूर्णा हृदयेऽञ्जलिसंयुता ॥ ४७ ॥
एवं जाह्नविसंयुक्तं नृत्तं यत्तद् द्वितीयकम् ।
तदेव वामपादं तदपस्मारोपरि स्थितम् ॥ ४८ ॥
उद्धृतं दक्षिणं पादं तृतीयेऽन्य(द् य)थापुरम् ।
अनुकीर्णजटाभारं जटामकुटमण्डितम् ॥ ४९ ॥
जटामण्डलयुक्तं वा चतुर्थेऽन्यद् यथादिमम् ।
उष्णीषोर्ध्वैकमात्रान्तं सव्यपादं समुद्धरेत् ॥ ५० ॥
सवक्रं वामपादं तदपस्मारोपरि स्थितम् ।
उपभुजाष्टकसंयुक्तमेतत् पञ्चममुच्यते ॥ ५१ ॥
अभयं शूलपाशौ च डमरुं दक्षिणे करे ।
कपालं चाग्निपात्रं च तालि + ण्ढकरोपमम् ॥ ५२ ॥
दोर्भिः षडङ्गसंयुक्तं वामे गौरीसमायुतम् ।
स्कन्दो भयात् कराभ्यां तु मातुः स्तनहृदोदरात् ॥ ५३ ॥
निपीड्य वा कराभ्यां तु वामभागोद्धृताञ्जलिम् ।
एवं गौरी गिरीशस्येशं भीत्यातिस्नेहविस्मयात् ॥ ५४ ॥
अभयं डमरुं चैव वज्रं शूलं तथैव च ।
पाशं टङ्कं तथा दण्डं नागं वै दक्षिणे करे ॥ ५५ ॥

---

१. 'घटं तु' क. पाठः.

सजानुगकरं डोलं वामं गजकरोपमम् ।
अनलं मिथुनं चैव वलयं केतुमेव च ॥ ५६ ॥
घण्टां चैव कपालं च वामपार्श्वेऽष्टहस्तके ।
पादौ पञ्चमनृत्तस्य विधिवत् तद् विधीयते ॥ ५७ ॥
त्रिनेत्रं चाष्टहस्तं च सुविकीर्णजटान्वितम् ।
कुञ्चितं वामपादं तदपस्मारोपरि स्थितम् ॥ ५८ ॥
उद्धृतं दक्षिणं पादमङ्गुष्ठाब्जाग्रसीमकम् ।
अभयं शूलपाशौ च डमरुं दक्षिणे करे ॥ ५९ ॥
कपालं चाग्निपात्रं च तथा विस्मयहस्तकम् ।
गजहस्तोपमं हस्तं सव्यासव्यानुगं तु वा ॥ ६० ॥
वामे गौरीसमायुक्तं सप्तमं नृत्तमेव हि ।
तदेव षड्भुजोपेतमभयं डमरुं तथा ॥ ६१ ॥
शूलं दक्षिणपार्श्वे तु कपालं विस्मयं तथा ।
गजहस्तोपमं वामे पार्श्वे स्याद् यत् तदष्टमम् ॥ ६२ ॥
पञ्चमस्य च षष्ठस्य नृत्तस्याक्षिद्वयं विदुः ।
तच्छेषाणां तु नृत्तानां नेत्रत्रयमुदाहृतम् ॥ ६३ ॥
चतुर्भुजं त्रिनेत्रं च जडामण्डलसंयुतम् ।
अभयं डमरुं सव्ये दक्षेऽग्निं गजहस्तवत् ॥ ६४ ॥
अपस्मारं विना पीठे वामाङ्घ्रिं कुञ्चितं स्थितम् ।
ततः पुरस्थिता पीठे सव्यपादकनिष्ठिका ॥ ६५ ॥
तत्पादं कुञ्चितं युक्त्या नवमं नृत्तमाचरेत् ।
गङ्गाधरमहं वक्ष्ये सर्वलोकसुखावहम् ॥ ६६ ॥

सुस्थितं दक्षिणं पादं वामपादं तु कुञ्चितम् ।
विश्लिष्यं स्याञ्जटाबन्धं वामे त्वीषन्नताननम् ॥ ६७ ॥
दक्षिणे पूर्वहस्ते तु वरदं [1]दक्षिणेन तु ।
देवीमुखाश्रितेनैव देवीमालिङ्गय कारयेत् ॥ ६८ ॥
दक्षिणापरहस्तेन उद्धृत्योष्णीषसीमकम् ।
स्पृशेञ्जटागतां गङ्गां वामेन मृगमुद्धरेत् ॥ ६९ ॥
देवस्य वामपार्श्वे तु देवी विरहिताननना।
सुस्थितं वामपादं तु कुञ्चितं दक्षिणं भवेत् ॥ ७० ॥
प्रसार्य दक्षिणं हस्तं वामहस्तं तु पुष्पधृक् ।
सर्वाभरणसंयुक्तौ सर्वालङ्कारसंयुतौ ॥ ७१ ॥
भगीरथं दक्षिणे तु पार्श्वे मुनिवरान्वितम् ।
अथाष्टधा प्रवक्ष्यामि त्रिपुरान्तकमूर्तिनम् ॥ ७२ ॥
दक्षिणं सुस्थितं पादं वामपादं तु कुञ्चितम् ।
दक्षिणे पूर्वहस्तं तु नाभिसूत्रावसानके ॥ ७३ ॥
सिंहकर्णं तु तद्धस्तं बाणमध्यनिपीडितम् ।
वामहस्ते धनुर्धृत्वा कक्षान्तोर्ध्वं समुद्धृते ॥ ७४ ॥
कर्तरी परहस्तौ द्वौ टङ्ककृष्णमृगान्वितौ ।
टङ्कं तु दक्षिणे वामे कृष्णसारङ्गमेव हि ॥ ७५ ॥
जटामकुटसंयुक्तं सर्वाभरणभूषितम् ।
प्रवालसदृशप्रख्यं वामे गौरीसमायुतम् ॥ ७६ ॥
इदं प्रथममाख्यातं द्वितीयं तु ततः परम् ।
तदेव वामपादं तदपस्मारोपरि स्थितम् ॥ ७७ ॥

१. 'मुच्यते ॥' क. ख. पाठः.

शेषं प्रथमतुल्यं हि तृतीयमथ वक्ष्यते ।
सुस्थितं वामपादं तु दक्षिणं कुञ्चितं भवेत् ॥ ७८ ॥
शेषं प्रागिव कर्तव्यं चतुर्थं तु ततः परम् ।
तदेव वामपादं तदपस्मारोपरि स्थितम् ॥ ७९ ॥
तदेव पूर्वहस्तौ द्वौ कटकौ हृदि सीमगौ ।
वामं दक्षिणकं हस्तं क्रमादूर्ध्वमधोमुखम् ॥ ८० ॥
बाणमूलधृतं सव्यमन्यं बाणाननोद्धृतम् ।
परे दक्षिणके टङ्कं धनुषं वामहस्तके ॥ ८१ ॥
तद्धस्ते तु मृगं वाथ वामे गौरीसमायुतम् ।
अपस्मारं विना कार्यं पञ्चमं समुदाहृतम् ॥ ८२ ॥
षष्ठमिष्टं चे बाणं च पाशं खड्गं च दक्षिणे ।
धनुषं विस्मयं खेटं कुक्कुटं वामहस्तके ॥ ८३ ॥
यथाशोभं तथा कुर्याद् वामे गौरीसमायुतम् ।
सप्तमे दक्षिणे बाणं चक्रं शूलं ततः परम् ॥ ८४ ॥
टङ्कं वज्रं तथा वामे धनुषं सूचिविस्मये ।
+ + + + + + खेटानि सर्वं पूर्ववदाचरेत् ॥ ८५ ॥
एवमेवाष्टमं कुर्याद् वसुधोपरि विन्यसेत् ।
दक्षिणाङ्घ्रेस्तथा जानु वामपादतलं पुनः ॥ ८६ ॥
पुरःस्थितरथस्योर्ध्वे विन्यसेत्तु यथोचितम् ।
रथं तु मुकुलोपेतं मुकुलं कज्जनावृतम् (?) ॥ ८७ ॥
मुकुलाभ्यन्तरे ब्रह्मा चतुर्वक्त्रश्चतुर्भुजः ।
तस्य दक्षिणहस्तौ द्वौ वेणुदण्डं कमण्डलुम् ॥ ८८ ॥

कुण्डिकां पद्मपाशं च वामहस्तद्वयोद्धृतम् ।
रथस्य मुकुलाधस्ताद् वृषभं श्वेतवर्णकम् ॥ ८९ ॥
अथ कल्याणमूर्तेस्तु लक्षणं सर्वमङ्गलम् ।
सुस्थितं वामपादं तु दक्षिणं कुञ्चितं भवेत् ॥ ९० ॥
दक्षिणः पूर्वहस्तस्तु गौरीदक्षिणहस्तधृक् ।
वरदं वामहस्तं तु परहस्तद्वये तथा ॥ ९१ ॥
दक्षिणे परशुं वामे तथा कृष्णमृगं परम् ।
जटामकुटसंयुक्तं सर्वाभरणसंयुतम् ॥ ९२ ॥
देहं प्रवालवर्णाभं देवेशस्य विशेषतः ।
तत्र श्यामनिभा देवी प्राग्वन्मानादिसंयुता ॥ ९३ ॥
उत्पलं वामहस्ते तु धृत्वा दक्षिणहस्तकम् ।
शम्भोर्हस्तेन संग्राह्यं लज्जाभरसमन्वितम् ॥ ९४ ॥
पार्वतीमनुगा श्रीर्भूः सर्वाभरणभूषिता ।
हस्ताभ्यां संस्पृशेदेवं गौरीमपि करद्वये ॥ ९५ ॥
देवाग्रे कारयेत् कुण्डे तत्र होमं प्रजापतिः ।
शम्भोर्वै स्तनसीमान्तं प्रजेशस्योदयं तथा ॥ ९६ ॥
चतुर्भुजं चतुर्वक्त्रं सर्वाभरणभूषितम् ।
प्रागग्रौ देविदेवेशौ देवी देवस्य दक्षिणे ॥ ९७ ॥
दक्षिणाभिमुखो विष्णुर्होमस्योत्तरदिक्स्थितः ।
शम्भोर्वै नाभिसीमान्तं श्रेष्ठं स्तनतलोन्नतम् ॥ ९८ ॥
कन्यसं तु तयोर्मध्ये पूर्ववत्तद्वया स्मृतम् ।
श्यामवर्णसमायुक्तं शङ्खचक्रौ परे करे ॥ ९९ ॥

१. 'धर्मवत' ख. पाठः.

हिरण्यकरकेणापः पूर्वहस्तद्वयेन तु ।
संगृह्य वरदे हस्ते दद्यादुदकपूर्वकम् ॥ १०० ॥
अष्टलोकेशविद्येशाः सिद्धयक्षगणादयः ।
ऋषयश्चैव गन्धर्वा मातरश्चान्यदेवताः ॥ १०१ ॥
तत्तच्छक्तिसमोपेता हृदयाञ्जलिसंयुताः ।
संभ्रान्तमनसोपेताः संवीक्ष्य परितः स्थिताः ॥ १०२ ॥
अर्धनारीश्वरं वक्ष्ये सुस्थितं दक्षिणाङ्घ्रिकम् ।
कुञ्चितं वामपादं तु सर्वाभरणभूषितम् ॥ १०३ ॥
वामार्धे पार्वतीरूपं दक्षिणार्धे महेश्वरम् ।
अभयं परशुं दक्षहस्ते वामगतं भुजम् ॥ १०४ ॥
वृषस्य मूर्ध्नि विन्यस्तकोर्परं चारु सुन्दरम् ।
पुष्पधृक्कटकं त्वन्यं चतुर्भुजमिदं स्मृतम् ॥ १०५ ॥
गजहामूर्तिनं वक्ष्ये सर्वाभरणभूषितम् ।
पाशं च गजचर्म च दक्षपार्श्वकरद्वये ॥ १०६ ॥
गजस्य शृङ्गं चर्म च वामपार्श्वे करद्वये ।
शूलं डमरुकं पाशं गजचर्म च दक्षिणे ॥ १०७ ॥
गजशृङ्गं कपालं च पाशं चर्म च वामतः ।
शंभोर्वामाङ्घ्र्यधस्तात्तु गजमस्तकमेव हि ॥ १०८ ॥
मकुटस्योपरिष्टात्तु गजपुच्छं प्रकल्पयेत् ।
पार्श्वयोर्गळपादं तु यथायुक्त्या तु कारयेत् ॥ १०९ ॥
प्रभामण्डलवच्छेषं गजचर्म प्रकल्पयेत् ।
व्याघ्रचर्माम्बरोपेतं दुकूलवसनान्वितम् ॥ ११० ॥

सर्वाभरणसंयुक्तमतिरक्तप्रभान्वितम् ।
सुस्थितं वामपादं तु गजवीरस्य मस्तके ॥ १११ ॥
उद्धृतं दक्षिणं पादं कक्षसूत्रान्तमाचरेत् ।
गौरी स्कन्दं समुद्धृत्य शम्भोर्वामे भयान्विता ॥ ११२ ॥
अथवा शूलखड्गौ च गजदन्तं च चर्म च ।
दक्षिणे वामतः कुर्यात् कपालं खेटकं पुनः ॥ ११३ ॥
घण्टा च गजचर्म च करैरिति + वामतः ।
अथ पाशुपतं वक्ष्ये चन्द्रशेखरवत् स्थितम् ॥ ११४ ॥
चतुर्भुजं त्रिनेत्रं चाप्यूर्ध्वकेशं महातनुम् ।
दक्षिणेऽभयकं शूलं कपालं वरदं परे ॥ ११५ ॥
प्रवालसदृशप्रख्यं सर्वाभरणभूषितम् ।
कङ्कालमूर्तिनं वक्ष्ये पादयोः पादुकान्वितम् ॥ ११६ ॥
सुस्थितं वामपादं तु गमनापेक्षयापरम् ।
पादमीषत् समुद्धृत्य करोत्यधिकसुन्दरम् ॥ ११७ ॥
शुद्धश्वेतनिभं चारु सर्वाभरणभूषितम् ।
रत्नकञ्चुकबद्धाङ्गं जटामकुटमण्डितम् ॥ ११८ ॥
धुर्धूरपुष्पं नागं च वामे दक्षेन्दुशेखरम् ।
किञ्चित्प्रकाशितान्तःस्थदशनांशुविराजितम् ॥ ११९ ॥
दक्षिणं हरिणीवक्त्रे व्यापितं सिंहकर्णवत् ।
वामहस्ते च दण्डं तु कङ्कालास्थि च धारयेत् ॥ १२० ॥
तदस्थ्याकृति निर्मांसं द्विपादं द्विकरान्वितम् ।
कृष्णश्यामनिभाकारमपाने दण्डवेशनम् ॥ १२१ ॥

दण्डे कङ्कालपादौ द्वौ रज्जुना बन्धयेद् बुधः ।
केतुदण्डेन नेत्राभ्यां निष्क्रान्तं रुधिरं तु वा ॥ १२२ ॥
एवं कङ्कालदण्डं तु वामस्कन्धोपरि न्यसेत् ।
बलिपात्रधृतं भूतं वामेऽग्रे गमनान्वितम् ॥ १२३ ॥
दक्षिणेऽन्नं तु तत्पार्श्वे निधाय कृतजायया ।
किञ्चित् प्रकाशितं योनिसंयुतानतवाससा ॥ १२४ ॥
सम्भ्रान्तमनसोपेतं जायाः सर्वास्त्वनेकशः ।
व्याघ्रचर्माम्बरोपेतं दुकूलवसनान्वितम् ॥ १२५ ॥
दक्षिणे कटिपार्श्वे तु क्षुरिकां चैव बन्धयेत् ।
क्षुरिका हैमसङ्काशा रूपबन्धसमन्विता ॥ १२६ ॥
यक्षकिन्नरसिद्धाद्यैः सेवितं पूजितं नुतम् ।
चामरैरर्कचन्द्राभ्यां वीजितं रत्नभूषितैः ॥ १२७ ॥
अण्डानां सुस्थितार्थं तु सर्वलोकोपकारकम् ।
कङ्कालमोचनार्थं तु (स) स्यात् कङ्कालकाभिधः ॥१२८॥
अथ वक्ष्ये हरिहरं सुस्थितं समपादकम् ।
दक्षिणे त्वभयं वामे कटकं तूरुसंयुतम् ।[1] १२९ ॥
परशुं दक्षिणे वामे शङ्खं तु परहस्तके ।
वाममर्द्धे हरिं कुर्याद्धरमन्यार्धमाचरेत् ॥ १३० ॥
क्रमात् श्यामं प्रवालाभमुभयोचितभूषणम् ।
दक्षिणेऽह्युग्रदृष्टिः स्याद् वामे शीतलनेत्रकम् ॥
किञ्चित् प्रकाशितोर्ध्वाक्षं दक्षिणार्धे ललाटके ।
शिरश्चक्रसमायुक्तं तस्य लक्षणमुच्यते ॥ १३२ ॥

१. 'काश्चैव', २. 'कू' क. पाठः.

रुद्राङ्गुलविशालं तु तन्नान्वंशैगतनम् (?) ।
सुवृत्तं चक्रवृत्तं तु पद्माकृतिरथापि वा ॥ १३३ ॥

शिरश्चक्रविशालस्य सप्तभागैकभागिकम् ।
शिरश्चक्रस्य नालस्य विस्तारं परिकीर्तितम् ॥ १३४ ॥

चक्रतारत्रिभागैकं चक्रादा शिरसोऽन्तरम् ।
अग्राङ्गुलाटपट्टस्य शिरश्चक्रस्य नालकम् ॥ १३५ ॥

गुणाङ्गुले तु कै(ट्यो ? टयू)र्ध्वे चक्रनालस्थितिर्भवेत् ।
चक्राद् गुणांशमालम्ब्य पुष्पमाला तु मध्यमात् ॥१३६॥

सर्वेषामपि देवानां देवीनामेवमाचरेत् ।
अथ भिक्षाटनं वक्ष्ये पादौ पादुकसंयुतौ ॥ १३७ ॥

सुस्थितं वामपादं तु गन्तुं दक्षिणमुद्धृतम् ।
सुविकीर्णजटाभारं जटामण्डलमेव वा ॥ १३८ ॥

विवृतबन्धजटं वाथ उपानद्रहितं तु वा ।
ललाटपट्टसंयुक्तं करोत्वर्धेन्दुशेखरम् ॥ १३९ ॥

सर्वाभरणसंयुक्तं कटिसूत्रविवर्जितम् ।
शुद्धश्वेतनिभं प्रोक्तं नानानागविभूषितम् ॥ १४० ॥

दक्षिणं पूर्वहस्तं तु मृगस्यास्यान्तिकं भवेत् ।
वामे तु पूर्वहस्तं तु सितवस्त्रोत्तरीयकम् ॥ १४१ ॥

श्वेतयज्ञोपवीतं तु कटौ नागेन वेष्टितम् ।
नीलकण्ठं त्रिपुण्ड्राढ्यं पद्मपीठोपरि स्थितम् ॥ १४२ ॥

१. 'शे', २. 'सं', ३. 'को' घ. पाठः.

कङ्कालमूर्तिवच्छेषं सर्वमत्र विशेषतः ।
चण्डेशानुग्रहं देवमुमास्कन्दवदाचरेत् ॥ १४३ ॥
वामे किञ्चिन्नतं त्वास्यं दक्षिणे त्वभयं विना ।
तद्धस्ते वरदं कार्यं वामे तु कटकं विना ॥ १४४ ॥
चण्डेशमूर्ध्नि विन्यस्य तद्धस्तं करुणान्वितम् ।
हृदयेऽञ्जलिसंयुक्तश्चण्डेशो भक्तिसंयुतः ॥ १४५ ॥
आसनाधः सुखासीनो भक्तिमान् स्वर्णसन्निभः ।
दक्षिणामूर्तिमीशानं कुर्याद् वटतरोरधः ॥ १४६ ॥
लम्बयेद् दक्षिणं पादं वामाङ्घ्रेर्नलकाग्रकम् ।
सममेवं विधातव्यं वामपादं तु शाययेत् ॥ १४७ ॥
दक्षिणे पूर्वहस्ते तु ज्ञानमुद्रां तु धारयेत् ।
दक्षिणे परहस्ते तु कारयेदक्षमालिकाम् ॥ १४८ ॥
वरदं वामहस्ते तु दण्डं वा परिकीर्तितम् ।
वामजानूपरिष्टात्तु दण्डश्चेत् कोर्परं न्यसेत् ॥ १४९ ॥
वामे परकरे तत्र वह्निं वा मृगमेव वा ।
विकीर्णमूर्धजं वापि जटामण्डलसंयुतम् ॥ १५० ॥
जटाभिर्बद्धमूर्तिं वा जटामकुटसंयुतम् ।
शुद्धस्फटिकसंकाशम् + + + + + + + + + ।
वामे धुर्धूरपुष्पं च नागश्च शिरसि स्मृतम् ॥ १५१ ॥
दक्षिणेन्दुकलायुक्तं सर्वाभरणभूषितम् ।
सितवस्त्रोत्तरीयं च सितयज्ञोपवीतिनम् ॥ १५२ ॥
व्याघ्रचर्माम्बरोपेतं त्रिनेत्रं क्लेशवर्जितम् ।
रुद्राक्षं कण्ठमालां च हृन्मालां च विधापयेत् ॥ १५३ ॥

हृदयाञ्जलिसंयुक्तं विकीर्णाङ्घ्रिद्वयं पुनः ।
अथ लिङ्गोद्भवं वक्ष्ये लिङ्गाकारस्य मध्यतः ॥ १७६ ॥
नलकात् पादस्य तलं लिङ्गे शूलसमायुतम् ।
चन्द्रशेखरवत् सर्वं कारयेत् सुन्दराकृतिम् ॥ १७७ ॥
ब्रह्मा तु हंसरूपेण ऊर्ध्वगो वामपार्श्वतः ।
विष्णुर्वराहरूपेण दक्षिणांशे त्वधोगतः ॥ १७८ ॥
हृदयेऽञ्जलिसंयुक्तौ रक्तश्यामनिभौ परम् ।
वीक्षमाणौ परं लिङ्गमिदं लिङ्गोद्भवं स्मृतम् ॥ १७९ ॥

अथ श्रीपञ्चाक्षरी —

बिभ्रद् दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः
सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मोत्तवासाः ।
ध्येयो मुक्तापरागामृतरसकलिताद्रिप्रभः पञ्चवक्त्र-
स्त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलातुङ्गमौलिः
॥ १८० ॥

[1]ईशानाह्वयमूर्ध्वदिग्वरमुखं वन्दामहे निर्मलं
पूर्वे तत्पुरुषं च कुङ्कुमनिभं याम्यं त्वघोरं हरम् ।
धामं मेरुजपाप्रसूनसदृशं यद्वामदेवं विदुः
सद्योजातमहाप्र(यं ? भं) च परमं गोक्षीरफेनप्रभम् ॥ १८१ ॥

अथ रुद्रः —

वन्दे बन्धुरहावभावललितं रक्तांशुकालेपनं
स्मेरास्यं चिबुकाग्रनासमरुणं माल्योल्लसत्कुन्तलम् ।

---

१. पद्यमेतद् ध-मातृकायां न दृश्यते ।

नानाविभ्रममीप्सितप्रणयिनं भावेन पाशाङ्कुशौ
खट्वाङ्गं च कपालमित्यनुगुणैर्दोर्भिर्दधानं हरम् ॥ १८२ ॥

**अथ प्रासादः —**

देवं नमामि शिरसा परशुत्रिशूल-
विद्याकपालपरिमण्डितबाहुदण्डम् ।
व्याघ्राजिनाम्बरधरं भसितावदात-
वेषोज्ज्वलं धृतजटाघटितेन्दुबिम्बम् ॥ १८३ ॥

**तद्भेदः —**

वन्दे त्रिशूलस्फटिकाक्षमाला-
विद्याप्रसादोद्यतबाहुमीशम् ।
सितोपवीतं भसितावदातं
कोटीरचूडोज्ज्वलचन्द्ररेखम् ॥ १८४ ॥

**मृत्युञ्जयः —**

शुभ्राम्भोजपुटेन्दुमण्डलगतं त्र्यक्षं त्रिशूलत्रयी-
टङ्काक्षाहितसूत्रसंयुतचतुर्बाहुं हिमाद्रिप्रभम् ।
मुद्रापञ्चकभूषितं त्रिनयनं ना(नो? गो)त्तरीयं शिवं
वन्दे व्याघ्रवराजिनाम्बरधरं कोटीरचन्द्रोज्ज्वलम् ॥ १८५ ॥

शूलाहीटङ्कघण्टासिसृणिकुलिशपाशाग्न्यभातीर्दधानं
दोर्भिः शीतांशुरेखाप्रतिघटितजटाभारमौलिं त्रिनेत्रम् ।
नानाकल्पाभिरामापघनमभिमतार्थप्रदं सुप्रसन्नं
पद्मस्थं पञ्चवक्त्रं स्फटिकमणिनिभं पार्वतीशं नमामि
[॥ १८६ ॥

**शैवमष्टाक्षरम् —**

वामाङ्कन्यस्तवामेतरकरकमलायास्तथा वामबाहु-
न्यस्तारक्तोत्पलायाः स्तनविधृतलसद्वामबाहुः प्रियायाः ।

सर्वाकल्पाभिरामो धृतपरशुमृगेषुः करैः काञ्चनाभो
ध्येयः पद्मासनस्थः स्मरललिततनुः सम्पदे पार्वतीशः
[॥ १८७॥

दक्षिणामूर्तिः[1]—
मुद्रां भद्रार्थदात्रीं सपरशुहरिणां बाहुभिर्बाहुमेकं
जान्वासक्तं दधानो भुजगवरसमाबद्धकक्ष्यो वटाधः ।
आसीनश्चन्द्रखण्डप्रतिघटितजटः क्षीरगौरस्त्रिनेत्रो
दद्यादाद्यैः शुकाद्यैर्मुनिभिरभिवृतो भावशुद्धिं भवो वः
[॥ १८८॥

अघोरः —
कालाभ्राभः कराग्रैः परशुडमरुकौ खड्गखेटौ च बाणे-
ष्वासौ शूलं कपालं दधदतिभयदो भीषणास्यस्त्रिनेत्रः ।
रक्ताकाराम्बराहिप्रवरघटितगात्रोऽरिनागग्रहादीन्
खादन्निष्टार्थदायी भवदनभिमतच्छित्तये स्यादघोरः
[॥ १८९॥

मृत्युञ्जयभेदः —
अथवामलकमलपुटान्तरितं शिशुवेषभूषणं रुद्रम् ।
ध्यात्वा जपाद् यथावत् कृतक्लृप्त्या मृत्युनाशनं दृष्टम्
[॥ १९०॥

चिन्तामणिः —
अहिशशधरगङ्गाबद्धतुङ्गात्तमौलि-
स्त्रिदशगणनताङ्घ्रि + + + स्त्रीविलासः ।
भुजगपरशुशूलान् खड्गवह्नी कपालं
शरमपि धनुषं[2] + विभ्रदव्यात्त्रिरं वः ॥ १९१ ॥

---

१. 'र्ति त्र्यनुष्टुप् । मु' क. ग. पाठः. २. 'धरिशो पि' क. पाठः.

[१]अथवा —

हावभावललिताधनारिकं भीषणार्धमथ वा महेश्वरम् ।
पाशसोत्पलकपालशूलिनं चिन्तयेज्जपविधौ विभूतये
[॥ १९२ ॥

अनुष्टुप् —

अच्छस्वच्छारविन्दस्थितिरुभयकरान्तैःस्थितं पूर्णकुम्भं
दोर्भ्यां वेदाक्षमाले निजकरकमलाभ्यां घटौ नित्यपूर्णौ ।
द्वाभ्यां तौ च स्रवन्तौ शिरसि शशिकलाबन्धुरे प्लावयन्तौ
देहं देवो दधानः प्रदिशतु विशदाकल्पजालः श्रियं वः
[॥ १९३ ॥

संवादम् —

धवलनलिनराजच्चन्द्रमध्ये निषण्णं
करविलसितपाशं साङ्कुशं साभयं च ।
सवरदममलेन्दुक्षीरगौरं त्रिनेत्रं
प्रणमत सुरवक्त्रं मङ्क्षु संवादयन्तम् ॥ १९४ ॥

शक्तिपञ्चाक्षरी —

मूले कल्पद्रुमस्य द्रुतकनकनिभं चारुपद्मासनस्थं
वामाङ्कारूढगौरीनिबिडकुचभराभोगगाढोपगूढम् ।
सर्वालङ्कारकान्तं वरपरशुमृगाभीष्टबाहुं त्रिनेत्रं
वन्दे बालेन्दुमौलिं[२] गुहगजवदनाभ्यामुपाश्लिष्टपार्श्वम्[३][४]
[॥ १९५ ॥

[५]अथवा —

वन्दे हरं वरदशूलकपालहस्तं
साभीतिमद्रिसुतयोज्ज्वलदेहकान्तिम् ।

१., ५. 'अथवेत्यवतारितं पद्यं घ-मातृकायां न दृश्यते. २. 'ङ्क', ३. 'खूडं गु', ४. 'गजवदनगुहाभ्या' घ. पाठः.

वामोरुपीठगतया निजवामहस्त-
न्यस्तारुणोत्पलयुजा परिरब्धदेहम् ॥ १९६ ॥

कालारिः —

वामेनोद्यत्तरुणहरिणं पाणिना वामभासा
बिभ्रद् बभ्रुद्युतिरपि परेणाकठोरं कुठारम् ।
वक्षोदेशे त्रिशिखशिखरेणात्र कृत्वान्तकान्तं
तिष्ठन्नीशो जयति शशिनाबद्धकोटीरभारः ॥ १९७ ॥

किन्नरशिवः —

श्मशानस्थो मौनी बहुविधपिशाचैः परिवृतः
कपर्दी कौपीनी सुसितभसितोद्धूलिततनुः ।
त्रिशूलाग्रे कृत्वा निखिलनृपयक्ष्माह्वयहरिं
कपालाग्नौ जुह्वद् दहतु दुरितं किन्नरशिवः ॥ १९८ ॥

रक्षोघ्नः —

त्रिशूलं परशुं चैव कपालं डमरुं तथा ।
बिभ्राणमुग्रवपुषं त्रिनेत्रं चन्द्रशेखरम् ॥ १९९ ॥
दंष्ट्राकरालनिनदद्भ्रुकुटीकुटिलाननम् ।
बडवामुखाग्निसदृशं दहन्तं भुवनत्रयम् ॥ २०० ॥
भूतप्रेतपिशाचादीन् भक्षयन्तं महाबलम् ।
एवं ध्यात्वा जपेन्नित्यं रक्षोहाग्निं समाहितः ॥ २०१ ॥

अथ सद्योजातादिमूर्तयः —

सद्यो वेदाक्षमालाभयवरदकरः कुन्दमन्दारगौरो
वामः काश्मीरवर्णोऽभयवरदपरश्वक्षमालो विलासी ।

१. 'ब' ख. पाठः.

अक्षस्रग्वेदपाशाङ्कुशडमरुकखट्वाङ्गशूलान् कपालं
बिभ्राणो भीमदंष्ट्रोऽञ्जनरुचिरतनुर्भीतिदश्चाप्यघोरः
[॥ २०२ ॥

विद्युद्वर्णोऽथ वेदाभयवरदकुठारान् दधत् पूरुषाख्यः
प्रोक्ताः सर्वे त्रिनेत्रा विधृनमुखचतुष्काश्चतुर्बाहवश्च ।
मुक्तागौरोऽभयेष्टाधिककरकमलोऽघोरतः पञ्चवक्त्र-
स्त्वीशो ध्येयोऽम्बुजन्मोद्भवमुररिपुरुद्रेश्वराः स्युः शि-
[ वान्ताः ॥ २०३ ॥

इति शिल्परत्ने उत्तरभागे ध्याने शैवप्रकरणं नाम
द्वाविंशोऽध्यायः ॥

---

## अथ त्रयोविंशोऽध्यायः ।

### अथ वैष्णवप्रकरणम् ।

अष्टाक्षरी —

अकौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराज-
त्केयूरं कौस्तुभाढ्यं शबलरुचिरहारं चारुपीताम्बरं च (?)।
नानारत्नांशुभिन्नाभरणशतयुजं श्रीधराश्लिष्टपार्श्वं
वन्दे दोःसक्तचक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम् ॥ १॥

गायत्री —

ध्येयः सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ २ ॥

---

१. 'ल्पि', २. 'र', ३. 'चक्र[व]' घ. पाठः.

धृतशङ्ख + चक्रवराब्जगदाकुलदोःपरिघं सितपद्मगतम् ।
वलयाङ्गदहारकिरीटधरं नवकुन्दनिभं प्रणमामि सदा ॥ ३ ॥

श्रीकराष्टाक्षरम् —

दुग्धाब्धिद्वीपवर्यप्रविलसितसुरोद्यानकल्पद्रुमाधो
भद्राम्भोजन्मपीठोपरिगतविनतानन्दनस्कन्धसंस्थः ।
दोर्भिर्बिभ्रद् रथाङ्गं वरदमथ गदापङ्कजे स्वर्णवर्णो
भास्वन्मौलिर्विचित्राभरणपरिगतः स्याच्छ्रियै वो मुकुन्दः
[ ॥ ४ ॥

सुदर्शनम् —

अव्याद् भास्करसत्प्रभाभिरखिला भाभिर्दिशो भासयन्
भीमाक्षः क्षरदट्टहासविलसद्दंष्ट्राप्रदीप्तानन: ।
दोर्भिश्चक्रदरौ गदाब्जमुसलप्रासांश्च पाशाङ्कुशौ
बिभ्रत् पिङ्गशिरोरुहोऽथ भवतश्चक्राभिधानो हरिः ॥ ५ ॥

अथ निग्रहचक्रं —

शङ्खं चक्रं च चापं परशुमसिमिषुं शूलपाशाङ्कुशाग्नीन्
बिभ्राणं खड्गखेटं हलमुसलगदाकुन्तमत्युग्रदंष्ट्रम् ।
ज्वालाकेशं त्रिनेत्रं कनकमयलसद्गात्रमत्युग्ररूपं
वन्दे षट्कोणसंस्थं सकलरिपुजनप्राणसंहारचक्रम् ॥ ६ ॥

अथ नृसिंहः —

जान्वोरासक्ततीक्ष्णस्वनखरुचिलसद्बाहुसंस्पृष्टकेश-
श्चक्रं शङ्खं च दोर्भ्यां दधदनलसमज्योतिषा भग्नदैत्यः ।
ज्वालामालापरीतो रविशशिदहनत्रीक्षणो दीप्तजिह्वो
दंष्ट्रोग्रं धूतकेशं वदनमपि वहन् पातु वो नारसिंहः ॥ ७ ॥

अथ विदरणनृसिंहः —

उद्यद्भास्वत्सहस्रप्रभमशनिनिभं त्रीक्षणेक्षा वमन्तं (?)
वह्नीनह्वाय विद्युत्ततिविततसटाभीषणं भूषणैश्च ।
दीप्तैरादीप्तदेहं स्वनखरुचिलसद्बाहुदण्डैरनेकैः
संभिन्नं भिन्नदैत्येश्वरमतनुतनुं नारसिंहं नमामि ॥ ८॥

तद्भेदः षडक्षरी —

अव्यान्निर्व्याजरौद्राकृतिरतिविकृतास्योल्लसत्तीक्ष्णदंष्ट्र-
श्चक्रं शङ्खं च पाशाङ्कुशकुलिशगदादारणाख्या दधानः ।
रक्ताकारश्च नाभेरध उपरि सितो दिव्यभूषाविशेषो
देवोऽर्काग्नीन्दुनेत्रो निखिलसुखकरो नारसिंहश्चिरं वः ॥९॥

अथ वराहः —

जान्वोरापादमुद्यत्कनकमिव हिमप्रख्यमाजानु नाभेः
कण्ठादानाभि वह्निप्रभमथ शिरसश्चागलं नीलवर्णम् ।
मौ(लिं व्यो ? लेव्यों)माभमाकं करलसदरिशङ्खासिखेटं ग-
[दाख्यां
शक्तीष्टाभीतियुक्तं प्रणमत वसुधोल्लासिदंष्ट्रं वराहम् ॥१०॥

तद्भेदः —

सजलाम्बुवाहनिभमुद्यतदोःपरिघं धराधरसमानतनुम् ।
सितदंष्ट्रिकाधृतभुवं त्वथवा प्रविचिन्तयेत् सपदि कोल-
[ममुम् ॥ ११ ॥

चतुरक्षरी —

श्रीमत्कल्पद्रुमोल्लासितकमललसत्कर्णिकामध्यसंस्थ-
स्तच्छाखालम्बिपद्मोदरविगलदसंख्यातरत्नाभिषिक्तः ।

---

१. 'नरसिं' क. ग. पाठः. २. 'वः ॥ व' घ. पाठः.

हैमीभिः स्वप्रभाभिस्त्रिभुवनमखिलं भासयन् वासुदेवः
पायाद् वः पायसाशी नवनवनवनीतामृताशी वशी सः
[॥ १२ ॥

धन्वन्तरिः —

क्षीराब्धेर्मथ्यमानादमृतमभिलषद्बुद्धिभिर्वैबुधौघै-
रुत्तीर्णः पीतवासा घनरुचिररुचिर्विश्वसन्त्राणहेतुः ।
बिभ्रद् दोर्भिश्चतुर्भिर्जलभवमभयं चामृतं शास्त्रयन्त्रं
योऽसौ धन्वन्तरिर्नः सकलगदभयादादिदेवः सदाव्यात्
[॥ १३ ॥

तद्भेदः —

अरिसदरजलूकारत्नपीयूषकुम्भ-
प्रतिघटितकरान्तः कान्तपीताम्बराढ्यः ।
तनुवसनविराजन्मौलिरारोग्यदायी
शतमखमणिवर्णः पातु धन्वन्तरिर्नः ॥ १४ ॥

हयग्रीवः —

क्षीरोदन्वदुदारवीचिवलयैरत्यन्तशीतीकृते
हैमाश्वत्थसुरद्रुमे मणिमये सिंहासने प्रोज्ज्वले ।
आसीनं हयवक्त्रमिन्दुवपुषं व्याख्यानमुद्रान्वितं
शिष्येभ्यः प्रतिपादयन्तमनिशं शास्त्राणि विद्यामहेम्[1]
[॥ १५ ॥

अथ कार्तवीर्यः—

कैलासाद्रिसमप्रभं[2] द्विपपतेः पृष्ठस्थितं भीषणं
नागस्यन्दनवाजिपत्तिनिकरैरापूर्णसैन्यावृतम् ।

१. 'हम् । का' घ. पाठः. २. 'भ' क. ग. पाठः.

दोर्दण्डाम्बुजबद्धचापशरपाशाद्यङ्कुशाख्यं परं
ध्यायेद् वा तमरातिवर्गहननायातीव सम्पत्तये ॥ १६॥

श्रीपञ्चामृतम् —

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकते मौक्तिकानां
मालाक्लृप्तासनस्थः स्फटिकमणि[1]निभो मौक्तिकैर्मण्डि-
शुभ्रैरभ्रैरदभ्रैरुपरि[2]विरचितैर्मुक्तपीयूषवर्षे-　　[ताङ्गः ।
रानन्दी नः पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः ॥१७॥

सन्तानगोपालम् —

अव्याद् व्याकोचनीलाम्बुजरुचिररुणाम्भोजनेत्रोऽम्बुजस्थो
बालो जङ्घाकरीषस्थलकलितरणत्किङ्किणीको मुकुन्दः।
दोर्भ्यां हैयङ्गवीनं दधदतिविमलं पायसं विश्ववन्द्यो
++गोपीपरीतो रुरुनखविलसत्कण्ठभूषश्चिरं वः ॥ १८ ॥

तद्भेदः —

चक्रशङ्खधरं कृष्णं रथस्थं च चतुर्भुजम्।
सर्वाभरणसन्दीप्तं पीतवाससमच्युतम् ॥ १९ ॥
द्विजवर्यार्चनयुतं विष्णुतेजोपबृंहितम् ।
समर्पयन्तं विप्राय नष्टपुत्रान् सबालकान् ॥ २० ॥

आवहन्ती —

अरुणनलिनसंस्थं काञ्चनोद्दीप्तवर्णं
करधृतदरचक्रं पीतकौशेयवस्त्रम् ।
कनककलशरक्तोत्पलासक्तपाणि (?)
श्रियमपरकराभ्यां बिभ्रतं नौमि विष्णुम् ॥ २१ ॥

---

१. 'निभैर्मौक्ति' क. ग. पाठः. २. 'परिचि', ३. 'वः' घ. पाठः.

पुरुषसूक्तम् —

गोक्षीराभं पुण्डरीकासनस्थं
चक्राब्जाभ्यां शङ्खकौमोदकीभ्याम् ।
श्रीभूमिभ्यामर्चितं योगिचिन्त्यं
ध्यात्वा देवं[1] पूजयेत् पौरुषाख्यम् ॥ २२ ॥

लक्ष्मीनारायणम् —

हस्ते बिभ्रत् सरसिजगदाशङ्खचक्राणि विद्यां
पद्मादर्शौ कनककलशं मेघविद्युद्विलासम् ।
वामोत्तुङ्गस्तनमविरलाकल्पमाश्लेषलोभा-
देकीभूतं वपुरवतु वः पुण्डरीकाक्षलक्ष्म्योः ॥ २३ ॥

द्वाविंशत्यक्षरी —

वेणुं वेदमयं क्वणन् प्रदिशतु श्रेयांसि भूयांसि मे
पाणिद्वन्द्वसरोजयोर्जपपटीं वेवं दधानो हरिः ।
वाणीवेषविचित्रवेषविलसद्देहस्त्वया सेव्यता-
मज्ञानाख्यतमोविदारणपटुः सर्वार्थदः सन्ततम् ॥ २४ ॥

विंशत्यक्षरी —

श्रीमत्यां द्वारवत्यां नवकनकमये भूतले रत्नधो-
र्मध्ये कल्पद्रुमाधो विलसदमलसन्मण्डपे सन्निविष्टम् ।
चक्रं शङ्खं च वेणुं नलिनमपि गदां योगमुद्रां दधानं
वन्दे संसि[3]च्यमानं मणिमयकलशैर्वल्लभाभिर्मुकुन्दम्
[॥ २५ ॥

तद्भेदः —

मध्ये रत्नस्रवन्त्योर्मणिमयरचिते मण्डपे कल्पमूले
भास्वद्दलासनाम्भोरुहकुहरगतं सद्गदाब्जारिशङ्खम् ।

---

१. 'दिव्यं पू' क. ग. पाठः. २. 'विषमणिक', ३. 'चिन्त्यमा'

गोविन्दं स्वर्णवर्णं मणिकलशमुखस्पर्शवामाङ्घ्रिमीडे
रुक्मिण्याद्यष्टदेवीकरमणिकलशै रत्नधाराभिषिक्तम्॥२६॥

अष्टादशाक्षरी —

अव्यान्मीलत्कलायद्युतिगहिरिपुपिञ्छोल्लसत्केशपाशो
गोपीनेत्रोत्पलाराधितललितवपुर्गोपगो(वि ? वृ)न्दवीतः ।
श्रीमद्वक्त्रारविन्दप्रतिहसितशशाङ्काकृतिः पीतवासा
देवोऽसौ वेणुवाद्यक्षपितजनधृतिर्देवकीनन्दनो वः ॥ २७॥

तद्भेदः —

अंसालम्बितवामकुण्डलयुतं मन्दोन्नतभ्रूलतं
किञ्चित्कुञ्चितकोमलाधरपुटं साचिप्रचारेक्षणम् ।
आलोलाङ्गुलिपल्लवं मुरलिकामापूरयन्तं मुदा
मूले कल्पतरोस्त्रिभङ्गिललितं जाने जगन्मोहनम् ॥ २८॥

श्रीरामषडक्षरं —

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासितं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे॥ २९॥

रामध्यानभेदः—

वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे
मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् ।

१. 'जालो गो' क. ग. पाठः. २. 'तलं कि', ३. 'ञ्च' घ. पाठः.

चतुर्भुजाश्चक्रशङ्खगदापङ्कजधारिणः ।
किरीटकेयूरिणश्च पीताम्बरधरा अपि ॥ ४१ ॥

अथ केशवाद्याः —

सुवर्णगोक्षीरजपाशिलालपीतेन्द्रनीलारुणकैरवाभाः ।
काश्मीरमेघाञ्जनरोचिषश्च क्रमेण वर्णैरपि केशवाद्याः
[॥ ४२ ॥

इतीरिताश्चापकिरीटहारकेयूरपीताम्बरकादितुल्यम् ।
सचक्रशङ्खाः सगदाम्बुजाश्च संपूजनीयाः स्तवनैः क्रमेण
[॥ ४३ ॥

वराहभेदः —

हेमप्रख्यं पार्थिवे मण्डले वा
नीहाराभं नीरजेऽग्नेस्तदाभम् ।
वायोः कृष्णं द्युप्रभं वा दिविस्थं
क्रोडव्याप्तं सत्यसंस्थं यजेद्वा ॥ ४४ ॥

विश्वरूपं —

विष्णुं भास्वत्किरीटं मणिमकुटकटीसूत्रकेयूरहार-
ग्रैवेयोर्म्यादिमुख्याभरणमणिगणोल्लासदिव्याङ्गरागम् ।
विश्वाकाशावकाशप्रविततमयुतादित्यनीकाशमुद्यद्-
बाह्वग्र्यग्रनानायुधनिकरधरं विश्वरूपं नमामि ॥४५॥

अथायुधानि —

चक्रं च चक्राङ्किकिरीटमौलिं
सचक्रशङ्खं सगदं सशार्ङ्गम् ।
रक्ताम्बरं रक्ततनुं करालं
दंष्ट्राननं प्राग्दलकेऽर्चयेत ॥ ४६ ॥

पूज्या गदा गदाङ्कितमौलिः सगदा सचक्रशङ्खधनुः ।
पीताम्बरानुलेपा पीता क्रुद्धा च याम्यसंस्थदले ॥ ४७ ॥
श्यामं शार्ङ्गाङ्कितकं शार्ङ्गं शार्ङ्गारिदरगदाहस्तम् ।
श्यामांशुकानुलेपनमाल्यादि वारुणे यजेत् पत्रे ॥ ४८ ॥
खड्गं सखड्गशिरसं खड्गारिगदाधनुष्करं धूम्रम् ।
विकृताम्बरानुलेपस्रजं समभ्यर्चयेदुदक्पत्रे ॥ ४९ ॥
शङ्खं सशङ्खशिरसं शङ्खारिगदाधनुष्करं सुसितम् ।
सितवसनमाल्यभूषं यजैन्महानादमग्निसंस्थदले ॥ ५० ॥
शङ्खोक्तचिह्नभूषान् स्वास्त्रादिकधरचतुर्भुजानपरान् ।
हलमुसलशूलसंज्ञान् यजेन्निशाचरादिकोणेषु ॥ ५१ ॥

इति शिल्परत्ने उत्तरभागे ध्याने वैष्णवप्रकरणं नाम
त्रयोविंशोऽध्यायः ॥

## अथ चतुर्विंशोऽध्यायः ।

### अथ शक्तिमार्गः ।

तत्र पूर्वं मूलदुर्गा —

शङ्खारिचापशरभिन्नकरां त्रिनेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितां ससुरसिद्धनतां च दुर्गां
दूर्वानिभां दुरितवर्गह(रा?रां) नमामि ॥ १ ॥

अथवा —

दुर्गां ध्यायतु दुर्गतिप्रशमनीं दूर्वादलश्यामलां
चन्द्रार्धोज्ज्वलशेखरां त्रिनयनामापीतवासोवसम् ।

१. 'पीतु पत्रे' क. ग. पाठः. २. 'दु' घ. पाठः.

चक्रं शङ्खमिषुं धनुश्च दधतीं कोदण्डबाणांसयो-
र्मुद्रे वाभयकामदे सकटिबन्धाभीष्टदां वानयोः ॥ २ ॥

लिपिः —

देवीं कुन्देन्दुगौरामभृतकरकलास्मेरकोटीरबन्धां
मुद्राबोधाक्षमालावरकलितकरां पुस्तकाकान्तहस्ताम् ।
शुभ्राकल्पां त्रिनेत्रां त्रिभुवननमितामक्षराधीनमूर्तिं
वन्दे वाग्देवतां तां जगदुदयकरीं मातृकां विश्वयोनिम् ॥ ३ ॥

अथ भुवनेश्वरी —

उद्यद्भास्वत्समाभां (विजितनवजपामिन्दुखण्डावनद्धां
ज्योतिर्मालां त्रिनेत्रां विविधमणिलसत्कुण्डलां पद्मसंस्थाम् ।
हारग्रैवेयकाञ्चीमणिगणवलयैः संयुतामम्बराढ्या-
मार्यां पाशाङ्कुशाभ्यामभयवरकरां भावयेद् भौवनेशीम् )
[॥ ४ ॥

अथवा —

मुक्ताविद्युत्पयोदस्फटिकनवजपाभास्वरैः पञ्चवक्त्रैः
शीतांशूल्लासिचूडैस्त्रिनयनलसितैर्भासुरामच्छवर्णाम् ।
चक्रं शङ्खं कपालं गुणपरशुसुधाकुम्भवेदाक्षमाला-
विद्यापद्मान् वहन्तीं नमत मुनिनतां भारतीं पद्म-
[संस्थाम् ॥ ५ ॥

अपिच —

मृगपोतकपुस्तकाक्षमाला-
परशून् + दधतीं सिताम्बुजस्थाम् ।
तुहिनद्युतिशेखरां त्रिनेत्रां
सितभूषां सुसितां नमामि वाणीम् ॥ ६ ॥

१. 'निम । अथवा' ख. पाठः.

हृल्लेखा —

रक्तप्रायो + गौरां सुररसविलसद्यौवनारम्भशोभा-
मातामाकल्पकम्रां शशिशकलमिलत्कुन्तलां कान्त-
[ नेत्राम् ।
नानालङ्कारकान्तां करयुगलसमाक्रान्तपाशाङ्कुशाढ्यां
देवीं त्रैलोक्यवन्द्यामभयवरकरां हारिसर्वाङ्गहृद्याम् ॥ ७ ॥

अथ वागीश्वरी —

शान्तां शारदनीरदेन्दुविमलामालेखिनीपुस्तक-
व्यासङ्कोचतबाहुमूर्जितवचोविज्ञानबोधात्मिकाम् ।
शुभ्राकल्पविभूषितां त्रिनयनां भास्वज्जटाशेखरां
सम्बोधाय सरस्वतीं भगवतीं वन्दे मनोज्ञाकृतिम् ॥ ८ ॥

अथ श्रीः —

मुक्तागौरैश्चतुर्भिर्द्विपपतिभिरथो पुष्करोद्यद्घटास्या-
स्त्रियैर्द्ब्राभिषिक्ता करकमललसत्पद्मयुग्माभयेष्टा ।
नानाकल्पाभिरामा द्रुतकनकनिभा रक्तपङ्केरुहस्था
रम्याङ्गी सुप्रसन्ना वितरतु विपुलां सन्ततं श्रीः श्रियं वः ॥९॥

अपिच —

शुभ्रेभद्वयपुष्करेरितघटश्च्योतद्विशुद्धोदकैः
स्नायन्तीमतिहृद्यरूपविभवां नीलोल्लसत्कुन्तलाम् ।
शुभ्राकल्पविशेषविभ्रमरसामुत्तप्तहेमप्रभां
वन्दे बाहुयुगप्रसक्तकमलां देवीं सरोजासनाम् ॥ १० ॥

अथ त्वरिता —

भावोक्तेदवृता सहाभयवरा विस्रस्तनीलालका
बिम्बोष्ठी तरुणारुणाब्जचरणा रक्तान्तनेत्रत्रया ।

१. 'महोवि', २. 'गर्भाभ', ३. 'त्न' क. ग. पाठः.

पीनोरुस्तनभारभङ्गुरतनुः श्यामा प्रसन्नानना
देवी वस्त्वरिता तनोतु विभवानानन्दयन्ती भक्तः॥ ११ ॥

अथवा —

मायूरीकृतशेखरप्रविलसद्गुञ्जागुणालङ्कृता
सुस्निग्धा शिखिपिच्छनालवलया वन्यप्रसूनोज्ज्वला ।
नागेन्द्राहितकुण्डलाङ्गदलसत्काञ्चीस्फुरन्नूपुरा
पायाद् वस्त्वरिता गृहीतशबरीवेषा प्रवालांशुका ॥ १२ ॥

धूमावती —

काकारूढातिकृष्णा प्रविरलदशना मुक्तकेशी विरक्ता
धूम्राक्षी क्षुत्पिपासार्त्ता प्रतिभयचरिता चञ्चला कामलोला ।
क्लिष्टा पुष्टालसाङ्गी क्रमजलकलिता व्यक्तगर्वावरूढा
भूतिं धूमावती वः प्रदिशतु विधवा धूतशूर्पाग्रहस्ता ॥ १३ ॥

अथ काली —

अतिरौद्रा महादंष्ट्रा भ्रुकुटीकुटिलेक्षणा ।
विवर्तनयना शूरा दीर्घघोणा मदान्विता ॥ १४ ॥
स्निग्धगम्भीरनिर्घोषा नीलजीमूतसन्निभा ।
भ्रुकुटीकूटसन्दीप्ता महावदनभीषणा ॥ १५ ॥
दंष्ट्रोष्ठकोपताम्राक्षी रक्तदीर्घशिरोरुहा ।
त्रिशूलव्यग्रदोर्दण्डनखकीचकवादिनी ॥ १६ ॥
अतिरक्ताम्बरा देवी रक्तमांसासवप्रिया ।
शिरोमालाविचित्राङ्गी चिन्वन्ती शोणितासवम् ॥ १७ ॥
नृत्यन्ती च हसन्ती च पिशाचगणसेविता ।
पिशाचस्कन्धमारुह्य भ्रमन्ती वसुधातलम् ॥ १८ ॥

१. 'ति' क ग. पाठः.

इत्थंभूतां भद्रकालीं मातृभिः परिवारिताम् ।

अपिच,

प्रत्यग्राम्भोजवर्णा शशधरशकलोल्लासिदंष्ट्रोज्ज्वलास्या
वज्राकारं कृपाणं चषकमपि मधुव्रातपूर्णं दधाना ।
मुण्डस्रङ्मण्डिताङ्गी विविधफणिफणारत्नजालप्रदीप्ता
भद्रं वो भद्रकाली वितरतु सुमनस्सङ्घसंस्तूयमाना
[॥ १९½ ॥

अथ भेलखी —

भास्वत्सिन्दूरवर्णा द्रुतकनकलसत्पादुका मुक्तकेशी
नानाहृद्याङ्गभद्रा घनगुरुजघना तुङ्गपीन(स्तार्था?स्तनार्ता)।
धूम्राना लम्बयुग्मं करयुगलधृतं कङ्कणप्रायलम्बा
+ + + + + + + + + + + + + + फेलखी + + + +
[॥ २०½॥

अथ मातङ्गी —

बिम्बोष्ठीं नवयौवनार्द्रचरणामाकीर्णकेशालकां
हृद्याङ्गीं सितशङ्खकुण्डलधरालङ्कारवेषोज्ज्वलाम् ॥ २१½ ॥

शक्तिप्रणवः —

प्रकाशमध्यस्थितचित्स्वरूपां वराभये सन्दधतीं त्रिनेत्राम् ।
सिन्दूरवर्णामतिकोमलाङ्गीं मायामयीं तत्त्वमयीं नमामि
[॥ २२½ ॥

---

१. 'म् । प्र', २. 'ज्ञ' ग. पाठः. ३. 'ना । भे' घ. पाठः.
४. 'ष्ठी', ५. 'म् । अथ' क. ग. पाठः.

अथ वनदुर्गा—

अरिशङ्खकृपाणखेटबाणान् सधनुश्शूलकतर्जनीर्दधाना ।
भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा [॥ २३½ ॥

अपिच,

उदयार्कसमप्रख्यां किरणानेकसङ्कुलाम् ।
बन्धूकपुष्पस्तबकसिन्दूरसदृशोज्ज्वलाम् ॥ २४½ ॥
पीतवस्त्रावृतां देवीं सर्वाभरणभूषिताम् ।
नीलकुञ्चितकेशाढ्यां प्रसन्नवदनाम्बुजाम् ॥ २५½ ॥
विचित्ररत्ननिष्ठ्यूतकुण्डलोद्द्योतिताननाम् ।
स्वनेत्रकान्तिनिर्धूतकर्णोत्पलविराजिताम् ॥ २६½ ॥
अर्धचन्द्राकृतिस्पर्धिललाटतिलकोज्ज्वलाम् ।
चतुष्टयभुजाक्लृप्तशङ्खारीष्टाभयोद्यताम् ॥ २७½ ॥
वलित्रयोर्मिसंभिन्नमध्यराजिविराजिताम् ।
तप्तहाटकसंक्लृप्तस्तम्भोरुद्वयशोभिताम् ॥ २८½ ॥
वृत्तजङ्घां गूढगुल्फां रम्यावृतपदाम्बुजाम् ।
रक्ताम्भोजे समासीनामुद्यत्सूर्यायुतप्रभाम् ॥ २९½ ॥
सर्वलोकमयीं देवीं दुर्गां महिषमर्दिनीम् ॥ ३० ॥

यद्वा,

हेमप्रख्यामिन्दुखण्डात्तमौलिं
शङ्खारीष्टाभीतिहस्तां त्रिनेत्राम् ।
हेमाब्जस्थां पीतवर्णां प्रसन्नां
देवीं दुर्गां दिव्यरूपां नमामि ॥ ३१ ॥

---

१. 'कपालखे', २. 'वनदू', ३. 'स्व', ४. 'ल' घ. पाठः. ५. 'मि' क. ग. पाठः. ६. 'मध्यराजितसं' घ. पाठः. ७. 'अपिच,

त्रैलोक्यमोहिनी —

पद्मस्थामिक्षुचापं कुसुमशरसृणीपद्मयुग्माक्षमाला-
विद्यापाशान् दधानां कुचभरविनमन्मध्यवल्लीं त्रिनेत्राम् ।
रक्तां रक्ताङ्गरागाम्बरकुसुमयुतां सुप्रसन्नाननाब्जां
त्रैलोक्यक्षोभदात्रीं मुनिविबुधनुतां देवतां तां नमामि ॥३२॥

संवित् —

उद्यद्भास्करसप्रभां त्रिनयनामापीनतुङ्गस्तनीं
पाशं पुस्तकमङ्कुशं जपपटीं चाबिभ्रतीं बाहुभिः ।
रक्ताकल्पदुकूलमाल्यलसितां बालेन्दुचूडामणिं
भक्ताभीप्सितकामधेनुमनिशं वन्दे परां देवताम् ॥ ३३ ॥

इन्द्राणी —

कल्पद्रूद्यानमध्ये विविधमणिलसन्मण्डपान्तर्विराज-
न्मातङ्गारातिपीठप्रविलसितसरोजन्मसंस्थां प्रसन्नाम् ।
पीनोत्तुङ्गस्तनार्तां पृथुजघनभरां पद्मपत्रायताक्षी-
मिन्द्राणीमिन्द्रनीलोत्पलशकलसमां हृद्यभूषां नमामि
[॥ ३४ ॥

अथवा —

सञ्चिन्त्य नन्दनोद्यानं मन्दाराद्यैः सुरद्रुमैः ।
कल्पवल्लीशतैश्चापि फलपुष्पभरानतैः ॥ ३५ ॥
अलङ्कृतं तस्य मध्ये रत्नमण्डपमुज्ज्वलम् ।
रत्नसिंहासनगतां तन्मध्ये शक्रवल्लभाम् ॥ ३६ ॥
मन्दारमाल्यैर्मसृणमल्लधम्मल्लमन्थराम् ।
मृगाङ्कवल्लीमन्दारमन्दस्मितमनोहराम् ॥ ३७ ॥
मत्तमातङ्गमहितमस्तकोद्यत्स्तनद्वयाम् ।
मृणालतन्तुमृदुलमध्यवल्लीमनोरमाम् ॥ ३८ ॥

१. 'ल्या' ग., 'ल' ग. पाठः. २. 'भृङ्गाङ्क' क. ग. पाठः.

मनोहरतराभोगभरमन्थरगामिनीम् ।
हारग्रैवेयरशनानूपुराद्यैरलङ्कृताम् ॥ ३९ ॥

उत्तंसितेन मणिना चिन्तापूर्वेण सन्ततम् ।
प्लाव्यमानाङ्गलतिकां रत्नजालानि वर्षता ॥ ४० ॥

आन्दोलयन्तीं हस्तेन लीलापद्मं शनैः शनैः ।
शङ्खपद्मनिधिभ्यां च वामदक्षिणपार्श्वयोः ॥ ४१ ॥

वसुप्रवाहं वर्षद्भ्यां सेव्यमानां सदा मुदा ।
रम्भया च सितच्छत्रं रत्नदण्डं शशिप्रभम् ॥ ४२ ॥

काञ्चनस्रावि संगृह्य सेव्यमानां प्रसन्नया ।
घृताचीसहजन्याभ्यामुभयोः पार्श्वयोरपि ॥ ४३ ॥

सविलासं वीज्यमानां व्यजनाभ्यां शनैः शनैः ।
मन्दं मन्दं दोर्लताभ्यां गृहीत्वा पादपङ्कजम् ॥ ४४ ॥

संवाहयन्तीमुर्वश्या निजाङ्के संनिवेश्य च ।
ताम्बूलवीटिकां हस्ते गृहीत्वा पार्श्वसंस्थया ॥ ४५ ॥

भक्त्या मेनकयाजस्रं सेव्यमानां मनोज्ञया ।
अमृतासारमनिशं दुह्यन्त्या हृद्यरूपया ॥ ४६ ॥

संसेव्यमानामभितः सुरभ्या च सवत्सया ।
अशेषयोषित्सौभाग्यलक्ष्मीमेवंविधाकृतिम् ॥ ४७ ॥

एवं ध्यात्वा वरारोहामिन्द्राणीमीप्सितार्थदाम् ।

१. 'म' घ. पाठः.

अथवा —

दोर्भिश्चतुर्भिर्बिभ्राणं वज्रशक्तिवराभयान् ।
त्रैलोक्यनाथं वरदं देवेन्द्रं मण्डपाश्रितम् ॥ ४८½ ॥
तस्याङ्कसंस्थामिन्द्राणीं मनोहरतराकृतिम्[1] ॥ ४९ ॥

अथ स्वयंवरा —

बालार्कायुतसप्रभां करतले लोलम्बमालाकुलां
मालां सन्दधतीं मनोहरतनुं मन्दस्मितोद्यन्मुखीम्[2] ।
मन्दं मन्दमुपेयुषीं वरयितुं शम्भुं जगन्मोहिनीं
वन्दे देवमुनीन्द्रवन्दितपदामिष्टार्थदां पार्वतीम्[3] ॥ ५० ॥

अपिच —

हेमाभां मतिवागतीतगुणशीलानल्पशिल्पाकृतिं
प्रेमारोहमनोहरां करलसत्कल्याणदामाञ्चिताम् ।
श्यामामीश्वरमुद्यतां वरयितुं त्रैलोक्यसम्मोहिनीं
कामापादनकल्पवल्लिमनिशं वन्दे परां देवताम्[4] ॥ ५१ ॥

अथैच,

करधृतवरमाला सर्वरत्नौङ्गभूषा
निखिलनयनचेतोहारिरूपाग्र्यवेषा ।
भवतु भवदभीष्टप्राप्तये शैलकन्या
पुरुषयुवतिवश्याकृष्टिनित्यप्रगल्भा ॥ ५२ ॥

अथवा —

उद्यद्राकाशशाङ्कान्तरपरिविलसत्पद्मसंस्थां त्रिनेत्रां
दोर्भिः पाशेक्षुचापाङ्कुशकुसुमशरान् बिभ्रतीमिन्दुचूडाम् ।

१. 'मृ । स्व', २. 'नं', ३. 'मृ । हे' घ. पाठः. ४. 'मृ । क' ख. पाठः. ५. 'थ, क' क. ग. पाठः. ६. 'क्का' घ. पाठः.

गौरीं गौराङ्गरागाम्बररुचिरतनुं चिन्तयेन्मन्त्रमेनं
जप्यात् कान्त्यै समृद्ध्यै सुविपुलयशसे लोकसंरञ्जनार्थं
[॥ ५३ ॥

अथ प्राणशक्तिः —

रक्ताम्भोधिस्थपोतोल्लसदरुणसराजोधिरूढा कराग्रैः
पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यङ्कुशं पञ्च बाणान् ।
बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा वः
[ ॥ ५४ ॥

अथ अश्वारूढा —

पाशेनाबध्य साध्यं स्मरशरविवशां वामदोष्णानयन्तीं
सौवर्णीं वेत्रयष्टिं निजकरकमलेनापरेणादधानाम् ।
रक्तां रक्ताङ्गरागाम्बरकुसुमयुतामश्वसंस्थां प्रसन्नां
देवीं बालेन्दुचूडां मनसि मुनिनुतां पार्वतीं भावयामि
[ ॥ ५५ ॥

वज्रप्रस्तारिणी—

रक्तपयोनिधिगतमणिपोतस्फुरितरविच्छदकमलनिषण्णाम् ।
इक्षुशरासनपुष्पशराभयवरसृणिडाडिमसायकपाशान् ॥५६॥

दधतीमरुणामयुगलनेत्रामरुणविलेपनमाल्यदुकूलाम् ।
हिमकरलेखाकलितकपर्दां हिमगिरितनयामनिशमुपासे
[॥ ५७ ॥

अपिच —

१. 'य । अश्वा', २. 'द्बसाध्यां स' ध. पाठः. ३. 'न' ख. पाठः.

इन्दुकलाकलनोज्ज्वलमौलिर्मीरमदाकुलितायुगनेत्रा ।
शोणितसिन्धुतरङ्गितपोतद्योतितभानुदलाम्बुजसंस्था ॥५८॥

दोर्धृतडाडिमसायकपाशा साङ्कुशचापकपालसमेता ।
शोणदुकूलविलेपनमाल्या शोणतरा भवतोऽवतु देवी ॥५९॥

नित्यक्लिन्ना —

बन्धूकारुणविग्रहां त्रिनयनां बालेन्दुचूडामणिं
पाशाभीतिकपालसाङ्कुशलसद्धांहुं[1] मनोज्ञाननाम् ।
रक्ताम्भोरुहविष्टरां मदवशादाघूर्णमानेक्षणां
रक्तालेपनवस्त्रदामलसितां वन्दे सदा पार्वतीम् ॥ ६० ॥

अपिच —

मध्येसुधामयपयोधिविराजमान-
द्वीपप्रवालमणिभूमितलं विशालम् ।
तस्मिन् मणिप्रवरनिर्मितमण्डपान्तः-
सिंहासनोपरिगते कमले निषण्णाम् ॥ ६१ ॥

पाशं कल्पलतां कपालमभयं दानाङ्कुशौ वल्लकी-
कोणाख्यौ दधतीमयुग्मनयनां बन्धूकपुष्पारुणाम् ।
आरो[2]मांशुकभूषणोज्ज्वलतनुं बालेन्दुमौलिं परा-
माद्यां दिव्यजनानतामनुपमां वन्दे सदा पार्वतीम् ॥ ६२ ॥

श्रीसूक्तम् —

अरुणकै[3]मलसंस्था तद्रजःपुञ्जवर्णा
करकमलधृतेष्टाभीतियुग्माम्बुजा च ।

१. 'हां' ख. पाठः. २. 'रा' क. ख. पाठः. ३. 'नलिन-सं' ख. पाठः.

मणिमकुटविचित्रालङ्कृताकल्पजालै-
र्भवतु भुवनमाता सन्ततं श्रीः श्रिये वः ॥ ६३ ॥

त्रिपुटा —

नवकनकभासुरोर्वीविरचितमणिकुट्टिमे सकल्पतरौ ।
रत्नवरबद्धसिंहासननिहितसरोरुहे समासीनाम् ॥ ६४ ॥

आबद्धरत्नमकुटां मणिकुण्डलोद्य-
त्केयूरकोर्मिरशनाह्वयनूपुराढ्याम् ।
ध्यायेद् धृताब्जयुगपाशकसाङ्कुशेक्षु-
चापां सपुष्पविशिखां नवहेमवर्णाम् ॥ ६५ ॥

चामरमुकुरसमुद्गकताम्बूलकरङ्कवाहिनीभिश्च ।
दूतीभिः समभिवृतां पश्यन्तीं साधकं प्रसन्नदृशा ॥ ६६ ॥

त्रिपुरा —

आताम्रार्कायुताभां कलितशशिकलारञ्जितत्वां त्रिनेत्रां
देवीं पूर्णेन्दुवक्त्रां विधृतजपपटीपुस्तकाभीत्यभीष्टाम् ।
पीनोत्तुङ्गस्तनार्तां वलिलसितविलग्नामसृक्पङ्कराज-
न्मुण्डस्रङ्मण्डिताङ्गीमरुणतरदुकूलानुलेपां नमामि ॥ ६७ ॥

अथ भूमिः —

मुख्याम्भोजे निविष्टारुणचरणतला श्यामलाङ्गी मनोज्ञा
स्वच्छाल्यग्रचुम्बच्छुकलसितकरप्रान्तनीलोत्पला च ।
रक्ताकल्पाभिरामा मणिमयमकुटा चित्रवस्त्रा प्रसन्ना
दिश्याद् विश्वम्भरा वः सततमभिमतं वल्लभा कैटभारेः
[॥ ६८ ॥

१. 'यै', २. 'मि ॥ भू', ३. 'रा' घ. पाठः.

शूलिनी —

बिभ्राणा शूलबाणास्यरिसदरगदाचापपाशा(ङ्कुशा ? न् करा)-
[ब्जै-
मेंघश्यामा किरीटोल्लिखितजलधरा भीषणा भूषणाढ्या ।
सिंहस्कन्धाधिरूढा चतसृभिरसिखेटान्विताभिः परीता
कन्याभिर्भिन्नदैत्या भवतु भवभयध्वंसिनी शूलिनी वः
[॥ ६९ ॥

गायत्री —

मन्दाराह्वयरोचनाञ्जनजपाखाभैर्मुखैरिन्दुम-
द्रत्नोद्यन्मकुटाङ्गसन्ततचतुर्विंशार्णचित्रातनुः ।
अंम्भोजेऽरिगदाह्वयौ गुणकपालाख्यौ चं पाशाङ्कुशे-
ष्टाभीतीर्दधती भवेद् भवदभीष्टोत्तारिणी तारिंणी ॥ ७० ॥

गायत्री त्रिष्टुप् —

गायत्री चतुराननेष्टशयना बाला चतुर्भिर्भुजैः
पद्माक्षालिकमण्डलुस्रगभ(व ? य)प्रोद्भासिभिर्भासुरा ।
ब्राह्मी हंसधृताब्जपत्रनिलया बन्धूककान्तस्फुर-
द्भूषा मे हृदि हार + + + + + + + + + + + + + + ॥ ७१ ॥

भास्वद्विद्युत्करालाकुलहरिगलसंस्थारिशङ्खासिखेटे-
ष्वस्त्रासाख्यत्रिशूलानरिगणभयदां तर्जनीं चादधाना ।
चर्मास्युद्घूर्णदोर्भिः प्रहरणनिपुणाभिर्वृता कन्यकाभि-
र्दद्यात् कार्शानवीष्टांस्त्रिनयनलसिता चापि कात्यायनी
[वः ॥ ७२ ॥

---

१. 'मा', २. 'चापाङ्कु', ३. 'रिणी । त्रि' घ. पाठः. ४. र्णि' क. पाठः. ५. 'ष्टा त्रिन' घ. पाठः

* 'अब्जे चारि' इति प्रपञ्चसारपाठो दृश्यते ।

सौरी चतुरक्षरी —

भास्वद्रत्नौघमौलिस्फुरदमृतरुचो रञ्जयञ्चारुरेखां
सद्यःसन्तप्तकार्तस्वरकमलजपाभासुराभिः प्रभाभिः ।
विश्वाकाशावकाशं ज्वलयदशिशिरं धर्तृ पाशाङ्कुशेष्टा-
भीतीनां भङ्गितुङ्गस्तनमवतु जगन्मातुरार्कं वपुर्वः ॥ ७३ ॥

अन्नपूर्णा —

दुग्धाब्धौ रूप्यवप्रावृतकनकमयैद्वीपवर्ये सुराढ्ये
कल्पद्रूद्यानकेऽथो मणिमयलसिते वित्तपस्याग्रभागे ।
आसीने भूश्रियौ वाञ्छितवसुनिचयं मन्त्रिणे संसृजन्त्यौ
मन्त्री सञ्चिन्तयानो जपतु दिनमुखे सम्पदेऽस्य मन्त्रम
[॥ ७४ ॥

अथवा —

रुद्रताण्डवविलोकनलोलां
भद्रवक्त्रनयनां भवकान्ताम् ।
अन्नदाननिरतां जननीं तां
चिन्तयेदुषसि चित्रदुकूलाम् ॥ ७५ ॥

अथ सप्त मातरः —

दण्डं कमण्डलुं बिभ्रत्यक्षसूत्रमथाङ्कुशम् ।
सुवर्णवर्णां ब्रह्माणीं कृष्णाजिनधरां भजेत् ॥ ७६ ॥

शूलं परश्वधं क्षुद्रदुन्दुभिं नृकरोटिकाम् ।
बिभ्रतीमभ्रशुभ्राभां स्मरेन्माहेश्वरीमपि ॥ ७७ ॥

---

१. 'धातृपा', २. 'भागि तु' क. पाठः. ३. 'श्री' क. ग. पाठः. ४. 'द', ५. 'वक्त्र' घ. पाठः. ६. 'श मा' क. ख. ग. पाठ

अङ्कुशं पाशखट्वाङ्गे + + + दधतीं भुजैः ।
ध्यायेत् सिन्दूरसङ्काशां कौमारीं शक्तिमालिकाम् ॥ ७८ ॥
चक्रशङ्खपताकाख्यशृङ्खलां च चतुर्भुजाम् ।
कलायश्यामलां ध्यायेद् वैष्णवीं पीतवाससम् ॥ ७९ ॥
मुसलासिलसद्धण्टाहलोद्यत्करपङ्कजाम् ।
+ + + + + संयुक्तां वाराहीं नीरदप्रभाम् ॥ ८० ॥
अङ्कुशं तोमरं वज्रं चक्रं च दधतीं शुभाम् ।
इन्द्रोपलाभामिन्द्राणीं स्मेरदुज्ज्वलभूषणाम् ॥ ८१ ॥
शूलासिनृशिरोराजत्कपालविलसद्भुजाम् ।
मुण्डस्रैङ्मण्डितां चण्डीं चामुण्डामपि चिन्तयेत् ॥ ८२ ॥
मृगटङ्कवराभीतिकरो वीरस्त्रिलोचनः ।
नागोपवीताभरणः श्वेतचर्माम्बरो भवेत् ॥ ८३ ॥
गजास्यमेकदन्तं च त्रिणेत्रं नागभूषणम् ।
कनकाभं करासक्तपाशाङ्कुशवरं तथा ॥ ८४ ॥
भक्ष्यं च बिभ्रतं देवं ह्रस्वपादकरद्वयम् ।
शुण्डाग्रग्रस्तचषकं महाकायं विचिन्तयेत् ॥ ८५ ॥

अथ प्रसङ्गाच्छ्रीचक्रप्रस्तारो लिख्यते ।

चक्रार्थमच्छमसृणां चतुरश्रक्लृप्ता-
मुर्वीं षडुत्तरनवत्यभिधाङ्गुलाढ्याम् ।
कृत्वाथ सूत्रयुगलं प्रतिपादयेत् त-
न्मध्येऽथ पूर्वपरदक्षिणसौम्यगाग्रम् ॥ ८६ ॥

१. 'ञ्पाशांश्च द' क. ख. ग. पाठः. २. 'कपालाख्य', ३. ...जाम्' घ. पाठः. ४. 'सृ' ख. ग. पाठः

अथ पञ्चविंशोऽध्यायः ।

अथेन्द्राद्यन्यदैवतध्यानम्[1] । पूर्वमिन्द्रः ।

उपवने मरुतामथ नन्दने
व्र(त)तिगेहलसल्ललनागणे ।
कनकभासितभूमितले प्रश्रिते
विबुधशालिशतैरखिलार्थदैः ॥ १ ॥

कलितहेमलतानिकरोज्ज्वलैः
कलनिनादविहङ्गमनोरमैः ।
कनकपङ्कजसौरभवाहिना
सुरसरिन्मरुता च मनोरमे ॥ २ ॥

सुरुचिरं मणिमण्डपमुज्ज्वलं
विबुधपादपपञ्चकमध्यगम् ।
मणिमयं च तदन्तरभूतले
द्विरदवैरिमहासनमद्भुतम् ॥ ३ ॥

उपरिसंस्थितमुज्ज्वलभूषणं
तरुणभास्करकोटिसमप्रभम् ।
महितरत्नकिरीटमनोहरं
मणिमयूखविराजितकुण्डलम् ॥ ४ ॥

मसृणकुङ्कुमपङ्कपरिस्फुर-
त्तिलकशोभिललाटतटान्तरम् ।
कमललोचनमुन्नतनासिकं
मुकुरगण्डतलं मधुरस्मितम् ॥ ५ ॥

---

१. 'देवताध्या' ब. पाठः.

अधरकान्तिपराजितविद्रुमं
विगलिताङ्कशशाङ्कनिभाननम्।
विमलकम्बुविराजितकन्धरं
विविधहारलताञ्चितवक्षसम्॥ ६॥

कनकतालगतं वसुसञ्चयं
निजकरैर्दधतं निजसेविनाम्।
महितरत्नमरीचिचयोल्लस-
ज्जठरबन्धमनोरममध्यमम्॥ ७॥

विविधरत्नलसन्मणिमेखला-
कलितसूक्ष्मदुकूलविराजितम्।
अमरसिन्धुरबन्धुरनासिका-
सदृशपीनवरोरुमनोहरम्॥ ८॥

प्रपदनिर्जितकच्छपमङ्गुली-
नखमयूखजितेन्दुकराङ्कुरम्।
मुनिसुरासुरसिद्धमहोरगा-
द्यखिललोकनताङ्घ्रिसरोरुहम्॥ ९॥

त्रिभुवनैकपरायणमिष्टदं
त्रिदशनाथमनारतमाश्रये॥

अपिच —

मन्दाकिनीतटरुहत्रिदशद्रुमाधो
वृन्दारकैः परिवृतं गजराजसंस्थम्।

दोर्भ्यां सुवर्णचषकस्थमकुप्यजात-
माद्दाय साधकवराय समर्पयन्तम् ॥ १० ॥

अथवा —

धवलनलिनमध्ये सन्निषण्णं सिताङ्गं
सुरमुनिपितृसिद्धैः सेवितं सुप्रसन्नम् ।
दशशतभुजदण्डोल्लासिपीयूषकुम्भै-
रमृतजलमजस्रं स्रावयन्तं निजाङ्घ्रि ॥ ११ ॥

सुरपरिवृढमेवं चिन्तयित्वा सहस्रं
जपतु नियमयुक्तो मन्त्रं(सुवर्यनयो ?)यः ।
स तु दुरितवियुक्तो विश्वसंवादयुक्तो
गदगणरहितं वै विन्दते दीर्घमायुः ॥ १२ ॥

अपिच, ऐन्द्री गायत्री —

पारिजाततरुमूलबद्धमणिकुट्टिमोपरिसमास्थितं
पाणिपङ्कजयुगात्तरत्नकलशाभिषिक्तनिजविग्रहम् ।
पाटलाङ्गमरुणाभवस्त्रममलेन्दुसुन्दरमुखश्रियं
पाकशासनमहर्निशं नमत धर्मकामधन मोक्षदम् ॥ १३ ॥

अथवा —

अरुणाम्बुज + + + मध्यगतं
सृणिपाशशक्तिशैतकोटिकरम् ।

---

१. 'क' ख., 'कुर्वजा' क. ग. पाठः. २. 'ग', ३. 'न्तीं', ४. 'जांशे ॥' घ. पाठः. ५. 'न्त्रवर्यं' ख. ग. पाठः. ६. 'पुः । ऐ', ७. 'प', ८. 'वं जपे ॥ अ' क. ख. ग. पाठः. ९. 'ग', १०. 'टीरम' घ. पाठः.

प्रविचिन्त्य मन्त्रममुमेव जपन्
वशयेत् क्षणेन सुरपौरजनम् ॥ १४ ॥

तन्निष्टुप् —

मातङ्गारातिपीठे स्थितमतिरुचिरे नन्दने कल्पवृक्षै-
र्मन्दाराद्यैर्मनोज्ञैर्विबुधमुनिनतं तप्तकार्तस्वराभम् ।
हस्तोद्यत्स्वर्णकुम्भप्रकरपरिगलद्रत्नधाराप्रवाहान्
वर्षन्तं वाञ्छितार्थप्रदममरपतिं सुप्रसन्नं नमामि ॥ १५ ॥

अथाग्निः —

त्रिनयनमुरुतसं बद्धमौलिं सुशुक्ला-
म्बरमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्तिस्वस्तिकाभीतिहस्तं
नमत कनकमालालङ्कृतं तं कृशानुम् ॥ १६ ॥

संवादाग्निः —

धवलनलिनराजच्चन्द्रमध्ये निषण्णं
करविलसितपाशं साङ्कुशं साभयं च ।
(स)वरदममलेन्दुक्षोरगात्रं त्रिनेत्रं
प्रणमत सुरवक्त्रं मङ्क्षु संवादयन्तम् ॥ १७ ॥

समर्द्धिः —

हैमाश्वत्थसुरद्रुमोदरभुवो निर्यान्तमश्वाकृतिं
वर्षन्तं धनधान्यरत्ननिचयं रन्ध्रैः स्वकैः सन्ततम् ।
ज्वालापल्लवितस्वरोमविवरं भक्तार्तिसम्भेदनं
वन्दे धर्मसुखार्थमोक्षफलदं दिव्याकृतिं पावकम् ॥ १८ ॥

---

१. 'नु' ख. पाठः. २. 'अग्निः' घ. पाठः.

तन्त्रेदः —

(अथवा) शक्तिस्वस्तिकदर्भाक्षस्रक्(स्रुव)स्रुगभयवरान् ।
दधदमिताकल्पो वोवसु(र)वता( कनकमालिकालसितः
[॥ १९ ॥

रक्षोहाग्निः —

त्रिशूलं परशुं चैव कपालं डमरुं तथा ।
बिभ्राणमुग्रवपुषं त्रिनेत्रं चन्द्रशेखरम् ॥ २० ॥

दंष्ट्राकरालनिनदद्भ्रुकुटीकुटिलाननम् ।
बडबामुखाग्निसदृशं दहन्तं भुवनत्रयम् ॥ २१ ॥

भूतप्रेतपिशाचादीन् भक्षयन्तं महाबलम् ।
ध्यात्वाजस्रं जपेन्नित्यं रक्षोहाग्निं समाहितः ॥ २२ ॥

अथ यमः —

द्विभुजः कृष्णवर्णस्तु खड्गखेटकसंयुतः ।
करालदंष्ट्रवदनो रक्तमाल्यानुलेपनः ॥ २३ ॥

रक्तवस्त्रधरश्चोग्रः किरीटमकुटान्वितः ।
दीप्ताग्निसदृशाक्षश्च महामहिषवाहनः ॥ २४ ॥

यमस्तु तस्य पार्श्वस्थौ + + + + + + + + ।
चित्रगुप्तः कलिश्चैव द्वारपार्श्वे तु संस्थितौ ॥ २५ ॥

कृष्णश्यामानिभौ तौ च रक्तवस्त्रधृतावुभौ ।
पीठपार्श्वगतौ मृत्युसहितावु + + + + ॥ २६ ॥

नीललोहितसङ्काशौ द्वौ चामरधृतस्त्रियौ ।
पुरतः संस्थितौ विप्रौ धर्माधर्मसमाह्वयौ ॥ २७ ॥

---

१. 'दाः' क. ख. ग. पाठः. २. 'श्यामकृष्णनि' घ. पाठः.

यमः सिंहासनारूढो महिषारोहितस्तु वा ।

अथ निर्ऋतिः—

निर्ऋतिस्तु महावीरो द्विभुजो रक्षसां पतिः ॥ २८ ॥
खड्गं दक्षिणहस्ते तु वामहस्ते तु खेटकम् ।
प्रीतिहस्तधरो रौद्रः करालवदनान्वितः॥ २९ ॥
सर्वाभरणसंयुक्तो नानापुष्पैरलङ्कृतः ।

अथ वरुणः—

वरुणः शुक्लवर्णस्तु द्विभुजः पाशहस्तकः ॥ ३० ॥
सर्वाभरणसंयुक्तः करण्डमकुटान्वितः ।
पीतवस्त्रधरः शान्तो महाबलसमन्वितः ॥ ३१ ॥
यज्ञसूत्रसमायुक्तो मकरस्थासनासनः ।

अथ वायुः—

कुञ्चितभ्रूयुतो वायुः शबलाम्बरभूषितः ॥ ३२ ॥
नानाभरणसंयुक्तः केशाढ्यः सुविकीर्णकः ।
सिंहासनोपरिष्टात् तु शीघ्रयात्रोत्सुकः स्थितः॥ ३३ ॥

अथ *धनदः—

अथ सोमः—

प्रालेयामलमात्मदीधितिसुधासङ्क्रान्तलोकत्रयं
मुक्ताजालविराजिरूप्यविलसद्देशान्तरालङ्कृतम् ।
भास्वत्कैरवचारुबाहुममलक्षौमावदातं परं
वन्दे सोममरा(ज ? ल)नीलविलसत्केशं मनोनन्दनम्
[॥ ३४ ॥

१. 'तः । अथ' ख. ग. पाठः. २. 'तः । सो' घ. पाठः.

* अस्य ध्यानश्लोको मातृकासु न दृश्यते ।

अथवा,

विमलकमलसंस्थः सुप्रसन्नाननेन्दु-
र्वरदकुमुदहस्तश्चारुहारादिभूषः ।
स्फटिकरजतवर्णो वाञ्छितप्राप्तये वो
भवतु भवदभीष्टद्योतिताङ्कः (शशाङ्कः) ॥ ३५ ॥

अथ ब्रह्मा —

आषाढदण्डस्फटिकाक्षमालासुवर्णकुण्डीसरसीरुहाणि ।
बिभ्राणमारक्तजटाकलापं चतुर्मुखं पीतरुचं नमामि ॥३६॥

अथ शेषः —

अनन्तश्चतुर्भुजः सौम्यः सर्वाभरणभूषितः ।
जपापुष्पनिभाकारः करण्डमकुटान्वितः ॥ ३७ ॥
सितवस्त्रधरः शान्तस्त्रिनेत्रः पद्मसंस्थितः ।
अभयं वरदं टङ्कं शूलं चैव धृतः करैः ॥ ३८ ॥

अथ महागणपतिः —

मन्दाराद्यैः कल्पकवृक्षविशेषैर्विशिष्टतरफलदैः ।
शिशिरितचतुराशान्तर्बालातपचन्द्रिकाकुले च तले ॥३९॥
ऐक्षवजलनिधिलहरीकणजालकवाहिना च गन्धवहेन ।
संसेविते च सुरतरुसुमनःश्रितमधुपपक्षचलनपरेण ॥४०॥
रत्नमये मणिवज्रप्रवालफलपुष्पपल्लवस्य सतः ।
महतोऽधस्तादृतुभिर्युगपत्संसेवितस्य कल्पतरोः ॥ ४१ ॥
सिंहमुखपादपीठगलिपिमयपद्मे त्रिषट्ककोणोल्लसिते ।
आसीनस्त्वेकरदो बृहदुदरो दशभुजोऽरुणो गजवदनः
[॥ ४२ ॥

१. 'वि', २. 'ष्टप्राप्तये वो' घ. पाठः. ३. 'ङ्कः । आ', ४. 'स्थि' क. ख. ग. पाठः.

बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।
ध्येयो वल्लभया च पद्मकरयाश्लिष्टो ज्वलद्भूषया
विश्वोत्पत्तिविनाशसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥४३॥
करपुष्करधृतकलशस्रुतमणिमुक्ताप्रवालवर्षेण ।
अविरतधारां विकिरन् परितः साधकसमस्तसम्पत्त्यै ॥ ४४ ॥
मदजललोलुपमधुकरमालां निजकर्णतालताडनया ।
निर्वासयन् मुहुर्मुहुरमरैरसुरैश्च सेवितो युगपत् ॥ ४५ ॥
अग्रेऽथ बिल्वमभितश्च रमारमेशौ
तद्दक्षिणे वटजुषौ गिरिजावृषाङ्कौ ।
पृष्ठेऽथ पिप्पलजुषौ रतिपुष्पबाणौ
सव्ये प्रियङ्गुमभितश्च महीवराहौ ॥ ४६ ॥
ध्येयौ च पद्मयुगचक्रदरैः पुरोक्तौ
पाशाङ्कुशाख्यपरशुत्रिशिखैरथान्यौ ।
युग्मोत्पलेक्षुमयचापशरैस्तृतीया-
वन्त्यौ शुकाह्वकलमाग्रगदारथाङ्गैः ॥ ४७ ॥
ध्येयाः षट्कोणाश्रिषु परितः पाशाङ्कुशाभयेष्टकराः ।
सप्रमदा गणपतयो रक्ताकाराः प्रभिन्नमदविवशाः ॥
अग्राश्रावामोदः प्रमोदसुमुखौ (च) तमभितोऽश्रियुगे ।
पृष्ठे च दुर्मुखाख्यस्तमुमभितो विघ्नविघ्नकरौ ॥ ४९ ॥
सव्यापसव्यभागे तस्य ध्येयौ च शङ्ख(पुष्प ? पद्म)निधी ।
माक्षिकमाणिक्याभौ वर्षन्तौ धारया धनानि सदा ॥ ५० ॥

---

१. 'तुं' घ. पाठः.

सिद्धिसमृद्धी चान्ये कान्तिर्मदनावती मदद्रवया ।
द्राविणिवसुधाराख्ये मधुमत्यपि विघ्ननिधियुगप्रमदाः
[॥ ५१ ॥

अथ बीजगणपतिः—

रक्तो रक्ताङ्गरागांशुककुसुमयुतस्तुन्दिलश्चन्द्रमौलि-
र्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो बीजपूरात्तनासः ।
हस्ताग्राक्लृप्तपाशाङ्कुशरदवरदो नागवक्त्रोऽहिभूषो
देवः पद्मासनो वो भवतु नतसुरो भूतये विघ्नराजः
[॥ ५२ ॥

अथवा,

धृतपाशाङ्कुशकल्प(क)लतिकास्त्वरदश्च बीजपूरयुतः ।
शशिशकलकलितमौलिस्त्रिलोचनोऽरुणतनुश्च गज-
[वदनः ॥ ५३ ॥
भासुरभूषणदीप्तो बृहदुदरः पद्मविष्टरो ललितः ।
(ध्येयोऽनायतदोःपत्सरसिरुहः) संपदे सदा मनुजैः ॥ ५४ ॥

अपिच,

*रक्ताक्षमालां परशुं च दन्तं
भक्ष्यं च दोर्भिः परितो दधानम् ।
हेमावदातं त्रिदृशं गजास्यं
लम्बोदरं तं शिरसा नमामि ॥ ५५ ॥

आपिच,

*नमामि पाशाङ्कुशदन्तभक्ष्यसंलक्षितं त्र्यक्षमुदारकुक्षिम् ।
नागाननं नागकृतोत्तरीयमुत्तप्तहेमप्रभमेकदन्तम् ॥ ५६ ॥

---

१. 'व', २. 'ह' घ. पाठः.

---

* इमौ श्लोकौ घ-मातृकायां व्युत्क्रमेण दृश्येते ।

अथवा,

विघ्नेशं सपरश्वधाक्षवटिकादन्तोल्लसल्लड्डुकै-
दोर्भिः पाशसृणीस्वदन्तवरदाढ्यैर्वा चतुर्भिर्युतम् ।
शुण्डाग्राहितबीजपूरमुरुकुक्षिं त्रीक्षणं संस्मरेत्
सिन्दूराभमिभास्यमिन्दुशकलाद्याकल्पमब्जासनम् ॥५७॥

अथ हेरम्बः —

सिंहोपरिस्थितं देवं पञ्चवक्त्रं गजाननम् ।
दशबाहुं त्रिनेत्रं च जाम्बूनदसमप्रभम् ॥ ५८ ॥
प्रसादाभयदातारं पात्रं पूरितमोदकम् ।
स्वदन्तं सव्यहस्तेन बिभ्रतं चापि सुव्रते ! ॥ ५९ ॥
करकं चाक्षसूत्रं च परशुं मुद्गरं तथा ।
पाशाङ्कुशकरां शक्तिं देवं लम्बोदरं शुभम् ॥ ६० ॥
पीवरं चैकदन्तं चैं तुम्बुरूणां गणान्वितम् ।

अथ बालगणपतिः —

बालः प्रसूतमात्रोऽयमम्बिकाङ्के निवेशितः ॥ ६१ ॥
अतिरक्तो गजमुखो द्विरदो रत्नभूषितः ।
चषकं पुष्करे बिभ्रत् सृणिपाशौ करद्वये ॥ ६२ ॥
द्वाभ्यां कल्पलतां दोर्भ्यां डोलयन् रत्नवर्षिणीम् ।
एवं ध्यात्वा जपेन्मन्त्रं बालाख्यं गणनायकम् ॥ ६३ ॥

अथ सुब्रह्मण्यः —

सिन्दूरारुणविग्रहं सुरगणानन्दप्रदं सुन्दरं
देवं दिव्यविनोदधाममरुणाकल्पप्रकारोज्ज्वलम् ।

---

१. 'र्वैः' क. ख. ग. पाठः. २. 'स्कन्दः — सि' घ. पाठः.

नानाविभ्रमभूषणव्यतिकरं स्मेरप्रभासुन्दरं
वन्दे शक्त्यभयौ दधानमुदिताभीष्टप्रभावं गुहम् ॥ ६४ ॥

सिन्दूरारुणकान्तिमिन्दुवदनं केयूरहारादिभि-
र्दिव्यैराभरणैर्विभूषिततनुं स्व(र्णस्य ? र्गादि) सौख्यप्रदम् ।
अम्भोजाभयशक्तिकुक्कुट(व ? ध)रं रक्ताङ्गरागांशुकं
सुब्रह्मण्यमुपास्महे प्रणमतां भीतिप्रणाशोद्यतम् ॥ ६५ ॥

अथवा,

स्फुरन्मकुटपत्रकुण्डलविभूषितं चम्पक-
स्रजाकलितकन्धरं करयुगेन शक्तिं पविम् ।
दधानमथवा कटीकलितवामहस्तेष्टदं
गुरुं घुसृणभासुरं स्मरतु पीतवासोवसम्[1] ॥ ६६ ॥

अथ नागयक्षी —

गात्रं यस्याः सुनेत्रं जलधरकबरीभारमाकल्पजालैः
राजत्कुम्भीन्द्रकुम्भस्तनयुगलभरं मञ्जुमञ्जीरनादैः ।
नागानादाय पाणौ नगनगरतरूनेत्य लीलाविलासैः
संलक्ष्या नागयक्षी कलयतु कुशलं नागराजप्रिया वः
[॥ ६७ ॥

अथ शास्ता —

स्निग्धारालविसारिकुन्तलभरं सिंहासनाध्यासितं
स्फूर्जत्पत्रसुकॢप्तकुण्डलमथेष्विष्वासभृद्दोर्द्वयम् ।
नीलक्षौमवसं नवीनजलदश्यामं प्रभासत्यक-
स्फायत्पार्श्वयुगं सुरक्तसकलाकल्पं स्मरेदाद्यकम् ॥ ६८ ॥

---

१. 'सम् । अथ शास्ता' क. ख. ग. पाठः.

अथवा,

पार्श्वस्थापत्यदारं वटविटपितलन्यस्तसिंहासनस्थं
श्यामं कालाम्बराभं श्रितकरयुगलं + + चिन्तामणिं च ।
+ + निस्त्रिंशबाणासनविशिखयुतं रक्तमाल्यानुलेपं
वन्दे शास्तारमीड्यं घनकुटिलबृहत्कुन्तलोदग्रमौलिम्
[॥ ६९ ॥

अपिच —

अंसासक्तसुवर्णकर्णिकमुरोविस्तीर्णहारोज्ज्वलं
शृङ्गारोचितवेषविभ्रमसुखं श्यामांशुकं श्यामलम् ।
रक्तालेपनमाल्यदामदयितं नीलोल्लसत्कुन्तलं
वन्दे बाणशरासनोद्यतकरं वीरेशमाद्यं सदा ॥ ७० ॥

अथ प्रभा —

रक्ताकल्पोज्ज्वलां रक्तां सुरूपां कान्तयौवनाम् ।
धृतवीणां प्रभां वन्दे देवीं रक्तान्तलोचनाम् ॥ ७१ ॥

अथ सत्यकः —

तमालश्यामलं भद्रं पिङ्गलाकल्पसुन्दरम् ।
अधिज्यकार्मुकं वन्दे सत्यमव्यक्तयौवनम् ॥ ७२ ॥

अथ मिश्रमूर्तयः ।[2]

तत्र पूर्वमनुष्टुप्त्रयम् —

हेमाम्भोजे निषण्णं स्रवदमृतघटौ चक्रशङ्खौ कराब्जे-
ष्वक्षस्रक्कुण्डिकाख्ये शिरसि शशिकलां धारयन्तं सुभूषम् ।

---

१. 'कराल' ख. पाठः. २. 'र्तिः । त' क. ख. ग. पाठः.

हेमाभं पीतवस्त्रं रविशशिदहनत्रीक्षणं चित्स्वरूपं
सर्वज्ञं सर्वगं तं हरिहरविधिजं विश्वरूपं नमामि ॥ ७३ ॥

अथ शक्तिगणपतिः —

द्वाभ्यां विभ्राजमानं द्रुतकनकमहाशृङ्खलाभ्यां कराभ्यां
बीजापूरादिशुम्भद्दशभुजललितं पञ्चबीजस्वरूपम् ।
सन्ध्यासिन्दूरवर्णं स्तनभरनमितं तुन्दिलं सन्नितम्बं
कण्ठादूर्ध्वं करीन्द्रं युवतिमयमधो (तं ?) नौमि देवं
[गणेशम् ॥ ७४ ॥

अथ लक्ष्मीनारायणः —

चक्रं विद्यार्दरघटगदादर्पणान् पद्मयुग्मं
दोर्भिर्बिभ्रत् सुरुचिरतरं मेघविद्युन्निभाभम् ।
गाढोत्कण्ठाविवशमनिशं पुण्डरीकाक्षलक्ष्म्यो-
रेकीभूतं वपुरवतु वः पीतकौशेयकान्तम् ॥ ७५ ॥

अथार्धनारीश्वरः —

पाशाङ्कुशौ जपपटीमभयं च बिभ्रद्
बालेन्दुचूडमरुणाम्बुजगं त्रिनेत्रम् ।
बन्धूककाञ्चननिभोभयपार्श्वमव्या-
दर्धाम्बिकेशमनिशं रुचिरं वपुर्वः ॥ ७६ ॥

अपिच,

सिन्दूरकाञ्चनसमोभयपार्श्वमर्ध-
नारीश्वरं गिरिसुताहरभूषचिह्नम् ।

---

१. 'गन्धं ह', २. 'घ' क. ग. पाठः. ३. 'नुं' ख.
घ. पाठः

पाशाभयाक्षवलयेष्टदहस्तमेवं
स्मृत्वा न्यसेत् सकलवाञ्छितवस्तुसिद्धयै ॥ ७७ ॥

अपिच,

अरुणकनकवर्णं पद्मसंस्थं च गौरी-
हरनियमितचिह्नं सौम्यतानूनपातम् ।
भवतु भवदभीष्टप्राप्तये पाशटङ्का-
भयवरदविचित्रं रूपमर्धाम्बिकेशम् ॥ ७८ ॥

अथ शङ्करनारायणः —

ध्येयो जटामकुटचन्द्रकलार्धमूर्धा
त्रीक्षस्तरक्षजिनपीतदुकूलवासाः ।
ईशाच्युतस्त्रिशिखचक्रकपालशङ्खान्
बिभ्रत् सितासितवपुर्युचितात्मभूषः ॥ ७९ ॥

अथ सूर्यः—

रक्तासिताम्भोजधरं कराभ्या-
मादीप्तभामण्डलमध्यसंस्थम् ।
सूर्यं पिशङ्गांशुकगन्धमाल्य-
मादीप्तदिव्याभरणं नमामि ॥ ८० ॥

अथ सौरमष्टाक्षरम् —

अरुणसरोरुहसंस्थ-
स्त्रिदृगरुणोऽरुणसरोजयुगलधरः ।
कलिताभयवरदकरो
द्युतिबिम्बोऽमितभूषणस्त्विनोऽवतु वः ॥ ८१ ॥

---

१. 'ज्म' ब. पाठः.

अथ कामः —

अरुणमरुणवासोमाल्यदामाङ्गरागं
स्वकरकलितपाशं साङ्कुशाम्लेक्षुचापम् ।
मणिमयमकुटाद्यैर्दीप्तमाकल्पजालै-
ररुणनलिनसंस्थं चिन्तयेदङ्गयोनिम् ॥ ८२ ॥

अपिच,

रक्ताम्भोरुहसंस्थितं करतले कोदण्डमिक्षूद्भवं
पुष्पास्त्रं वरदाभयौ च दधतं रक्ताङ्गरागादिकम् ।
वामाङ्कस्थितयोपगूढमनिशं रत्या च दत्तेक्षणं
तद्वक्त्राम्बुरुहे मनोहरतनुं वन्दे सदा मन्मथम् ॥ ८३ ॥

अथ वीरभद्रः —

गोक्षीराभं दधानं परशुडमरुकौ खड्गखेटौ कपालं
शूलं चाभीतिदाने त्रिनयनलसितं व्याघ्रचर्माम्बराढ्यम् ।
वेतालारूढमुग्रं कपिशतरजटाबद्धशीतांशुखण्डं
ध्यायेद् भोगीन्द्रभूषं निजगणसहितं सन्ततं वीरभद्रम्
[॥ ८४ ॥

अथवा,

सितपङ्कजमध्यसंस्थमेनं सुसितं व्याघ्रनखादिबालचिह्नैः ।
उपलक्षितबालभावमाशापरिधानं कमनीयगात्रयष्टिम् ॥ ८५ ॥

अथ हनुमान् —

पिङ्गाक्षं पिङ्गकेशं शशरुधिरनिकाशास्यदोःपादपद्मं
प्रोद्यन्मार्ताण्डकोटिप्रतिमतनुगलद्रश्मिभिर्दुर्निरीक्ष्यम् ।

---

१. 'मदेवः । अ', २. 'मिलत' क. पाठः.

राकाचन्द्रांशुजालप्रसमरनखदंष्ट्रांशुसन्दोहनश्यद्-
ध्वान्ताशाचक्रवालं कपिवरमनिशं वायुपुत्रं नमामि [॥ ८६ ॥

अथवा,

वामे जानुनि वामबाहुमपरं ज्ञानाख्यमुद्रायुतं
हृद्देशे कलयन् वृतो मुनिगणैर्नासाग्रदत्तेक्षणः ।
आसीनः कदलीवने मणिमये बालार्ककोटिप्रभो
ध्यायन् ब्रह्म परं करोतु मनसः शुद्धिं हनूमान् मम [॥ ८७ ॥

अथवा,

क्रोधोद्दिमविघूर्णितारुणतरप्रोद्दान्तनेत्रद्वय-
प्रोद्यद्वह्निशिखास्फुलिङ्गनिकरप्लुष्टाहिचोरादिकम् ।
घोरं मेरुसमानदेहमरुणश्रोत्रास्यपादस्थलं
वन्दे मारुतिमाञ्जनेयमनिशं दंष्ट्राकरालाननम् ॥ ८८ ॥

अथ गरुडः —

आजानूत्तप्तहेमप्रभमथ + हिमप्रख्यमानाभि साक्षा-
दा कण्ठात् कुङ्कुमाभं भ्रमरकुलसमश्यामलं मूर्ध्नि शान्तम्।
व्याप्तब्रह्माण्डगर्भं द्विभुजमभयदं पिङ्गनेत्रोग्रतारं
तार्क्ष्यं नीलाग्रनासाद्युतिविविधमहापक्षलक्ष्यं नमामि [॥ ८९ ॥

अपिच,

पायाद् देवो गरुत्मानमृतघटगदाशङ्खचक्रासिना(गा)न्
बिभ्राणः कृष्णपादो निजकरकमलैरष्टभिः स्वर्णवर्णः ।

१. 'मृ' च. पाठः. २. 'र्णो' क. ख. ग. पाठः.

पापघ्नैः पक्षवातैरखिलविषहरैराश्रितार्तिघ्नवृत्तः
श्रीमान् वः पन्नगारिः सकलविषभयाद् रत्नजालोज्ज्वलाङ्गः
[॥ ९० ॥

अथाश्विनौ[1] —

एकसिंहासनासीनावश्विनावश्वरूपिणौ ।
डाडिमीपुष्पसङ्काशावुभौ[2] तौ सोपवीतकौ ॥ ९१ ॥
फुल्लरक्तोत्पलाक्षौ च पीतस्रग्वस्त्रधारिणौ ।
करद्वयसमायुक्तौ श्रीभूषणविभूषितौ ॥ ९२ ॥
अभयं दक्षिणे हस्ते वरदं वामहस्तके ।
लम्बितौ दक्षिणं पादं वाममुत्कुटिकासनौ ॥ ९३ ॥

अथ पितरः—

पितरः पीतवर्णाभा द्विभुजाः श्वेतवाससः ।
यज्ञसूत्रसमायुक्ताः सौम्यदृग्वदनान्विताः ॥ ९४ ॥
फलके भद्रपीठे वा श्रयस्तु सहितासनाः ।

अथाप्सरसः —

दुकूलवसनाः सर्वाः पीनोरुजघनस्तनाः ॥ ९५ ॥
मध्ये क्षामा(र्धे ? श्च) सौम्याश्च किञ्चित्प्रहसिताननाः ।
नानालङ्कारसंयुक्ता भद्रपीठोपरिस्थिताः ॥ ९६ ॥
समभङ्गसमायुक्ताः सप्तसङ्ख्याप्सराः स्मृताः ।

१. 'निदेवौ । ए' क. ख. ग. पाठः. २. 'हसहासौ' क. ग. पाठः. ३. 'मयोः सो' क. ख. ग. पाठः. ४. 'मवीत' क. ग., 'मनीत' ख. पाठः. ५. 'वामकं वा' क. ख. ग. पाठः. ६. 'क्षौमादिसौ' घ. पाठः.

अथ सप्तर्षयः—

ऋषयः पीतवर्णास्तु नानावर्णाम्बरान्विताः ॥ ९७ ॥
वृद्धाश्च द्विभुजाः शान्ता जटामकुटमण्डिताः ।
बिन्दुकाहृदयान्ताश्च यज्ञसूत्रसमन्विताः ॥ ९८ ॥
भस्मनैवं त्रिपुण्ड्राढ्यौ[१] स्थानका वासनास्तु वा ।
दण्डं दक्षिणहस्ते तु च्छत्रं वामकरे धृताः ॥ ९९ ॥
छत्रदण्डौ विना वाथ सव्ये वै ज्ञानमुद्रिकाम् ।
वामजानूपरिन्यस्तवामहस्तसमन्विताः ॥ १००

एकादशरुद्राः—

चतुर्भुजास्त्रिनेत्राश्च जटामकुटमण्डिताः ।
शुक्लवस्त्रधराः सर्वे शुक्लवर्णाः प्रकीर्तिताः ॥ १०१ ॥
अभयं परशुः सव्ये कृष्णश्च वरदोऽन्यतः ।

अथ क्षेत्रपालः—

त्रिविधः क्षेत्रपालस्तु सात्त्विको राजसोऽन्तिमः ॥ १०२ ॥
श्वेतो रक्तस्तथा कृष्णः सात्त्विकादिगुणाद् भवेत् ।
शूलं दक्षिणहस्ते तु कपालमितरे स्मृतम् ॥ १०३ ॥
द्विभुजं ह्येवमाख्यातं चतुर्हस्तमथोच्यते ।
वरंहस्ते तु सव्ये तु वामे डमरुकं न्यसेत् ॥ १०४ ॥
अथवा पूर्वहस्तौ द्वौ वरदाभयसंयुतौ ।
पूर्ववत् परहस्तौ द्वौ घण्टा वा वामहस्तके ॥ १०५ ॥
सात्त्विकं ह्येवमाख्यातमथ राजसमुच्यते ।
शूलं खड्गं[२] च घण्टा च दक्षिणे तु करत्रये ॥ १०६ ॥

---

१. 'ढ्यं', २. 'ख्या' घ. पाठः.

खेटकं च कपालं च नागपाशमदक्षिणे ।
तामसे तु धनुर्बाणं दक्षिणेऽदक्षिणे धृतम् ॥ १०७ ॥
शेषं राजसवत् ख्यातं रक्तकेशोर्ध्वमण्डलम् ।
उग्रदृष्टिसमायुक्तं नानानागविभूषितम् ॥ १०८ ॥
त्रिनेत्रं नग्नरूपं च क्षेत्रपालमिमं विदुः ।

अथवा,

व्यालम्बाग्रजटाधरं त्रिनयनं नीलाञ्जनाद्रिप्रभं
दोर्दण्डात्तकपालशूलमरुणस्रग्वस्त्रगन्धोल्बणम् ।
घण्टामेखलघर्घर(स्वनिनि ? ध्वनिमि)लद्धुङ्कारभीमं विभुं
वन्दे संहितसर्पकुण्डलधरं तं क्षेत्रपालं सदा ॥ १०९ ॥

अपिच,

दंष्ट्रोग्रदन्तुरमहीश्वरभोगभूष-
माशाम्बरं करधृतोग्रगदाकपालम् ।
वृत्तोग्रचक्षुषमुदग्रपिशङ्गकेशं
तं क्षेत्रपालमनिशं + महं नमामि ॥ ११० ॥

अथ वामनः[1] —

कृष्णाजिन्युपवीती स्याच्छत्री धृतकमण्डलुः ॥ १११ ॥
कुण्डली शिखया युक्तः कुब्जाकारो मनोहरः ।

अथ नृवराहः —

नृवराहं प्रवक्ष्यामि सूकरास्येन शोभितम् ॥ ११२ ॥
गदापद्मधरं धात्रीं दंष्ट्राग्रेण समुद्धृताम् ।
बिभ्राणं कोर्परे वामे विस्मयोत्फुल्ललोचनाम् ॥ ११३ ॥

---

१. 'नमूर्तिः —' घ. पाठः.

नीलोत्पलधरां देवीमुपरिष्टात् प्रकल्पयेत् ॥ ११४ ॥
दक्षिणं कटिसंस्थं च बाहुं तस्य प्रकल्पयेत् ।
कूर्मपृष्ठे पदं चैकमन्यन्नागेन्द्रमूर्धनि ॥ ११५ ॥
अथवा सूकराकारं महाकाय कचिल्लिखेत् ।
तीक्ष्णदंष्ट्राग्रघोणास्यस्कन्धकर्णोर्ध्वरोमकम् ॥ ११६ ॥

*अथ नृसिंहः —*

नरसिंहाकृतिं वक्ष्ये रौद्रसिंहमुखेक्षणाम्[1] ।
भुजाष्टकसमायुक्तां स्तम्भपीनसमाश्रिताम् (?) ॥ ११७ ॥
हिरण्यकशिपुं दैत्यं दारयन्तीं नखाङ्कुरैः ।
ऊरोरुपरि विन्यस्य खड्गखेटकधारिणम् ॥ ११८ ॥
तस्यान्त्रमालां निष्कृत्य बाहुयुग्मेन बिभ्रतीम् ।
मध्यस्थिताभ्यां बाहुभ्यां दक्षिणे चक्रपङ्कजम् ॥ ११९ ॥
कौमोदकीं गदां शङ्खं बाहुभ्यामिति वामतः ।
नीलोत्पलपदच्छायां किं वा चम्पकसप्रभाम् ॥ १२० ॥
तप्तकाञ्चनसंकाशां बालार्कसदृशीं लिखेत्[2] ।

त्रिविक्रमः—

तथा त्रिविक्रमं वक्ष्ये वामपादेन मेदिनीम् ॥ १२१ ॥
आक्रामन्तं द्वितीयेन साकल्येन नभस्तलम् ।

*अथ मत्स्यमूर्तिः —*

मत्स्यावतारिणं देवं मत्स्याकारं प्रकल्पयेत् ॥ १२२ ॥

*अथ कूर्मः —*

कूर्मावतारिणं देवं कमठाकृतिमालिखेत् ।

---

१. 'पिङ्गमु' घ. पाठः. २. 'स्तब्धधी' क. ख. पाठः.

अथ ब्रह्मा —

लिखेच्चतुर्मुखं देवं चतुर्बाहुं शुभेक्षणम् ॥ १२३ ॥
रत्नकुण्डलसंयुक्तं लम्बकूर्चोपवीतिनम् ।
कृष्णाजिनधरं गौरं शुक्लाम्बरविराजितम् ॥ १२४ ॥
दक्षिणं वरदं हस्तं तत्रान्यं शुभधारिणम् ।
कमण्डलुधरं वामं तथान्यं संयुतं शुचा ॥ १२५ ॥
बिभ्राणं चतुरो वेदान् पुरतश्चास्य विन्यसेत् ।
वामे पार्श्वे तु सावित्रीं दक्षिणे तु सरस्वतीम् ॥ १२६ ॥
आज्यस्थालीं पुरोभागे महर्षींश्च समन्ततः ।
हंसारूढं लिखेत् क्वापि क्वचिच्च कमलासनम् ॥ १२७ ॥
स्रष्टारं सर्वलोकानां ब्रह्माणं परिकल्पयेत् ।

अथ कुमारः —

विलिखेत् षण्मुखं देवं मयूरवरवाहनम् ॥ १२८ ॥
तरुणादित्यसङ्काशं बालभूषणभूषितम् ।
स्थानीये खेटके वापि कुमारो लिख्यते यदा ॥ १२९ ॥
भुजा द्वादश कुर्वीत खर्वटे चतुरो भुजान् ।
ग्रामे वने द्विबाहुः स्याल्लेखनीयो विचक्षणैः ॥ १३० ॥

अथ नागः —

नागानां वक्ष्यते रूपं नाभेरूर्ध्वं नराकृति ।
सर्पाकारमधोभागं मस्तके भोगमण्डलम् ॥ १३१ ॥
एकं फणं त्रयं वापि पञ्च वा सप्त वा नव ।
द्विजिह्वास्ते विधातव्याः खड्गचर्मकरैर्युताः ॥ १३२ ॥

१. 'द्वा' ग. पाठः. २. 'पत्रक' ष. पाठः.

अथासुराः —

किरीटकुण्डलोपेतास्तीक्ष्णदंष्ट्रा भयानकाः ।
नानाशस्त्रधराः कार्या दैत्याः सुरगणद्विषः ॥ १३३ ॥

अथ दानवाः —

दानवा विकृताकारा भ्रुकुटीकुटिलाननाः ।
किरीटेन च कुब्जेन मण्डिताः शस्त्रपाणयः ॥ १३४ ॥
दंष्ट्राकरालवदना भ्रुकुटीकुटिलेक्षणाः ।
नानारूपा महाकाया नानाशस्त्रधरास्तथा ॥ १३५ ॥

अथ पिशाचाः —

उत्पर्व[१]कृशकायास्ते चारास्थिस्नायुविग्रहाः ।
ह्रस्वकीर्णशिरोजाः स्युः पिशाचाश्चित्रकर्माणि ॥ १३६ ॥

अथ वेतालाः —

ईदृशा एव वेताला दीर्घदेहाः कृशोदराः ।
कपोलैः पूर्वजैर्मुक्ता लेखनीया मनीषिभिः ॥ १३७ ॥

अथ ग्रहाः ।

रक्तवर्णो महातेजा द्विबाहुः पद्मभृद् रविः ।
सप्तभिस्तुरगैर्युक्ते सर्परज्जुसमन्विते ॥ १३८ ॥
एकच[२]क्रे रथे तिष्ठन् पादाक्रान्तसरोरुहः ।
माणिक्यकुण्डलोपेतः पद्मरागकिरीटकः ॥ १३९ ॥
रक्ताम्बरधरो रम्यः सुव्यक्ताङ्गो मनोहरः ।
अनूरुः सारथिः कार्यः प्रतीहारौ च पार्श्वयोः ॥ १४० ॥

१. 'क' क. ख. ग. पाठः. २. 'क्र' घ. पाठः.

चण्डपिङ्गलनामानौ खड्गखेटकधारिणौ ।
चन्द्रश्रित्रे विधातव्यः श्वेताम्बरसमावृतः ॥ १४१ ॥
दशश्वेताश्वसंयुक्तमारूढः स्यन्दनं शुभम् ।
द्विभुजो दक्षिणे पाणौ गदां बिभ्रत् पृथूदरीम् ॥ १४२ ॥
वामस्तु वरदो हस्तः शशाङ्कस्य निरूप्यते ।
धरापुत्रस्य वक्ष्यामि लक्षणं चित्रकर्मणि ॥ १४३ ॥
चतुर्भुजो मेषगमश्चाङ्गारकसमद्युतिः ।
दक्षिणं पुस्तकं हस्तं वरदं परिकल्पयेत् ॥ १४४ ॥
ऊर्ध्वे शक्तिसमायुक्तं वामौ शुक्लगदाधरौ ।
सिंहारूढं सम्प्रवक्ष्ये कर्णिकारसमप्रभम् ॥ १४५ ॥
पीतमाल्याम्बरधरं स्वर्णभूषाविभूषितम् ।
वरदं खड्गसंयुक्तं खेटकेन समन्वितम् ॥ १४६ ॥
गदया च समायुक्तं बिभ्राणं दोश्चतुष्टयम् ।
एवं लिखेच्चन्द्रसूनुं बुधं ग्रहपतिं वरम् ॥ १४७ ॥
ततो देवगुरुर्लेख्यः शुक्रश्च भृगुनन्दनः ।
चतुर्भिर्बाहुभिर्युक्तश्चित्रकर्मविशारदैः ॥ १४८ ॥
वरदौ साक्षसूत्रौ च कमण्डलुधरौ तथा ।
दण्डिनौ च तथा बाहू बिभ्राणौ परिकल्पयेत् ॥ १४९ ॥
सौरिं नीलसमाभासं गृध्रारूढं चतुर्भुजम् ।
वरदं वामसंयुक्तं चापशूलधरं लिखेत् ॥ १५० ॥
सिंहासनगतं राहुं करालवदनं लिखेत् ।
वरदं खड्गसंयुक्तं खेटशूलधरं क्रमात् ॥ १५१ ॥

१ 'बद्धकं' क. ग. पाठः, 'तद्धरं ह' ब. पाठः.

धूम्रा द्विबाहवः सर्वे वरदाश्च गदाधराः ।
गृध्रपृष्ठसमारूढा लेखनीयास्तु केतवः ॥ १५२ ॥

अथवा,

प्रागादिदिशासंस्थाः
शशिगुरुबुधभार्गवाः क्रमेण स्युः ।
आग्नेयादिष्वग्निषु
धरणिजमन्दाहिकेतवः पूज्याः ॥ १५३ ॥
शुभ्रसितपीतशुक्ला
रक्तासितधूम्रकृष्णकाः क्रमशः ।
चन्द्राद्याः केत्वन्ता
वामोरुन्यस्तवामकरलसिताः ॥ १५४ ॥
अपरकराभयमुद्रा
विकृतमुखोऽहिः कराहिताञ्जलियुक् ।
दंष्ट्रोग्रास्यो मन्दः
सुवर्णसदृशांशुकादिभूषश्च ॥ १५५ ॥
अरुणसरोरुहसंस्थ-
स्त्रिदृगरुणोऽरुणसरोजयुगलधरः ।
कलिताभयवरदकरो
द्युतिबिम्बोऽमितभूषणस्त्विनोऽवतु वः ॥ १५६ ॥

अथ गृध्राः —

गृध्राः किरीटिनः कार्या नवतालप्रमाणकाः ।
रत्नकुण्डलकेयूरहाराभरणभूषिताः ॥ १५७ ॥

इति शिल्परत्ने उत्तरभागे इन्द्रादिदेवताध्यानप्रकरणं नाम
पञ्चविंशोऽध्यायः ॥

---

१. 'ताम्र' ख. पाठः.

*अथ षड्विंशोऽध्यायः ।

अथ बिम्बदोषाः ।

मांसवर्णैर्नखैर्वाथ पद्मताम्रनिभैस्तथा ।
संयुक्ताः प्रतिमा यत्र तत्रस्थाः सुखिनो नराः ॥ १ ॥
†श्वेतैर्नखैर्दुःखिनश्च शूलाग्रैः स्फटिकोपमैः ।
दरिद्रतां भ(व ? ज)न्त्येव तथैव हरितै(र्नखैः) ॥ २ ॥
(अङ्गुल्यः) प्रोन्नताग्राश्चेद् भवन्ति सुखदाः सदा ।
पादाङ्गुष्ठमतिक्रम्य प्रदेशिन्यनिवर्तयेत् (?) ॥ ३ ॥
लभन्ते तत्रदेशस्था नारीभोगमनुत्तमम् ।
कनिष्ठायां तु दीर्घायां बहुवित्तकरो भवेत् ॥ ४ ॥
अङ्गुल्यः कुटिलाः शुष्का विरला दुःखभागिनः ।
अस्वेदनौ मृदू रक्तौ पुष्टौ चारुदलाविव ॥ ५ ॥
लग्नाङ्गुली सुपार्ष्णी च सिराविरहितौ तथा ।
मांसलौ गूढगुल्फौ च कूर्मपृष्ठसमावपि ॥ ६ ॥
भवेतां चरणौ यस्य तत्रस्था राजवल्लभाः ।
विवृतौ शूर्पसङ्काशौ सस्वेदौ ह्रस्वपाण्डरौ ॥ ७ ॥
रोमशौ चरणौ यस्य तत्रस्था दुःखभागिनः ।
दीर्घपादतले रेखा हलाङ्कुशनिभा यदि ॥ ८ ॥
सार्वभौमत्वदं लक्ष्म तदि(नं ? दं) नात्र संशयः ।
क्रमाद् वृत्ते प्रशस्येते जङ्घे स्निग्धे त्वरोमके ॥ ९ ॥

* घ-मातृकायामेतदादि पञ्चत्रिंशाध्यायारम्भावधिको भागो लुप्तः ।
† इतःप्रभृति क-मातृकायां पत्राणि पञ्च लुप्तानि ।

सिंहव्याघ्रोपमे जङ्घे धनिनां परिकीर्तिते ।
काकजङ्घो भवेद् राजा मृगजङ्घोऽपि तादृशः ॥ १० ॥
जङ्घे(व ? च)[1] मीनवद् यस्य सोऽपि साम्राज्यभाग् जनः ।
स्थूलजङ्घा दीर्घजङ्घा जायन्ते पथिगाः सदा ॥ ११ ॥
सृगालकोलजङ्घा ये ते नरा दुःखभागिनः ।
इदं तु बिम्बे सश्चिन्त्यं तथा वृत्ते च जानुनी ॥ १२ ॥
मांसले च समे शब्दहीने गूढनरास्थिनी ।
किञ्चिदुन्नतयुक्ते तु भवेतां सर्वमङ्गले ॥ १३ ॥
ऊरू करिकराकारौ रोमभिः परिवर्जितौ ।
सुश्लक्ष्णौ निबिडौ नातिस्थूलौ नातिकृशौ वरौ ॥ १४ ॥
सुखदं मांसलं स्फिक् चेद् व्याघ्रभेकस्फिगेव हि ।
तथैव दुःखदं ज्ञेयं शुष्कस्फिक् नैव संशयः ॥ १५ ॥
मृगेन्द्रकटिसङ्काशकटिश्चेत पार्थिवत्वदा ।
कामित्वं स्यात् कोलकटेः++++++++॥ १६ ॥
कर्कटोष्ट्रकटिस्तद्वत् श्वकटित्वं सुतापहम् ।
मेहनं धनदं ह्रस्वं स्थूलं पुत्रार्थनाशदम्[2] ॥ १७ ॥
(अ ? पु)त्रवृद्धिकरं ज्ञेयमेतद् दक्षिणतोन्नतम् ।
मणिनी सोन्नते स्निग्धे धनस्त्रीरत्नभाजनम् ॥ १८ ॥
मध्यनिम्ने भवेन्निःस्वो मध्यादग्रे विशेषतः ।
ईषद्रक्ते समृद्धिः स्यात् पाण्डरे धनहीनता ॥ १९ ॥

---

१. 'मिनव' ख. ग. पाठः. २. 'व' ग. पाठः.

मणौ च मलिनच्छाये दारिद्र्यमुपजायते ।
मुष्कयोरुभयोः साम्ये राजराजत्वमाप्नुयात् ॥ २० ॥
लम्बयोर्ह्रस्वयोश्चैव मुष्कयोर्दीर्घजीविनः ।
एक एव यदा मुष्कस्तदा स्यान्मरणं जलात् ॥ २१ ॥
वृत्तविस्तीर्णगम्भीरनाभौ सुखमतीव हि ।
विषमा बिलमध्यस्था नाभिर्दारिद्र्यकारिणी ॥ २२ ॥
दक्षिणावर्तनी शस्ता वामावर्तापकारिणी ।
लम्बोदरो भवेदाढ्यो बहुभोगः समोदरे ॥ २३ ॥
कृशोदरे लघुः कामी दुःखभागी महोदरे ।
घटोदरे भवेन्निःस्वस्तथैव विकृतोदरे ॥ २४ ॥
सर्पोदरे दरिद्रत्वं तथा निम्नोदरेऽपिच ।
वल्यैकया शस्त्रमृत्युः स्त्रीजितत्वं वलिद्वये ॥ २५ ॥
आर्यः स्यात् त्रिवलीयुक्ते पुंटं चतुर्वलीयुते ।
सुतुल्यौ धनदौ पार्श्वौ निर्धनाख्यौ च वक्रकौ ॥ २६ ॥
स्निग्धं विशालमुत्तुङ्गमुरश्चेद् राजलक्षणम् ।
सिरालं विषमं निम्नं वक्षश्चेद् विपदास्पदम् ॥ २७ ॥
समौ चेच्चूचुकौ भूपा लम्बितौ प्रेष्यतां गताः ।
अदृश्यौ तन्तुनाशाख्यौ विषमौ दुःखदौ स्मृतौ ॥ २८ ॥
उच्चकक्षसमायु(क्तौ ? क्ता)धनधान्यविवर्धनाः ।
समकक्षश्च तत्तुल्यो निर्धनो निम्नकक्षकः ॥ २९ ॥
दुःखी विषमकक्षः स्यादथ पृष्ठस्य लक्षणम् ।
अलग्नं मांसलं पृष्ठं मग्नवंशं शुभावहम् ॥ ३० ॥

१. 'भदं च' ग. पाठः.

निन्दितं विपरीतं चेद् दुःखदारिद्यकारणम् ।
उन्नतैर्जत्रुभिर्ज्ञेयं धनधान्यादिभोगदम् ॥ ३१ ॥
तैरेव विषमैर्निम्नैर्विज्ञेयं धनवर्जितम् ।
सुश्लिष्टौ विपुलावंसौ नि(र्म?र्वे)ली(तौ? कौ) सुखावहौ ॥
रोमशौ (बल? वलि)संयुक्तौ निर्मांसौ दुःखदायिनौ ।
बाहू करिकराकारौ वराबाजानुलम्बिनौ ॥ ३३ ॥
गूढसंश्लिष्टसन्ध्याढ्यौ विपरीतौ विवर्जितौ ।
लाक्षारुणं पीवरं च मध्ये निम्नं मनागपि ॥ ३४ ॥
तलं शुभदमाख्यातं विपरीतं विनाशकृत् ।
उन्नते दानशीलत्वं शुष्के दारिद्यदं भवेत् ॥ ३५ ॥
विषमे तु तले तद्वत् पापदं व्याघ्रपाणिकम् ।
हस्तस्याङ्गुलयो दीर्घाश्चिरजीवी नरः स्मृतः ॥ ३६ ॥
वैदुष्यदा विवलिकाः स्थूला दारिद्रयदायिनः ।
मूढत्वदा बहिर्नता पूर्वोक्तान्नखरे वदेत् ॥ ३७ ॥
शूरः स्यान्महिषग्रीवः कम्बुग्रीवः क्षमापतिः ।
शुष्कग्रीवो भवेन्निःस्वः समग्रीवः समो भवेत् ॥ ३८ ॥
अभिन्नाग्रं मृदु स्निग्धं घनं श्मश्रु प्रशस्यते ।
आरक्तं विषमं कूर्चं स्थूलरोममशोभनम् ॥ ३९ ॥
पूर्णचन्द्रसमाकारं वदनं त्वतिशोभनम् ।
निःस्वाः स्युर्दीर्घवदनाः समाना वर्तुलं मुखम् ॥ ४० ॥

१. 'र्नै' ख. पाठः. २. 'शरानां व' ग. पाठः.

चतुरश्राननाधूर्ता निम्नास्यः पुत्रवर्जितः ।
भीतास्यः पापकारी स्यादेवं वदनलक्षणम् ॥ ४१ ॥
रक्ता स्निग्धा शुभा जिह्वा पापी स्याच्छयामजिह्वकः ।
स्थूलजिह्वश्च तत्तुल्यः कृष्णजिह्वस्तथैव च ॥ ४२ ॥
कृष्णा च कर्बुराधस्ताद् रसना दुःखदा सदा ।
सुवर्णं रक्तवर्णं च तालु दुःखतरं मतम् ॥ ४३ ॥
लम्बमांसलकर्णाः स्युः पापिनः शुष्ककर्णकाः ।
शु(ष्क ? क)नासः सुखी प्रोक्तश्चिरायुः शुष्कनासिकः॥४४॥
वक्राग्रा धनदा नासा कूरा दक्षिणवक्रका ।
समाल्प + + + + + दुःखिनो मानवाः स्मृताः ॥ ४५ ॥
शङ्कुकर्णो महाभागो रोमकर्णः शतायुषः ।
विस्तीर्णकर्णा धनिनः सिंहकर्णस्तु निष्ठुरः ॥ ४६ ॥
कृपणा ह्रस्वकर्णाः स्युः सुभगाः श्याम(कर्णकाः) ।
समाल्पविवरा मूर्ध्नि नासा भाग्यप्रदायिनी ॥ ४७ ॥
धनिनः पद्मपत्राक्षा रक्तान्ताक्षास्तु श्रीप्रदाः ।
महाक्षा मधुपिङ्गाक्षा गजाक्षाश्च महत्तराः ॥ ४८ ॥
गम्भीरनेत्रा धनिनः स्थूलाक्षश्चैव तत्समः ।
सुभगाः श्यामनयना बुधा नीलोत्पलेक्षणाः ॥ ४९ ॥
अधोदृष्टिश्चोर्ध्वदृष्टिः सततं दुःखदा नृणाम् ।
पार्श्वदृष्टिश्च तत्तुल्या समदृष्टिः शुभावहा ॥ ५० ॥
जिह्माः स्युः सारमेयाक्षास्तस्करा मर्कटेक्षणाः ।
निःस्वा निर्गतनेत्राः स्युः पापा मार्जारलोचनाः ॥ ५१ ॥

१. 'न्त' ग. पाठः.

भ्रुवा + त्यन्तयाल्पायुर्विशालोन्नतया सुखी ।
भ्रुवा विषमया निःस्वो बालेन्दुनतया धनी ॥ ५२ ॥
उन्नतैर्विपुलैः शङ्खैर्भवन्ति (पि ? व)शिनो नराः ।
निम्नयार्थेन सन्त्यक्तास्तनयैश्च विवर्जिताः ॥ ५३ ॥
ललाटैर्विषमैर्निःस्वा धनिनोऽर्धेन्दुसन्निभैः ।
केशैरेकै(क)शो जातैः स्निग्धैः कृष्णैश्च कुञ्चितैः ॥ ५४ ॥
अभिन्नाग्रैश्च मृदुभिर्बहुभिस्तैर्महीपतिः ।
एकमूलैश्च बहुभिर्विषमैरतिपिङ्गलैः ॥ ५५ ॥
स्थूलैर्विशीर्णपर्यन्तैर्ह्रस्वै रूक्षैर्दरिद्रता ।
एकैकेन भवेद् रोम्णा राजा द्वाभ्यां (त्व ? तु)पण्डितः॥५६॥
त्रिभिर्निःस्वश्चतुर्भिस्तु सर्वदा दुःखभाग् जनः ।
सिंहेभवृषहंसानां गमनं शुक(हंसयोः ? बर्हिणोः)॥ ५७ ॥
गमनेनानुकुरुते यो नरः स महीपतिः ।
मेषोष्ट्रमहिषोलूकवराहबलिभु(कछविः ? कच्छुमिः)॥ ५८ ॥
समाना स्याद् गतिर्यस्य स पुमान् भाग्यवर्जितः ।
अङ्गुष्ठमध्यसन्धिस्थयवेन स्या(द्) धनी नरः ॥ ५९ ॥
अङ्गुष्ठमूलगेनापि बहुपुत्रो निरूप्यते ।
स्निग्धाभिः कररेखाभिर्निम्नाभिर्धनवान् भवेत् ॥ ६० ॥
अस्निग्धाभि(न ? र)नि(ष्ठा ? म्ना)भिर्भवेद् दारिद्र्यभाग्
[ जनः ।
मणिबन्धोत्थिता रेखास्तिस्रः करतलं गताः ॥ ६१ ॥
राज्यकारणमित्याहुः सामुद्रमतवेदिनः ।
मीनयुग्मकरः सत्री मीनपुच्छकरः सुखी ॥ ६२ ॥

आका(रा ? रो) जायते पाणौ रेखया वक्ररूपया ।
शङ्खातपत्रशिबिकागजपद्माश्वसैं(स्त्रिभिः ? भिभः) ॥६३॥
चक्रवर्ती भवेद् राजा जायते नास्ति संशयः ।
गवाढ्यो दामरूपाभिः स्वस्तिकाकृतिभिर्धनी ॥ ६४ ॥
चक्रखड्गधनुःप्रासतोमराकृतिभिर्नृपः ।
अङ्गुष्ठमूलरेखाभिः (स्थूलाभिः) पुत्रवान् भवेत् ॥ ६५ ॥
तत्रत्यसूक्ष्मरेखाभिः कन्यां जनयति ध्रुवम् ।
प्रदेशिनीतलं प्रासरेखाः स्युः शतजीविनः ॥ ६६ ॥
न्यूनाभिश्छिन्नरूपाभिर्द्रुमपातोद् भवेन्मृतिः ।
अरेखा बहुरेखाश्च मानवा धनवर्जिताः ॥ ६७ ॥
नखा दन्ता रोमकेशव्योमच्छायाः(?) सुखप्रदाः ।
समन्ताद् भूमिसंलग्नं यस्याश्चरणयोस्तलम् ॥ ६८ ॥
अष्टौ पुत्रान् प्रसूते सा पत्युः सन्तानवर्धना(त् ? न्)।
अङ्गुष्ठं समतिक्रम्य दीर्घा यस्याः प्रदेशिनी ॥ ६९ ॥
संरक्षितापि यत्नेन सा भवेद् व्यभिचारिणी ।
दीर्घा स्यान्मध्यमा यस्याः सर्वा वा चरणाङ्गुली ॥ ७० ॥
दुःशीला दुर्भगा नित्यं सा कन्या निन्दिता बुधैः ।
काकजङ्घा च या नारी या च रोमशजङ्घिका ॥ ७१ ॥
अचिरेण परिज्ञेयं वैधव्यमुभयोस्तयोः ।
अंसौ च पृथुलौ यस्याः सा दासी समुदाहृता ॥ ७२ ॥

१. 'साविभः', २. 'दा' ग. पाठः.

ऊरू कृशौ रोमशौ वा यस्याः स्यातां भुजावपि ।
भर्तारं त्वरितं हन्ति विवाहे सापि वर्जिता ॥ ७३ ॥
अश्वत्थदलसङ्काशं गूढगुह्यमणिस्थितम् ।
यस्याः सा सुभगा कन्या धन्या पुण्यैरवाप्यते ॥ ७४ ॥
नितम्बबिम्बभृद् दृष्टं विस्तीर्णं शस्यते स्त्रियाः ।
मध्यं वलित्रयोपेतं कृशं शुभमरोमशम् ॥ ७५ ॥
स्तनौ वृत्त(स्त ? घ)नौ शस्तावुरो रोमविवर्जितम् ।
ग्रीवा रेखात्रयोपेता बिम्बाकारोऽधरोऽधरः ॥ ७६ ॥
ग्रीवया स्थूलया चण्डी दरिद्रा ह्रस्वया तया ।
कुलस्य नाशिनी निम्नदीर्घया जायते पुनः ॥ ७७ ॥
श्मश्रुभिः महिता कन्या विषमश्रवणा च या ।
सा विरुद्धा भवेद् भर्तुरुत्तगेष्ठे तथोन्नना ॥ ७८ ॥
विषमा दशना यस्या विरलाः स्थौल्यभागिनः ।
पूर्वाचार्यैः परिज्ञेया भर्क्लेशकरी परा ॥ ७९ ॥
द्वितीयचन्द्रसङ्काशभ्रूयुगा समनासिका ।
ऋज्वङ्गुलीका रमणी पत्युः संपत्करी सदा ॥ ८० ॥
पार्श्वे गले ललाटे वा वामलोला(जध ? ञ्छ)नान्विता ।
तस्मिंस्तिलकिता चापि जनयेत् प्रथमं सु(ख ? त)म् ॥ ८१ ॥
प्रसन्नवदना राज्ञी लम्बकेशी तपस्विनी ।
दुःखिताबहुकेशी स्यात् सामुद्रमतमीदृशम् ॥ ८२ ॥
कोष्ठाब्जकलशाकारा रेखा यस्यास्तथैव च ।
तोरणं स्वस्तिकं चक्रं करे बाहुतलेऽपि वा ॥ ८३ ॥

---

१. 'दिष्टं' ग. पाठः.

यस्या विभाव्यते स्त्रीणामाधिपत्यं लभेत सा ।
पद्मरेखा करे वामे या विरती[1] वराङ्गना (?) ॥ ८४ ॥

इत्यादिलक्षणं युक्त्या बिम्बे चैव निरूप्यताम् ।
यदुक्तं तत्फलं सर्वं तत्र +++देदिदम् ॥ ८५ ॥

इति शिल्परत्ने उत्तरभागे बिम्बदोषलक्षणं नाम
षड्विंशोऽध्यायः ॥

अथ सप्तविंशोऽध्यायः ।

अथ पीठादिलक्षणम् ।

तत्र पूर्वं पद्मपीठं —

पद्मं तालसमुच्छ्रयं द्विगुणविस्तारं च षोढा कृते
मूले पट्टमिलांशतो द्वितयतोऽस्याधस्तनाष्टच्छदम् ।
अङ्घ्र्यूनप्रथमञ्जमध्यमुपरिष्टादष्टपत्रं त्रिभि-
र्भागैः पट्टयुतं करोतु कमलेनामात्र पीठोच्छ्रयः ॥ १ ॥

आसने शयनादौ तु तत्तद्योग्यविशालकम् ।
वृत्तं वायतवृत्तं वा पद्मं कुर्याद् यथोचितम् ॥ २ ॥

अथ नालः —

विंशत्या प्रतिमाङ्गुलैः प्रविततं वृन्ते तया सैकया
नालं सद्वितयापिवाथ वितते रष्टाचलाङ्गांशकैः ।
अन्ते हीनवितानमारचयतु ब्रह्मोपलान्तायतं
तुर्यश्रं सकलेषु वैघसमिदं वृत्तं कचिच्चैश्वरम् ॥ ३ ॥

१ 'विरतीव व' ख. पाठः.

अथ पीठं —

बिम्बे बिम्बोच्छ्रयसमसमायामविस्तारयुक्तं
स्वव्यासार्धोच्छ्रयपरिगतं च प्रकुर्वीत पीठम् ।
लिङ्गव्यासत्रिगुणितवितत्यायतिभ्यां समेतं
लिङ्गे स्वाष्टाश्रकसमसमुच्छ्रायि तुर्यश्ररूपम् ॥ ४ ॥

पूजांशद्विगुणं हीनं श्रेष्ठं लिङ्गान्ततः समम् ।
नवैते लिङ्गविस्तारास्तयोर्मध्येऽष्टभाजिते ॥ ५ ॥
विस्तारार्धोच्छ्रयं नीचं श्रेष्ठं द्वित्र्यंशकं ततः ।
विष्कम्भत्रिगुणं वाथ नाहतुल्यं विशालकम् ॥ ६ ॥
गर्भव्यासत्रिभागैकं चतुर्भागैकमेव वा ।
त्रिष्कम्भकर्णत्रिगुणं द्विगुणं वापि विस्तृतम् ॥ ७ ॥
पीठं कुर्यात्तु विष्ण्वंशसमानोच्चं हि सर्वथा ।
मण्डनाय स्वविस्तारादष्टांशमधिकं ततः ॥ ८ ॥
सर्वेषामपि पीठानां जन्मान्तं मूलविस्तृतिः ।
पीठाग्रस्य च विस्तारः स्यान्महापट्टिकान्तकम् ॥ ९ ॥
नागरादित्रयाणां तु पीठलक्षणमुच्यते ।
त्रिखण्डलिङ्गायामेन तुल्यव्यासमिहोत्तमम् ॥ १० ॥
इत्यादिपूर्वगदितैनवकं नागरे स्मृतम् ।
त्रेसरेऽप्युत्तमं त्वेवं नीचे तन्नवसप्तकम् ॥ ११ ॥
तयोर्मध्येऽष्टधा भक्त्वा पीठव्यासा नव स्मृताः ।
अष्टांशे ब्रह्मविष्ण्वंशे त्रिद्येकांशमधस्त्यजेत् ॥ १२ ॥

१. 'णकवि' ख. पाठः. २. 'त्र्यं', ३. 'तं', ४. 'चै',
५. 'भक्त्वा' ग. पाठः.

शेषमानं तु नीचादि पीठोच्चं द्राविडे मतम् ।
अथ वेसरलिङ्गस्य द्व्यष्टांशे परिणाहके ॥ १३ ॥
मुख्यं हि तत्समं व्यासं जगत्यंशैस्तथा समम् ।
विष्णुतुल्योच्छ्रयं तत्र स्याच्च चतुर्थांशाधिकं तु वा ॥ १४ ॥
सर्वेषामपि लिङ्गोच्चं पीठोच्चादवशेषितम् ।
पीठमूलस्य विस्ताराद् वसुनन्ददिगंशकैः ॥ १५ ॥
हीनः पीठाग्रविस्तारो हीने मध्ये तथोत्तमे ।
नागरादित्रयं पीठं क्रमेण सुसमाहितम् ॥ १६ ॥
चतुरश्रं च वस्वश्रं वृत्तं चैतत् त्रिधा मतम् ।
पीठं निष्कललिङ्गानां विज्ञेयं सर्वतः समम् ॥ १७ ॥
आयतं प्रतिमानां स्यात् सकले वार्धचन्द्रकम् ।
चतुर्दशांशे पीठोच्चे भागात् स्यान्मूलपट्टिका ॥ १८ ॥
पद्मं त्रिभिर्धृगधांशमर्धेनाब्जं ततो भवेत् ।
वृत्तं द्व्यंशं पुनः पद्ममर्धमर्धेन कम्पकम् ॥ १९ ॥
सार्धद्व्यंशेन कण्ठोच्चमर्धेनोर्ध्वाम्बुजं स्मृतम् ।
अर्धेन कम्पो द्व्यंशः स्यात् क्रमेणैवोर्ध्वपट्टिका ॥ २० ॥
कम्पाद्यधारिण्यर्धेन स्यादेवं मेरुसुन्दरम् ।
अष्टादशांशे पीठोच्चे जन्म द्व्यंशमिहोदितम् ॥ २१ ॥
चतुर्भिर्जगतीं कुर्यात् कुमुदं त्रिभिरेकतः ।
कम्पं कण्ठमथैकेन स्वकपाशादब्जमन्ततः ॥ २२ ॥
वृत्तं चतुर्भिस्त्वंशेन पद्ममर्धेन कम्पकम् ।
त्रिभिः कण्ठं तथांशेन वाजनं त्वथ भागतः ॥ २३ ॥

१. 'तस्य चतु' ग. पाठः.

नि(द्रवं ? द्रां तु) पट्टिकां द्व्यंशादर्धात् पद्माज्यधृग् भवेत् ।
लक्ष्मीसुन्दरसंज्ञं तु पीठमेवं प्रसिध्यति ॥ २४ ॥

पीठोच्चे षोडशांशे तु वाधिभूतकराब्धिभिः ।
करेणैकेन जगतीमब्जं वेत्रं च पङ्कजम् ॥ २५ ॥

पट्टिकामाज्यधारां च विष्णुसम्मीलनाभिधे ।
अष्टादशांशे पीठोच्चे भवेत् सार्धांशतः खुरम् ॥ २६ ॥

सार्धत्रयेण जगती सार्धेनाब्जं धृगर्धतः ।
पट्टं चार्धेनोपपट्टं कण्ठं त्र्यंशं तदूर्ध्वतः ॥ २७ ॥

उपपट्टं करोत्वर्धं पट्टमर्धेन चोपरि ।
द्व्यंशं वाजनमुद्दिष्टमर्धं पट्टाज्यधृग् भवेत् ॥ २८ ॥

पद्मभद्रमिदं पीठं विज्ञेयमतिशोभनम् ।
धृत्यंशे पीठतुङ्गे तु घृतवार्यर्धतः स्मृता ॥ २९ ॥

अर्धेन कम्पः सार्धाभ्यां भागाभ्यां वाजनं भवेत् ।
पट्टोपपट्टावर्धाभ्यां कण्ठोऽंशौ पट्टमर्धतः ॥ ३० ॥

उपपट्टोर्ध्वमष्टाश्रः कुम्भः स्याच्चतुरंशतः ।
पद्मांशा जगती तद्वत् सार्धांशेन खुरं भवेत् ॥ ३१ ॥

एतत् सामाङ्गभद्राख्यं पीठं भवति शोभनम् ।
अत्यष्टयंशे तु पीठोच्चे खुरं भागेन वप्रकम् ॥ ३२ ॥

चतुर्भिश्च दलं सार्धादर्धं कम्पो धृगंशतः ।
कम्पोर्ध्वमुर्धेनाम्भोजं वृत्तं (चावर्ति ? द्वावर्ध)तो दलम् ॥

पट्टमर्धेन कण्ठोंऽशः कम्पोऽर्धेनार्धमम्बुजम् ।
द्व्यंशं वाजनमर्धेन पद्मं क्षेपणमर्धतः ॥ ३४ ॥

एतद्धि रुद्रकान्ताख्यं पीठमुक्तं सुशोभनम् ।
अतिधृत्यंशिते पीठे भागं भूगतमंशकौ ॥ ३५ ॥

वप्रं महाब्जं वेदांशैर्धृगर्धं वेत्रमंशतः ।
अर्धं गलं चार्धमब्जं वृत्तमध्यर्धतो भवेत् ॥ ३६ ॥

अर्धेनोर्ध्वदलं कुर्याद् वेत्रमंशं धृगर्धतः ।
अंशेन वेत्रं सार्धांशैस्त्रिभिरूर्ध्वाम्बुजं भवेत् ॥ ३७ ॥

अध्यर्धं घृतभृच्चेति सोमकान्तमुदीरितम् ।
पीठोच्चे षोडशांशे तु भागाभ्यां मूलपट्टिका ॥ ३८ ॥

महापद्मं तु वेदांशैर्धृगर्धेनांशतो गलम् ।
अर्धेन पद्मं वृत्तं तु (भागेनार्धेन पङ्कजम् ॥ ३९ ॥

धृगर्धमूर्ध्वपद्मं तु) चतुर्भिरथ पट्टिका ।
द्व्यंशेन घृतभृत् प्रोक्तमेतत् सर्वाङ्गभद्रकम् ॥ ४० ॥

पीठोच्चे षोडशांशेऽब्धिशरार्धैकार्धसागरैः ।
नेत्रेन्दुभिर्जगत्यब्जधृग्वेत्रं धृक् चपङ्कजम् ॥ ४१ ॥

पट्टिका चाज्यभृच्चेति श्रीकरे स्याद् यथाक्रमम् ।
एकस्मिन्नेव सार्धांशाज्जगत्यर्धेन कम्पकम् ॥ ४२ ॥

(पट्टिकाधः स्ववेदांशात् सकम्पा पुष्टिवर्धने ।
पीठोदये षोडशांशे खुरं द्व्यंशमथार्धतः ॥ ४३ ॥

क्षेपणं सार्धवेदांशैः) पद्ममर्धेन कम्पकम् ।
धृगर्धं वप्रमेकं स्यादूर्ध्वाब्जं वेदभागतः ॥ ४४ ॥

अ(ध: ? धं) क्षेपणमंशौ द्वौ पट्टिकार्धेन चाज्यधृक् ।
सामान्यं नागरादीनां सौम्यं पीठमिदं स्मृतम् ॥ ४५ ॥

एवं द्वादशभेदेन पीठानां लक्ष्म वर्णितम् ।

अथ सामान्यपीठं—

ह्यष्टांशे शिवपीठके क्षितिशराब्धीन्द्वंशकैः पादुकं
प्राद्ध्माज्जगतीं तथा कुमुदकं तत्पट्टिकां च क्रमात् ।
अंशाभ्यां गलमंशकेन गलपट्टिं जागतेऽर्ध्यांशिनि
ग्रीवान्तेऽर्धयुतद्वयेन वलभिं शिष्टेन पट्टिं सदा ॥ ४६ ॥

चतुर्दशप्रकारेण पीठानीत्यब्रवीन्मयः ॥ ४७ ॥

वेदर्तुवसुसूर्याश्रैः षोडशाश्रं च वर्तुलम् ।
एतेषामायतैः षड्भिस्त्र्यश्रं चार्धेन्दुसन्निभम् ॥ ४८ ॥

पीठे मुक्त्वा प्रतिष्ठाविधिमुदधिविभागं विधायात्रशिष्टं
द्वाभ्यामाधाय पाथोवलयमुदकधात्रीं विधायांशकेन ।
शिष्टेनाधाय तद्वेष्टनमथ तदुद(यः ? क्) त्र्यंशविस्तारदैर्घ्यं
कुर्यादष्टाश्रमाशांशककृतजलकुल्यं कुशाग्रं प्रनालम् ॥४९॥

प्राक्प्रत्यङ्मुखबिम्बानां पीठमुत्तरनालकम् ।
दक्षिणोदङ्मुखानां तु पूर्वनालं प्रकल्पयेत् ॥ ५० ॥

पीठव्यासत्रिवेदांशं नालमूलस्य विस्तृतम् ।
आयामं तत्समं तस्मात् त्रिचतुर्भागह्रापनात् ॥ ५१ ॥

कुर्यान्नालाग्रविस्तारं तन्मूलविकृतौ पुनः ।
मूलादर्धत्रिभागं वा गोमुखाकारमाचरेत् ॥ ५२ ॥

गजोष्ठसदृशं वाथाप्युन्नताग्रं मनाक् शुभम् ।
नालतारत्रिभागैकं खातं व्यासांशतः समम् ॥ ५३ ॥
पीठमध्ये तु कौबेर्यां नालमित्थं प्रकल्पयेत् ।
स्यादूर्ध्वपट्टबहलं समं पादाधिकं तु वा ॥ ५४ ॥
अध्यर्धं वाव्यभृद्व्यासो मूल(षा ? खा)तं च तत्समम् ।
आलिङ्गमूलपर्यन्तं तत् क्रमेणोन्नतं भवेत् ॥ ५५ ॥
पीठोपलं त्वेकभागं ह्येकमेवोर्ध्वमण्डनम् ।
अधोमण्डनमेकं वा स्यान्नैकं चोपपत्तितः ॥ ५६ ॥
तत्र मध्यं (ज ? वि)ना कोणं सन्धयेत् सुन्दरं यथा ।
उपर्यङ्गावसानं तदूर्ध्वसन्धानमाचरेत् ॥ ५७ ॥
शिवभागस्त्वधःपीठान्न किञ्चिदवलम्बनम् ।
उन्नतोऽपि च दोषाय तस्मात् तौ परिवर्जयेत् ॥ ५८ ॥
निस्सन्धिकं भवेत् पीठं प्रशस्तं शिलयैकया ।
तदलाभेऽप्येकयैव प्रकुर्यादूर्ध्वमण्डनम् ॥ ५९ ॥
क्षुद्रे महति मध्ये च स्यादधः सन्धिमण्डनम् ।
उपर्युपरि पीठानां सन्धिरङ्गावसानके ॥ ६० ॥
नालमध्ये तथा मध्ये कर्णे सन्धिर्न शस्यते ।
युञ्ज्याद् दक्षिणे वामे दीर्घादीर्घं यथाक्रमम् ॥ ६१ ॥
त्रिखण्डं नैकखण्डं वा युक्त्या कुर्यादधोगतम् ।

अथ पादशिला —

विम्बे नपुंसकशिलां निजनालमूल-
विस्तारतोऽधिचरणांशदलांशतानाम् ।

द्विघ्नप्रथां च विदधीत निजप्रथार्ध-
पादोनतत्समसमुच्छ्रयसंप्रपन्नाम् ॥ ६२ ॥
भक्त्वा त्रिधाङ्घ्रिद्वयदुच्छ्रयमेकमंशं
पीठे द्विभागमुपवेशयतूर्वरायाम् ।
द्वयेकार्धताङ्गुलिमितं खनतूत्तमादि-
ब्रह्माश्ममूर्ध्न्युचितनालनिवेशनाय ॥ ६३ ॥

लिङ्गायामसमो नपुंसकशिलाव्यासो वरिष्ठोऽवरः
पूजांशद्विगुणस्तदन्तरमितावष्टांशितायां क्रमात् ।
अंशद्वयोधममध्यमादिकविधिर्व्यासार्धतोऽङ्घ्रयन्तिम-
श्चोत्सेधश्च तथात्र लिङ्गविनिवेशार्हश्च कार्योऽवटः ॥ ६४ ॥

अथवा लिङ्गविष्कम्भाच्छ्रेष्ठा स्याद् द्विगुणा घना(त्) ॥
विस्ताराघ्यर्धतो नीचा भवेद् ब्रह्मशिला क्वचित् ।
खातं ब्रह्मशिलामध्ये ब्रह्मभागोपमं भवेत् ॥ ६६ ॥
प्रविशेद् ब्रह्मभागं तु नीरन्ध्रं च यथा भवेत् ।
नन्द्यावर्तसमाः कार्याश्चतस्रस्तु शिलाः क्रमात् ॥ ६७ ॥
पीठब्रह्माश्मनोर्मध्ये प्रादक्षिण्येन योजयेत् ।

अथ नागरादिब्रह्मशिला —

द्विगुणं लिङ्गविस्तारात् *त्रिगुणं वेदसङ्गुणम् ॥ ६८ ॥

तुङ्गं व्यासत्रिपादांशाद् भवेल्लिङ्गे तु नागरे ।
गर्भकर्णचतुर्थांशव्यासा श्रेष्ठा(थ? य)तस्य तु ॥ ६९ ॥

* 'विस्तृतं वेदभागतः' इति गुरुदेवः ।

व्यासाध्यर्धविहीना स्यान्नीचा मध्येऽष्टधा तयोः ।
(मध्ये ? भक्ते) तु नवधा ब्रह्मशिला स्याद् द्राविडे शिवे ॥

व्यासार्धं तत्र पादोनं तयोर्मध्येऽष्टभाजिते ।
तुङ्गं ब्रह्मशिलायाः स्यान्नवधा द्राविडाह्वये ॥ ७१ ॥

अथ गर्भगृहार्धेन त्रिचतुर्भागविस्तृता ।
व्यासार्धवेदभागोच्चा प्राग्वन्मध्येऽष्टभाजिते ॥ ७२ ॥

नव ब्रह्मशिलाः प्रोक्ता लिङ्गब्रह्मांशतोऽवटम् ।
द्वियवाधिकविस्तारं विस्ताराष्टांशकं नतम् ॥ ७३ ॥

तन्मध्यवटगं[1] रत्नगर्तं स्याद् वेसराभिधे ।

अथासनशयनादीनां पीठभेदः ।

स्थानासनविभागेन प्रतिमानां (प ? पु)रे (प ? पु)रे । ७४ ॥

एकद्वित्रिचतुष्पञ्चषण्मात्रं वाधिकं ततः ।
आसनानां स्वविस्तारादष्टभागाधिकायतिः ॥ ७५ ॥

द्विगुणं तन्निजायामान्मण्डनं पीठिकास्त्विव ।
रामवेदेषुभागे तु बेरोच्चे भागतः क्रमात् ॥ ७६ ॥

पीठस्योन्नतिरिष्टा स्याच्छयने वासने स्थिते ।
यथोचितं तथा दैर्घ्यं व्यासश्च शयने स्मृतः ॥ ७७ ॥

अथासनभेदः —

ब्रह्मविष्णुशिवानां च गौर्यादीनां तथासनम् ।
सोपपीठमिहाद्रिस्थसिंहसिंहासनं स्मृतम् ॥७८॥

---

१- 'कं' ग. पाठः.

दैवार्षकाणां बाणानां लिङ्गानां च स्वयम्भुवाम् ।
प्रासादरूपं पीठं वा यथेष्टं कारयेद् बुधः ॥ ७९ ॥

इति शिल्परत्ने उत्तरभागे पीठादिलक्षणं नाम
सप्तविंशोऽध्यायः ॥

अथाष्टाविंशोऽध्यायः ।

अथ प्रतिष्ठाविधिः ।

कुर्यात् प्रतिष्ठां सुमुहूर्तलग्ने
देवस्य मन्त्री सुसमाहितात्मा ।
बीजाङ्कुरारोपणमुख्यकर्म-
जालानि कृत्वोचितमूर्तिपान्वितः ॥ १ ॥
सर्वदिङ्मुखसद्मेषु सर्वदेवेषु सर्वदा ।
अदित्युदित्योः कर्तव्यं मङ्गलाङ्कुरमण्डपम् ॥ २ ॥
संवृतं पश्चिमद्वारं ध्वजयोनिगतं शुभम् ।
तुर्यश्रं वायताश्रं वा वितानपरिशोभितम् ॥ ३ ॥
पात्राणि वापविहितानि पृथग् द्विषड् वा
स्युः पालिकाश्च घटिकाश्च शरावकाश्च ।
तस्वाष्टिभानुभिरिह प्रतिमाङ्गुलैस्त-
दुत्सेधक्लृप्तिरथ वाष्टिचतुर्दशार्कैः ॥ ४ ॥
तस्वांशकोनमुदितोच्छ्रयमत्र कृत्वा
षोढा द्वयेन वदने क्रमशः परांशैः ।
तत्पीठ(दण्डगल)सन्धिगलेषु कुर्याद्
दैर्घ्यं पुरोविरहितेन च पीठसन्धौ ॥ ५ ॥
अङ्घ्र्यूनमंशम(थ ? धि)पीठ(गृ ? मि)हाधिदण्डं
चैके समुच्छ्रयमुशन्त्यपरेऽर्धवृद्धिम् ।

पीठेऽङ्घ्रिहीनमपरत्र च शिष्टयुक्त्या
सन्धि गलांशगतमास्यबिलं च कार्यम् ॥ ६ ॥

दण्डे स्वदैर्घ्यकसमं द्विगुणं स्वदैर्घ्याद्
व्यासं परेषु वियुगांशमधः शिरोधेः ।
तत्पीठिकाविततिखण्डमितं च पीठ-
सन्धौ प्रकल्पयतु मङ्गलपालिकायाः ॥ ७ ॥

पीठोच्छ्रयः —

ऊर्ध्वार्धक्लृप्तपृथुबुध्नघटोत्तराङ्गे
दिक्षूर्ध्वतश्च घटिका घटितेषुवक्त्रैः ।
वर्णाङ्गुलिप्रतातिभिः सुगलैरधोर्धे
तत्पालिकावदुदिताङ्घ्रिससन्धिदण्डा ॥ ८ ॥

अब्ध्यङ्गुलात् समधिके सति पालिकायाः
पीठोच्छ्रये तु घटिकाघटिताङ्घ्रिदण्डौ ।
त्र्यङ्गुलोच्छ्रयनिजोच्चसमप्रतानौ
स्यातामिनाङ्गुलिमितः सकलोच्छ्रयो वा ॥ ९ ॥

व्यासेन दैर्घ्यसुसमं दहनांशहीनं
वास्ये ततो हुतवहांशततं च पीठे ।
कुर्याच्छरावमपकन्धरपालिकाव-
दूर्ध्वार्धमस्य घटिकात्र(यत्र ? दथा)धरार्धम् ॥ १० ॥

पीठाग्रकार्श्यपरिशोषितमूलकार्श्य-
वृत्तिक्रियादिरचना सकलेषु कार्या ।
स्युस्तानि लोहरचितान्यथ मार्त्तिकानि
पात्राणि विष्णुविधिधूर्जटिदैवतानि ॥ ११ ॥

---

१. 'त' ग. पाठः.

देवस्याग्रे मध्यहाराबहिः स्याद्
साधिष्ठानं मण्डपं दक्षभागे ।
साधङ्गं सालिन्दकं तोरणाढ्यं
द्वारे द्वारे सद्ध्वजं चाधिवासे ॥ १२ ॥

मण्डपं कलशार्थं यदेवमेव करोतु तत् ।
अन्तर्मण्डलबाह्ये वा मध्यहाराबहिस्तु वा ॥ १३ ॥

अथ कुण्डम् —

दोर्मात्रं परिसूत्र्य तत्र चतुरश्रं क्षेत्रमर्काङ्गुलं
खात्वा तद्द्विगुणं तु वावटतटे तन्मेखलाः कल्पयेत् ।
मार्ताण्डाहियुगाङ्गुलोच्छ्रययुताः श्रुत्यङ्गुलव्यासिनी-
स्तिस्रोऽन्तः क्रमतो निजावटनिभाद्याभ्यश्ररूपेऽवटे
[॥ १४ ॥

योनिं पश्चिममेखलोपरि मितामर्काङ्गुलैरुच्छ्रया-
यत्योः सार्धयुगाङ्गुलैरपि तदूनैस्तैश्च विस्तारतः ।
आम्नायाङ्गुलनालकां ससुषिरां स्वाख्यानयोग्याकृतिं
कुर्यात् कुण्डनतां स्वमूलपरिवृत्त्याग्रप्रक्लृप्त्यादिना
[॥ १५ ॥

अथ योनिरूपकुण्डम् —

क्षेत्रेऽब्धिपुटे प्रतीच्यपुटयोः कर्णार्धसूत्रं निजं
संस्थाप्याप्पातिसन्धितः सुपरिवर्त्यार्कीन्दुसन्ध्यन्तिमम् ।
ताभ्यां सूत्रयुगं प्रसार्य हरिदिग्बाह्यायुतेष्वंशत-
श्छिद्रेऽन्योन्यमिदं सुयोज्य शिखिकुण्डं योनिरूपं खनेत्
[॥ १६ ॥

अथार्धचन्द्राभम् —

क्षेत्रं विभज्य नवघोदगवाक् च भागौ
त्यक्त्वाचलांशकमितं परिवर्त्य सूत्रम् ।
प्रागादिकाप्यककुबन्तमुदग्भुजां च
तावत् प्रसार्य रचयेच्छशिखण्डकुण्डम् ॥ १७ ॥

अथ त्रिकोणम् —

षष्ठांशकं यमहिमांशुदिशोः प्रतीच्य-
सूत्रे सुयोज्य हरिदिग्बहिरङ्कयित्वा ।
तेनैव तेषु सुविधाय च सूत्रपातं
कुर्यात् त्रिकोणपरिमण्डितवह्निकुण्डम् ॥ १८ ॥

अथ वृत्तम् —

कर्णार्धसूत्रस्य भुजार्धतोऽति-
रिक्तांशकार्धं बहिरर्पयित्वा ।
मध्यस्थसूत्रं परिवर्त्य कुण्डं
कुर्वीत चण्डद्युतिमण्डलाभम् ॥ १९ ॥

अथ षट्कोणम् —

अङ्कौ प्रकल्प्य हरिपक्षकदिक्पदिक्स्थौ
षष्ठांशतो बहिरतो निजमध्यतश्च ।
द्वौ द्वौ झषौ परदिशोरपि मत्स्यचिह्न-
षट्सूत्रकैर्विरचयेद् रसकोणकुण्डम् ॥ २० ॥

---

१. 'ङ्क' ख. पाठः.

अथाष्टदलकुण्डम् —

क्षेत्रं प्रकल्प्य फणिभागयुतं समन्तात्
तद्बाहुसूत्रदलतोऽथ परिभ्रमय्य ।
व्यासस्वमानविधिनाष्टदलं लिखित्वा
खात्वा प्रकल्पयतु पद्मनिभं च कुण्डम् ॥ २१ ॥

अथाष्टाश्रम् —

क्षेत्रे तत्र समन्ततो दिनकरांशं न्यस्य तुर्यश्रिते
कोणेभ्यो भुजसूत्रकेषु निहितैः स्वैः कर्णसूत्रार्धकैः ।
द्वौ द्वौ दिक्षु झषान् प्रकल्प्य मकरेष्वास्फालितैरष्टभिः
सूत्रैरीश्वरदिङ्मुखे विरचयेदष्टाश्रकुण्डं सुधीः ॥ २२ ॥

दोर्मात्रकुण्डे विधिरेष शेषे-
षूहीय तन्वीत समस्तमस्मात् ।
कुण्डानि तत्तद्भवनोपपत्त्या
द्वित्र्यादिदोरत्निमितान्यपि स्युः ॥ २३ ॥

अथ स्रुवलक्षणम् ।

कुर्यात् स्रुवं खदिरजं द्विजदारुजं वा
मित्राङ्गुलं शशधराङ्गुलमस्य वक्त्रम् ।
अङ्गाग्निनेत्रयवदीर्घवितानिम्न-
गर्तद्वयं यवदलाहितनेमिवीतम् ॥ २४ ॥

मूलाग्रशातयवनिम्नबिलार्गलाढ्य-
माश्यानपङ्कगतधेनुपदोपमं च ।
मूले यवाष्टकततं यवहीनमग्रे
दण्डं सुवर्तुलमिलायववेष्टनाग्रम् ॥ २५ ॥

मार्ताण्डाङ्कुलदैर्घ्यतच्छरदशांशव्यासतीव्रा जुहू-
र्ध्माग्रायामशरांशतोऽत्र चतुरश्रं पुष्करं कल्पयेत् ।
अष्टांशाहितमेखलावृतपदांशाखातगर्तान्विताम्
तस्याग्रे गलमर्धविस्तृतितदर्धायामताम्युज्ज्वलम् ॥ २६ ॥

पञ्चांशायततत्रिपादशशिपादव्यासमूलाग्रकं
कुर्याद् व्यासगुणांशखातघृतकुल्योल्लासितं तन्मुखम् ।
तच्छिद्रेण सुवृत्तपुष्करदलव्यासाव्यमूलानलां-
शोनव्याससुताग्रकं विरचयेद् दण्डं च गोपुच्छवत्
[॥ २७ ॥

अथ महास्रुक् —

हस्तायामयुगांशविस्तृतितदर्धोत्सेधयुक्ता महा-
स्रुक् स्याद् विस्तृतिदीर्घपुष्करगुणांशाखातवृत्तावटा ।
बाह्याग्रार्धतदर्धतद्दलवशाच्छेपे चतुर्धा कृते
कुर्यात् तद्रशनात्रयं त्रिभिरथान्तःस्थैः क्रमादंशकैः ॥ २८ ॥

बाह्येऽर्धे त्रियवं तदर्धमपरेऽशो तद्दलं चान्यतः
संशोध्यावटमेखलां सुपरिवृत्तां पीठमब्जोज्ज्वलम् ।
दण्डं त्र्यंशततं गलं सुषिरितं पादत्रिभागातति-
व्यासं पादविहीनपुष्करमितं कुर्याज्जुहूवन्मुखम् ॥ २९ ॥

अथ पर्व तत्र पूर्वं भद्रकम् ।

एकद्विसागरकरप्रमितानि तानि
स्युर्भद्रकप्रकृतिकान्यथ मण्डलानि ।

चक्राम्बुजं द्विकरमप्यवरं वरिष्ठं
तद् वेददोःप्रभृति पञ्चगहस्तनिष्ठम् ॥ ३० ॥

विकृतिकृतिपुटे षट्त्रिंशतान्तःस्थकोष्ठै-
र्नलिनमवनिपङ्क्त्या पीठिका वीथिकाथ ।
पुटयुगपरिक्लृप्ता द्वारशोभोपशोभा-
श्रियुतपुटयुगल्या मुद्रिता भद्रके स्यात् ॥ ३१ ॥

अब्जक्षेत्रे यवांशं बहिरिह परितोऽपास्य वृत्तीकृतेऽर्धे
मित्रांशेऽग्र्यार्थमन्तः सुसममथ चतुर्धा विभक्ते दलार्थम् ।
सन्ध्यर्थं केसरार्थं भ्रमयतु परितः कर्णिकार्थं च सूत्रं
दिक्कोणाभ्यन्तरेऽष्टौ क्षिपतु च परितस्तत्र सूत्राणि तिर्यक्
[॥ ३२ ॥

अग्रादिसन्धिचरमं दलमध्यसंस्थं
सूत्रं सुवर्त्य परिलिख्य दलं तदग्रम् ।
तत्सूत्रतन्मुखतयान्तिमवृत्तसंस्थं
तन्मात्रसूत्रमभिवर्त्य लिखेद् द्विपार्श्वे ॥ ३३ ॥

दिशि करयुगकोष्ठैर्द्वारमन्तर्बहिष्ठै-
स्त्रिशशिपदविपर्यस्तैश्च[1] शोभोपशोभे ।
त्रिभुवनपदक्लृप्तं कोणमम्भोजपीठं
श्रुतिदहनपदोद्यद्गात्रपादान्वितं च ॥ ३४ ॥

पीता पङ्कजकर्णिका दलततिः श्वेतान्तरालं हरि-
द्वर्णं रक्तरुचोऽश्रयः सितपदारक्तेषकं पीठकम् ।

१. 'भश्च' ग. पाठः.

वीथिः कल्पलतादिचित्रिततराथ द्वारशोभोपशो-
भाश्रि स्यात् सितरक्तपीतशितिवर्णाकीर्णचूर्णोज्ज्वलम्
[ ॥ ३५ ॥

पीताणुमूलपृथुलारुणमध्यशुभ्र-
बिन्द्वग्रकाः प्रतिदलं युगलात्मकाः स्युः ।
तत्केसरा बहिरथ त्रिगुणात्मकाश्च
रेखा लघीयसि महीयसि भूतरूपाः ॥ ३६ ॥

अथ चक्राब्जम् —

चक्राब्जेऽत्र विकारवर्गपदवत् क्षेत्रेऽन्तरर्धेऽभितो
वीथीक्षेत्रशरद्विभागसहिते वृत्तीकृतेऽर्धीकृते ।
बाह्यार्धे दहनांशनेमिपरिशिष्टं स्यादरक्षेत्रकं
शेषार्धे श्रुतिभागनाभिपरिशिष्टं चाम्बुजक्षेत्रकम् ॥ ३७ ॥

प्राग्वत् पञ्चविभक्तमम्बुजपदं त्रित्रिद्विभक्तं क्रमात्
कृत्वा नाभ्यरनेमिकं च परिवर्त्याराण्यथास्फालयेत् ।
दिक्सूत्रस्पृगरान्तवृत्तनिहितैराकर्णिकान्तायतैः
सूत्रैर्द्वादशधा भ्रमादरपदं षोढा च भङ्क्त्वैकशः ॥ ३८ ॥

एष्वष्टादशकोष्ठवत्स्वरपदेष्वन्तःस्थषट्कोष्ठगा-
न्यन्तर्वृत्तगतैककोच्छुरितपार्श्वद्वन्द्वतुन्दीनि च ।
इत्यष्टाष्टपदैरराण्यपदिशं कुर्यादथ द्वादशा-
थैतावन्ति हरित्पदानि परिशिष्टान्यन्तरालान्यपि ॥ ३९ ॥

अन्तःस्थानरमध्यबद्धदुभयान्तान् द्वादशाथ प्रथीन्
बाह्यानान्तरमध्यबद्धशिरसः कुर्यात् पुनस्तावतः ।

१. 'विद्रुम', २. 'ख' ख. पाठः.

सस्वाद्युक्तहलविभिन्नाभिररुणाराल्यन्तरं कृष्णरु-
क्पर्यायारुणपीतरुक् प्रथिगणोऽन्यद् भद्रकोद्दिष्टवत् ॥४०॥

अथ शक्तिदण्डः —

धृतिकृतिपुटक्षेत्रे मध्ये विधाय विधानतो
विकृतिकृतिसङ्ख्यातैः कोष्ठैः समीरितभद्रकम् ।
लिखतु परितः पङ्क्तौ शक्त्यष्टकं रसकोष्ठकै-
र्दिशि विदिशि च स्वोपान्तस्थोपकोष्ठदलाञ्चलम् ॥ ४१ ॥
मध्येशक्ति पदद्वयेन रचयेन्मुष्टिं दिशास्वश्रिषु
त्यक्त्वा कोणगतैककं पदयुजा तत्प्रान्तयुक्स्थास्तुना ।
मुष्ट्युद्दिष्टपदान्तपार्श्वयुगदोःसूत्रेण शक्त्यग्रके
तत्तार्तीयककोष्ठमध्यमिलिताग्रेणालिखेद् द्वे अपि ॥ ४२ ॥
विन्यस्यच्छोटिकां मुष्ट्यभिहितपदयुङ्मध्यदिक्सूत्रसंस्थां
सूत्रं तावत्प्रमाणं भ्रमयतु बहिरन्तश्च दोःसूत्रसंस्थम् ।
सूत्रं तत्प्रान्तयोस्तद्दलमितमपि संवर्तयेत् कोणसिद्ध्यै
दिश्येवं कोणमुष्टिं विरचयतु तथा सन्धिमुमावलम्मम्
[॥ ४३ ॥

शक्त्यग्रान्तरमुष्टिशिष्टपदवर्णं रक्तपीतारुणा-
कृष्णं श्याममलकोणगैककविराजद्देवताविग्रहम् ।
शोभे पीतहरिद्रुची विरचयेत्कोणं त्रिशूलोज्ज्वलं
पीतां वीथिमथाङ्घ्रिगात्रमसितारक्तं परं पूर्ववत् ॥ ४४ ॥

अथ षड्दलम् —

कुर्यात् षड्दलमब्धिवर्गपुटकेऽत्रान्तश्चतुष्कस्फुर-
द्वृत्तेषु त्रिषु कर्णिकां च दलसन्धीन् षड्दलान्यंशकैः ।

---

१. 'स्ता' क., 'स्का' ख. पाठः.

सन्ध्यर्धेऽत्र तु केसरांश्च रचयेद् द्वाराणि दिक्षु द्विकैः
कोणान्येकपदैरितीषुजनुषि स्यात् षड्दलं मण्डलम् ॥ ४५ ॥

अथ स्वस्तिकभद्रम्*

नीवारशालिप्रभवं सितं स्याद्
रक्तं कुसुम्भप्रभवं रजश्च ।
गोरोचनोत्थं च मनःशिलाजं
पीतं च शालीप्रभवं च दग्धम् ॥ ४६ ॥

कृष्णं तथा याज्ञिकवृक्षपत्रैः
सङ्कल्पितं श्यामरजः प्रशस्तम् ।
शुक्लं च रक्तं च तथैव कृष्णं
मुख्यं रजस्तत् त्रिगुणात्मकं तत् ॥ ४७ ॥

पुष्टयर्थमिष्टं त्वथ मुष्टिना च
सर्वार्थसिद्धयै तु कराग्रजैश्च ।
मध्याङ्गुलीतुल्यकृताश्च रेखा-
स्तन्मध्यनिम्नं च यवं यथावत् ॥ ४८ ॥

अथ प्रतिष्ठास्थानम्—

कृत्वा गर्भगृहं कुलाद्रिकृतिकोष्ठाढ्यं समन्तात्पदे
ब्राह्मे पञ्चदशांशकान् विरचयेत् सौम्याग्रसूत्रैः समम् ।
तत्पृष्ठस्थितदेवमानुषपिशाचावारकेषु क्रमाद्
विश्वोमेशनवांशकानपि ततः स्वं स्वं पदं कल्पयेत् ॥ ४९ ॥

ब्राह्मेंऽशेऽन्तरनन्तरे महति चाल्पे चेशलिङ्गे हरौ
तार्तीये द्रुहिणांशमध्यपदतस्तुर्ये गुहेशाच्युते ।

* इत उपरि मातृकासु पुट एकोऽक्षेको दृश्यते।

षष्ठे सुम्भजिति प्रतिष्ठितिपदं शार्ङ्गीश्वरे चाष्टमे
प्रोक्तं शास्तरि षोडशे गणपतौ विंशे तथैकोत्तरे ॥ ५० ॥

*मध्ये महालिङ्गमतोऽल्पलिङ्गं
नारायणः शङ्करकेशवश्च ।
तत्रैव षड्वक्त्रनिवासभूमिः
स्याद् वासुदेवो भगिनी च पश्चात् ॥ ५१ ॥
सुखासनं सप्तपदे विदध्या-
दतोऽष्टमे वा हरवासुदेवः ।
ततः परस्मिन् मणिलिङ्गधाम
व्यासस्तथैकादशरुद्रभूमिः ॥ ५२ ॥
सूर्यस्तथाग्निर्भिषजौ वसूनां
गणश्च शास्ता प्रहराणि भूयः ।
अष्टादशे मातृनिवासभूमि-
स्ततः परस्तादथ गायुधानि ॥ ५३ ॥
स्याद् वाहनं सूकरवामनौ च
लक्ष्मीश्च तत्रैव वसुन्धरा च ।
अनन्तमूर्तिप्रहराणि पञ्च
पश्चादनन्तासनवाहनानि ॥ ५४ ॥
विद्येश्वराश्चानु गणेश्वराश्च
मार्ताण्डचन्द्रौ मुनयः प्रदिष्टाः ।

त्वोदङ्मुखमत्र सूत्रमथ मध्यां[2] द्वारविस्तारत-
स्तूत्कृत्याढ्यशतांशकं प्रतिगमय्योदीचि चैन्द्राग्रगम् ।

१. 'मके वि', २. 'त्स्यद्वा' ग. पाठः.

* इत आरभ्य सार्धश्लोकचतुष्टयं ख. मातृकायां न दृश्यते.

सर्वेष्वीशहरीशयोः पुनरिदं वार्चांशतो वाखिले
दिक्ष्वैश्यां गमयेद् यवं यवयुगं वार्चोद्ध्वं सन्धितः ॥५५॥
ब्राह्मे कौतुकमामरे न्यसतु मूलार्चां स्थितामासिता-
मीषन्मानुषसंयुते समनृदेवांशे शयानामपि ।
गर्भे षोडशवर्गभेदिनि पदैर्ब्राह्मं चतुर्वर्गकै-
स्त्रिद्येकोन्मितपङ्क्तिभिः सुरनृपैशाचान् प्रकुर्वीत वा ॥ ५६ ॥
ब्राह्मे षोडशमंशकं स्वपुरतो मध्याद् दलाद्यैककं
वामे चाप्यपहाय वह्निभुवि बिम्बं स्थापयेत् स्थास्नुकम् ।
एवं मानुषमध्यतोऽथ गमयित्वा पृष्ठतो वामत-
श्चांशे स्थापयतु स्वमूलमनुबिम्बं बाहुबेरे विधौ ॥ ५७ ॥
त्रिखण्डलिङ्गस्य ततः प्रतिष्ठां(?)
ब्रह्मादममूर्भि विनिधाय पुनश्च मन्त्री ।
उन्नीय मन्दमथ यन्त्रगतं च पीठं
स्थाने प्रविन्यसतु तत्र समाहितात्मा ॥ ५८ ॥
पीठप्रतिष्ठां विनिधाय पूर्वं
पश्चात् स्वबिम्बं त्वथ निष्कलेषु ।
सर्वेषु तत्तत्परिवारजालं
सम्यक् प्रतिष्ठाप(य)तूक्तक्लृप्त्या ॥ ५९ ॥
एवं प्रतिष्ठाप्य निजेच्छयेशं
संपूजयेन्नित्यमनन्यचेताः ।
योऽसाविहाखिलमनोरथौघं
संप्राप्य याति परमायुरन्ते(?) ॥ ६० ॥

१. 'र्धा' ख. पाठः.

बल्यर्चा चोत्सवार्चा च तीर्थयात्रार्थकल्पिता ।
स्नापोत्थानकृता चेति चतस्रस्तूपबेरकाः ॥ ६१ ॥
कर्मार्चा स्नपनार्चा च बहुबेरेऽधिकं द्वयम् ॥ ६२ ॥

इति शिल्परत्ने उत्तरभागे प्रतिष्ठाविधानं नाम
अष्टाविंशोऽध्यायः ॥

---

## अथैकोनत्रिंशोऽध्यायः ।

### अथ जीर्णोद्धारः ।

आकल्पान्तस्थास्नुभावेन भक्त्या
देवस्यैवं सम्प्रतिष्ठापितस्य ।
प्रासादादिस्वाङ्गजीर्त्तिर्यदि स्या-
दुद्धृत्यातस्तं नवाङ्गीकरोतु ॥ १ ॥
जीर्णोद्धृतिं स्थापितमन्त्रबिम्ब-
गृहादिजीर्त्तौ सपदीति कुर्यात् ।
दु[1]:स्थोऽन्यथा चेद् विपदे तथा चेत्
सुस्थोऽत्र देवो यदि सम्पदे स्यात् ॥ २ ॥
[जी]र्णोद्धारविधिं वदामि शिथिले जीर्णेऽथ दग्धेऽथवा
प्रासादे स्फु[2]टिते विपर्ययगते लिङ्गेऽथवा चोभये ।
[अ]न्यां दिशि तस्य गेहमभितः कृत्वा नवं मन्दिरं
तत्पार्श्वे चतुरश्रकं च पुरतः कुर्यात् पुनर्मण्डपम् ॥ ३ ॥
ऐन्द्रेशानविभागे वा सोमेशा(न ? ना)न्तरेऽपि वा ।
कृत्वा काष्ठमयं गेहमल्पं प्राकारबाह्यतः ॥ ४ ॥

---

१. 'सु' क. पाठः. २. 'रि' ग. पाठः.

नागे शोषेऽथवा मूलप्रासादस्यानुरूपतः ।
प्राग्द्वारे वायुकोणे वा नैर्ऋत्यां वान्यगोमुखे ॥ ५ ॥
प्रासादमल्पं काष्ठैर्वा मृद्भिर्वा सुमनोहरम् ।
देवस्याभिमुखं तत् स्यात् तदग्रे मण्डपं शुभम् ॥ ६ ॥

अर्वाक् सप्तकराच्च मन्दिरसमो विस्तारतो मण्डप-
स्तस्मात् सप्तकराधिके तु भवने पादं विहायार्पयेत् ।
प्रासादस्य समं विभज्य हुतभुग्भागैरधिष्ठानकं
द्वाभ्यां सम्परिकल्पयेच्च विधिवत् प्रत्युन्नतिं मण्डपे ॥ ७ ॥

तन्मध्ये भुवि वेदिका च विहिता तस्याश्चतुर्भागतो
विस्तारेण तदुन्नतिश्च नवभिर्धाम्नः प्रतेरुन्नतिम् ।
भङ्क्त्वैकेन मिताथवा परिमितं कुर्याच्छुभाय स्थितं
विप्रादिष्वथ वर्णभेदविहितं वर्णेषु वा मण्डपम् ॥ ८ ॥

तन्मध्ये दारवं पीठं सश्वभ्रं कारयेद् गुरुः ।
बिम्बं लोहमयं वाल्पं कुर्याद् बिम्बानुसारतः ॥ ९ ॥
रत्नन्यासं विना सर्वं प्रतिष्ठोक्तं समाचरेत् ।

निष्कामणेन विधिनात्र तदन्तरङ्गे
वैकल्यभाजि वितनोतु यथापुरं तत् ।
सङ्कोचनेन बहिरङ्गविपद्यदश्च
निष्कामणेन चिरकालचिकीर्षितं चेत् ॥ १० ॥

तत्तद्द्रव्यैः शिलाद्यैस्तु समाधेयं हि पूर्ववत् ।
संस्थानं प्राग्वदेव स्यादलङ्कारांस्तु कारयेत् ॥ ११ ॥

१. 'तो' क. पाठः. २. 'भम् ॥ तन्मध्ये वा' ख. पाठः.

मानतुङ्गत्वहानिर्वा वृद्धिश्चापि न शस्यते ।
जातिच्छन्दविकल्पानां स्यान्मानं प्राग्वदत्र हि ॥ १२ ॥
स्वयम्भूदैविकार्षाणामल्पं प्राक्तनधाम चेत् ।
जीर्णापतितं तस्य गविधिर्दोषमावहेत् (?) ॥ १३ ॥
द्वारप्राकारपीठाद्यमनुक्तस्थानगं यदि ।
परिवारं च तत्प्राक्तस्थाने कुर्यात् सलक्षणम् ॥ १४ ॥
सलक्षणं प्रकुर्वीत पूर्वसंस्थानसुन्दरम् ।
स्वायम्भुवार्षदैवं वा निष्कलं सकलं तु वा ॥ १५ ॥
स्थानान्न चालयेल्लिङ्गं पूर्वस्थानेऽर्हेति स्थितिः ।
नद्यब्धिजलवाताद्यैर्हृते वा चलितेऽपि वा ॥ १६ ॥
तस्मात् सहस्रदण्डान्तं क्षेमे संस्थापयेत् पुनः ।
तदेव तदभावे तु पूर्वलिङ्गसमं नवम् ॥ १७ ॥
पूर्वतुल्यविमाने तु प्रायश्चित्तादनन्तरम् ।
प्रतिष्ठितं भवेद् वृद्ध्यै राजराष्ट्रप्रजाहितम् ॥ १८ ॥
तत्र मूलालयस्थानाद् (या ? य)माग्निमरुतां दिशम् ।
त्यक्त्वा यथेष्टमन्यत्र विधिना स्थापयेद् दिशि ॥ १९ ॥
यमे (भ ? क)र्तृनृपस्थाप(: ? द्) मरुद(ग्ने ? ग्न्यो)र्जनक्षयः ।
तस्मात् ते परिहृत्यैव चलितस्थापनं हितम् ॥ २० ॥
छन्दानां प्राक्तना(ष्वा ? त् स्थाना) त् प्राग्वोदक् परितो-
ऽधिकम् ।
मानोन्मानप्रमाणोच्चं तलाधिक्यं च शस्यते ॥ २१ ॥
पूर्वस्माद्धीनमानाद्यं स्थानं कर्तृनृपाहितम् ।
द्वारभित्त्यङ्कणादीनां गोपनं च विनाशकृत् ॥ २२ ॥

विनष्टवस्तुनो गर्भं त्यक्त्वा गर्भं न्यसेत् पुनः ।
अधिष्ठानादिकं प्राग्वत् कुर्यात् स्तम्भादिकानपि ॥ २३ ॥
यदि तत्प्राक्तनद्रव्यैर्निष्पाद्यं चेद् गृहादिकम् ।
प्रारभ्यादौ नवद्रव्यैः पुराणैर्योजयेत् ततः ॥ २४ ॥
योगं नवैर्नवैरिष्टं पुराणाना पुरातनैः ।
मिश्रयोगे विनाशः स्यादतो मिश्रं न कारयेत् ॥ २५ ॥
पुरग्रामालयादीनि पूर्ववस्त्वनुरूपतः ।
तद्बाधकं ++++ कुलनाशकरं त्यजेत् ॥ २६ ॥
अन्तहाराबहिर्मूलादल्पलिङ्गालयादिकम् ।
कुर्वीत वान्तः सालस्य यथा मूलं न पीडयेत् ॥ २७ ॥
मूलालयसमं क्षुद्रमधिकं तत्र शस्यते ।
शस्तमर्धं च पादोनं शरांशे[1] त्र्यंशमेव वा ॥ २८ ॥
शिखिविशिखसुषिरभक्ते मूलगृहं मूलबिम्बं च ।
नेत्राग्निभूतभागैर्बालगृहं बालबिम्बं च ॥ २९ ॥
दोषे लघुतरे बिम्बं नैव त्याज्यं कदाचन ।
बाहुच्छेदे करच्छेदे पादच्छेदे तथैव च ॥ ३० ॥
तथैव स्फुटिते भिन्ने यस्मिन्नवयवे गते ।
वैरूप्यं जायते यस्य तत् त्याज्यं प्रायशो भवेत् ॥ ३१ ॥
अङ्गुल्यादिपरिच्छेदे बन्धनं शस्यते बुधैः ।
महादोषसमायुक्ते सान्निध्यं लक्ष्यते यदि ॥ ३२ ॥
तथैव बद्ध्वा संशोध्य प्रायश्चित्तं समाचरेत् ॥ ३३ ॥

---

१. 'शं' क. ग. पाठः.

उत्पाट्योक्तवदल्पबिम्बमुपनीयातो बहिः सन्दहेद्
गोसर्पिःस्नपितं तदर्हदहने तद्दारवं चेद् गुरुः ।
लौहं चेद् गुरवे समर्पयतु तद् विद्राव्य यद्वाथवा
छित्त्वा नालमिदं विशोध्य सुशुभं तत्कौतुकं कल्पयेत् ॥ ३४ ॥

एवं जीर्णं गृहं वाथ बिम्बं वा प्राक्प्रवर्त्मना ।
कृत्वा नवं दृढं देवं संस्थाप्य सुखमर्चयेत् ॥ ३५ ॥

इति शिल्परत्ने उत्तरभागे जीर्णोद्धारप्रकरणं नाम
एकोनत्रिंशोऽध्यायः ॥

अथ त्रिंशोऽध्यायः

अथ लिङ्गप्रासादविधिः ।

आर्षं प्रतिष्ठितं पू(र्वं ? र्षं) स्वायम्भुवमथापि वा ।
दृष्ट्वा लिङ्गं वने दिव्यं पश्चात् प्रासादमाचरेत् ॥ १ ॥
ऋषिभिर्देवसिद्धाद्यैः स्थापितं चार्षकं भवेत् ।
मर्त्यैः प्रतिष्ठितं यत्तु तत् पूर्वं समुदाहृतम् ॥ २ ॥
स्वायम्भुवं भुवं भित्त्वा स्वयमुद्गतमेव हि ।
तेषां त्रयाणां दृश्यांशादधोदेशं न शोधयेत् ॥ ३ ॥
मोहादज्ञानतो वापि मूलं खात्वा निरीक्ष्यते ।
कर्तुश्च ग्रामवा(सी ? सा)नां राज्ञः स्यान्नाशहेतुकृत् ॥ ४ ॥
तस्मात् सकलमस्यैव पूजांशस्य वशात् कुरु ।
पूजांशोच्चं द्विगुणितं पीठव्यासमुदाहृतम् ॥ ५ ॥

१. 'र्षं पूर्वं वाथ स्वा' क. ख. पाठः.

तद्व्यासत्रिगुणं गर्भगेहविस्तारमानकम् ।
गर्भार्धं कुड्यविस्तारमलिन्दं तत्समं भवेत् ॥ ६ ॥
गर्भगेहे द्विभागेंऽशमलिन्दव्यासमेव वा ।
हारा तत्सममाख्याता हारालिन्दं विना तु वा ॥ ७ ॥
शान्तिकाद्युदयं प्राग्वत् कल्पयेत् कल्पवित्तमः ।
त्रिगुणं लिङ्गविष्कम्भं पीठव्यासमथापि वा ॥ ८ ॥
त्रिगुणं पीठतारेण गर्भगेहविशालकम् ।
तदर्धं त्वग्निभागं वा भित्तिविष्कम्भमानकम् ॥ ९ ॥
शान्तिकाद्युदयं प्राग्वत् प्रासादे परिकल्पयेत् ।
अथ पूजांशपरिधेः षोडशांशाशुगांशकम् ॥ १० ॥
तल्लिङ्गबहलं (म ? मा)त्वा तत्कर्णद्विगुणार्धकम् ।
द्विगुणं वा तथाध्यर्धं पीठव्यासं प्रकल्पयेत् ॥ ११ ॥
गर्भगेहस्य विस्तारं तेन द्वित्रिचतुर्गुणम् ।
तदर्धं वा त्रिभागं वा कुड्यं गर्भसमं तु वा ॥ १२ ॥
त्रिभागद्वितयं वाथ प्राग्वदुच्चार्धमाचरेत् ।
पूजांशनाहसदृशं पीठविस्तारमेव वा ॥ १३ ॥
गर्भगेहविशालं तु तेन द्वित्रिचतुर्गुणम् ।
तदर्धं वा त्रिभागं वा कुड्यं गर्भसमं तु वा ॥ १४ ॥
नाडीगृहसमं वाथ त्रिपादं वार्धमेव वा ।
पादं वाथ त्रिभागं वा कुर्यात् पूर्ववदुन्नतम ॥ १५ ॥
अथ पूजांशनाहस्य कर्णं पीठविशालकम् ।
तेन द्वित्रिगुणं वाथ गर्भगेहं चतुर्गुणम् ॥ १६ ॥

---

१ 'र्ध' ग. पाठः.

तदर्धं कुड्यविष्कम्भं त्रिचतुष्पञ्चभागिकम् ।
शान्तिकाद्युदयं प्राग्वदाचरेच्छिल्पवित्तमः ॥ १७ ॥
पूजांशोच्चस्य कर्णेन कार्यं वा पीठविस्तृतम् ।
गर्भालयविशालं तु तेन द्वित्रिचतुर्गुणम् ॥ १८ ॥
तथा पञ्चगुणं तेन त्रिचतुष्पञ्चभागतः ।
षड्भागेनापि कुड्यस्य तारमन्यद् यथोदितम् ॥ १९ ॥
पूजांशबहलं द्विघ्नं यत् तत्कर्णेन पीठिकाम् ।
तद्वद् द्वित्रिगुणं वाथ गर्भगेहं चतुर्गुणम् ॥ २० ॥
तस्य त्रिभागं कुड्यं वा चतुष्पञ्चांशकं तु वा ।
शान्तिकाद्युदयं प्राग्वदेवं सकललिङ्गके ॥ २१ ॥
पादाद्युष्णीषपर्यन्तं पीठतारं प्रकल्पयेत् ।
नासान्तं चिबुकान्तं वा तेन गर्भालयादिकम् ॥ २२ ॥
प्रकल्प्य पञ्चप्राकाराद्यखिलं पूर्वमुक्तवत् ।
गर्भन्यासादिकं कृत्वा प्रतिष्ठाप्रक्रियां विना ॥ २३ ॥
सर्वं कृत्वा यथान्यायं पूजयेत् परमेश्वरम् ॥ २३½ ॥

इति शिल्परत्ने उत्तरभागे लिङ्गप्रासादकरणं नाम
त्रिंशोऽध्यायः ॥

---

## अथ एकत्रिंशोऽध्यायः ।

### अथ मनुष्यालयविधिः ।

एककुटुम्बसमेतं ग्रामं कुटिकाख्यमिति पूर्वमेवोक्तम् ।
तत्सद्महविस्तारं लक्षणतः कथ्यतेऽत्र मुनिगदितम् ॥ १ ॥

पूर्वोक्तलक्षणैः सम्यक् परीक्ष्य बहुधा बुधः ।
स्वस्वयोग्या शुभा भूमि पूर्ववत् परिगृह्यताम् ॥ २ ॥
तद्विस्तारं पृथग् वक्ष्ये वर्णिनां दण्डमानतः ।
पञ्चाशद्दण्डमानं वा त्रिंशद् वा कथितं बुधैः ॥ ३ ॥
चत्वारिंशच्च वा कुर्यान्नृपाणां वेदिविस्तृतम् ।
द्वाविंशद्दण्डमानं वा त्रिंशद् वा तत् प्रकीर्तितम् ॥ ४ ॥
त्रयस्त्रिंशदथ प्रोक्तं द्विजानां वेदिविस्तृतम् ।
एकोनविंशत् त्रिंशद् वा द्वात्रिंशद् दण्डमानकम् ॥ ५ ॥
वैश्यानां वेदिविस्तारः कथितः शिल्पकोविदैः ।
पञ्चविंशश्च विंशश्च दण्डमानमुदाहृतम् ॥ ६ ॥
पञ्चदशाथ वा कुर्याच्छूद्राणां वेदिविस्तृतम् ।
उत्तम चाधमं चापि मध्यमं च यथाक्रमम् ॥ ७ ॥
यदुक्तं वेदिविस्तारमायामं चापि तत्समम् ।
दक्षिणोत्तरमायामं वास्तोः सर्वत्र कीर्तितम् ॥ ८ ॥
अथवा समतुर्यश्रं विप्राणां क्षत्रियस्य तु ।
अष्टांशाधिकमायामं षड्भागेनाधिकं विशाम् ॥ ९ ॥
शूद्राणामङ्घ्रिभागैकमधिकं स्वस्वतारतः ।
मुखायामप्रमाणार्धं दक्षिणे चोत्तरेऽपिच ॥ १० ॥
हित्वा तु समतुर्यश्रं वास्तोर्मध्ये समाचरेत् ।
द्रष्टव्यान्यत्र मर्माणि वीथ्याद्या वास्तुदेवताः ॥ ११ ॥
ग्रामोक्तवत् प्रकर्तव्यं द्वारं प्रत्यग्गतं पुनः ।
यत्रोन्नतं ततो द्वारं यत्र नीचं ततो गृहम् ॥ १२ ॥

दण्डात् प्राङ्गणमध्यतोऽब्धिशरषट्सप्तादिसंख्यानती-
त्यादध्यादथ पौष्पदन्तिकपदे द्वारं प्रचारोचितम् ।
भल्लाटे(ऽथ ? न्द्र)गृहक्षतेष्वपि महाद्वाराण्युपद्वारका-
ण्यष्टाशान्तभृशादिकेषु परितः पर्जन्यनिघ्नेष्वपि ॥ १३ ॥

द्वारं यत्र च विहितं
तद्दिगधीशाधिपं भवेद् धाम ।
एकतलं वा द्वितलं
द्वितले द्विमुखं च निर्मुखं वा स्यात् ॥ १४ ॥

द्वारस्तम्भन्यासो जन्मनि तस्योदितं च शिल्पिवरैः ।
अथ तद्वास्तुपरिधेः सीम्नि कुर्याद् वृतिं बुधः ।
रक्षार्थं लक्षणार्थं च सोमार्थं च स्वशक्तितः ॥ १५ ॥

वृतिपादस्य तु बहलं कुर्याद् विस्तारबाह्यतः पश्चात् ॥ १६ ॥
सौत्रं बहलार्धं यत् तावद्बहलं च कारयेत् तलिपम् ।
तत्र च वप्रं कुर्यात् तुर्यश्रं द्वारगेहसदृशमपि ॥ १७ ॥
यद्वा परिघं कुर्यात् पाषाणैर्बद्धभित्तिसमचतुरम् ।
कण्टकशाखाभिर्वा वृतिमथ करभेक्षणाक्षमं कुर्यात् ॥१८॥

आवृत्यन्तर्भागे दिक्षु च वृक्षाः पुरोक्तवज् ज्ञेयाः ।
सूत्रे प्रादुदगग्रके क्षितितले कृत्वा चतुःखण्डिते
खण्डे कल्पयतु द्विजादिवसतिं शार्वेऽथ वा नैर्ऋते ।
खण्डेऽस्मिन् सति सम्भवे पुनरपि श्रुत्यंशिते ब्रह्मसू-
त्राम्याशे शुभवास्तुवीथिपदक्लृप्त्याद्यं पुनश्चोन्नयेत् ॥ १९ ॥

---

१. 'न्द्' ख. पाठः.

पूर्वापरगतं सूत्रं ब्रह्मसूत्रमिति स्मृतम् ।
याम्योत्तरगतं मध्ये यमसूत्रं विदुर्बुधाः ॥ २० ॥
निर्ऋतीशगतं कर्णसूत्रं वाय्वग्निगं मृतिः ॥ २१ ॥

नन्दद्वन्द्वपुटे नवावृतितया बाह्यादिमध्यान्तिमा
वीथ्यः स्युः परितः पिशाचदिविषद्वित्ताधिभूदण्डिनाम् ।
नागाम्ब्वग्निविनायकद्रुहिणनाम्नां चासु निन्द्याः स्मृताः
पैशाचाग्न्यहिदण्डिनां गृहविधौ वीथ्यश्चतुर्दिक्ष्वपि ॥

कन्यायां पन्नगः शेते प्राक्छिरा याम्यपुच्छकः ।
चापे याम्यशिराः प्रत्यक्पुच्छो मीने पराक्छिराः ॥ २३ ॥
उदक्पुच्छोऽथ मिथुने सौम्यकेशः स्थिते रवौ ।
प्राचीपुच्छो लुठत्येवं मासैर्द्वादशभिः क्रमात् ॥ २४ ॥
स्तम्भा नहि विधातव्यास्तदङ्गेषु नृमन्दिरे ।
तस्मात् कालस्य नियमो मार्ताण्डचरणेन च ॥ २५ ॥
तुलावृश्चिकयोः सिंहं पश्चिमं मृगकुम्भयोः ।
गजं तु मेषवृषयोर्मासयोरालयं नृणाम् ॥ २६ ॥
सिंहे ध्वजालयं कुर्यात् कर्कटोऽत्र निषिध्यति ।
अथवा मृगकुम्भाख्यौ मासौ पूर्वालये शुभौ ॥ २७ ॥
दक्षिणे मेषवृषभौ सिंहः पश्चिमधामनि ।
तुलावृश्चिकमासौ द्वावुत्तरालयकर्मणि ॥ २८ ॥

एकं स्याद् यदि दक्षिणं गृहमुभे चेत् तच्च पाश्चात्यकं
ते सौम्य च गृहत्रिके गृहचतुष्के प्राच्यमेतानि च ।
प्राच्यां केतुजमेणराजजमिदं चाप्यवाच्यामथो-
दीच्यां ते गजजं च तानि वृषजं चाहुः प्रतीच्यां गृहम्
[॥ २९ ॥

योनयोऽन्यादिकोणेषु क्रमात् सिंहो वृषो गजः ।
ध्वजश्चेति मनुष्याणां विहितं गृहकर्मणि ॥ ३० ॥

अथवा—

कृत्वा दिङ्नवनागवर्गपदभिन्ने क्षेत्रकेऽन्तर्गतै-
रष्टयङ्काङ्घ्रिपदैर्विधातृपदयुक्तं प्राङ्कणं मध्यतः ।
शालाः पङ्क्तियुगार्यकादिकजुषस्तद्बाह्यतस्तद्बहि-
र्गोष्ठोलूखलवेश्मकादिविलसत्पङ्क्त्यावृतं कल्पयेत्
[॥ ३१ ॥

पादुकोनां बहिर्भागमङ्कणं कथ्यतेऽत्र हि ।
अङ्कणं ध्वजयोनिः स्यान्मुखायामादिसंयुतम् ॥ ३२ ॥

ध्वजः सर्वत्र सम्पूज्य इति शास्त्रनिदर्शनम् ।
तत्त्वार्केन्दुवसुद्वारवेश्मकृत्यश्विसागराः ॥ ३३ ॥
अङ्गुल्यः करतश्चापि द्वित्रिसङ्ख्यमथापि वा ।
अजिरस्यायतं तारादधिकं प्रकरोतु वा ॥ ३४ ॥

(गुणविस्तारणा स चादहि ?)

गुणविस्तारतश्चापि दृश्यते त्वत्रनाङ्कणेदि(?) ।
वेधस्तद्गृहमध्यानां गोत्रनाशकरः स्मृतः ॥ ३५ ॥
प्रादक्षिण्यात् स्वया गत्या महादिग्गतवेश्मसु ।
परिहर्तव्य एवायं बुद्धिकौशलशालिभिः ॥ ३६ ॥
कर्णसूत्रयुतिर्मध्ये न भवेत् कर्णवेश्मनाम् ।
अशुभाय भवत्येषा परिहार्या स्वदीर्घतः ॥ ३७ ॥

---

१. 'कं नाहिभागं तु अङ्क' ख. पाठः.

रुद्ररन्ध्रादिबाणाश्च गत्यङ्गुल्यः क्रमात् स्मृताः ।
अष्टाष्टाङ्गुलवृद्ध्या वा हान्या वा यवतोऽथवा ॥ ३८ ॥
पूर्वादीनां गृहाणां तु क्रमादेव गतिः स्मृता ।
सूत्रवेधं तु सर्वेषां स्तम्भमध्यादिषु त्यजेत् ॥ ३९ ॥
आयाममिष्टगेहस्य षट्सप्तादिकरोन्मितम् ।
अष्टघ्नं स्वस्वादिकमङ्ख्यं त्रिधा कृत्वांशमानतः ॥ ४० ॥
तद्गृहस्य परीणाहं कल्पयेन्नरसद्मनि ।
तदर्धाद् दीर्घशेषं तु विस्तारं तस्य निर्दिशेत् ॥ ४१ ॥
अथवा गुणभागेन तारं पादोनवर्जितम्
दीर्घाधिक्यं विनाशाय मृतये हीनदीर्घता ॥ ४२ ॥
तस्मान्निर्दिष्टहस्तेभ्यो हीनाधिक्यं न कारयेत् ।
अङ्गुलीभिर्न दोषः स्यादुभयत्र करादृते ॥ ४३ ॥
नेष्टमङ्गुलिविच्छेदं[1] गुणविस्तारकल्पने ।
अन्तरालाश्च वसवो दिग्विदिग्भेदकारकाः ॥ ४४ ॥
अन्तरालस्य बाहल्यं गृहविस्तारतो विदुः ।
तदाधिक्येऽर्थनाशः स्यात् सूत्रार्धोन च हीयते ॥ ४५ ॥
तस्मात् सङ्कुचिते व्याधिस्तस्मात् ते परिवर्जयेत् ।

अथ त्रिशालकम् —

उत्तरशालारहितं हिरण्यनाभं त्रिशालकं वसुदम् ।
प्राक्शालारहितं स्यात् सुक्षेत्रं (तत) समृद्धिदं वास्तु ॥ ४६ ॥
याम्यविहीनं शूलं त्रिशालकं वित्तनाशनं कुरुते ।
पक्षघ्नमपरवर्जं पुत्रघ्नं वैरिमानदं भवति ॥ ४७ ॥

१. 'ल' क. पाठः.

अथ द्विशालकम्—

पूर्वापरयोर्हीना यस्मिञ् शाला वदन्ति गृहचुल्लीम् ।
दक्षिणसौम्यविहीनं सिद्धार्थकमाह वागधिपः ॥ ४८ ॥

पश्चिमयमगा शाला यमशूर्पं पश्चिमोत्तरा शाला ।
दण्डाख्या सा कथिता पुरातनैः शिल्पशास्त्रनिष्णातैः ॥ ४९ ॥

उत्तरपूर्वा शाला वाताख्या भवति मानुषे सदने ।
प्राच्यावाच्या शाला यमदैवतनामधेया सा ॥ ५० ॥

सिद्धार्थेऽर्थावासिर्यमशूर्पे गृहपतेर्मृत्युः ॥ ५१ ॥

दण्डाख्ये दण्डवधं गृहचुल्ल्यामपि कलहमुद्वेलम् ।
वाताख्ये वातभयं यमदैवतनाम्नि मृत्युरेव स्यात् ॥ ५२ ॥

अथ चतुःशालम्—

स्वयोनिव्यासगतयो दिग्विदिक्षु च संस्थिताः ।
भिन्नशालेति सा प्रोक्ता मनुजानां शुभप्रदा ॥ ५३ ॥

पर्यन्तध्वजमादधीत चतुरश्रं मध्यतश्चाङ्कणं
तत्पार्श्वेऽप्यतिपत्रमानमपरं चाभ्यन्तरं केतनम् ।
तत्तुर्यश्रयुजोऽथकोणचतुरश्रे[1]त्तरान्तर्ध्वजं
युक्त्या तूत्तरविस्तृतिं च जनयेत् तुर्यश्रशालाविधौ ॥ ५४ ॥

[2]ईष्टदिग्योनियुक्ता च पर्यन्तेनैकलक्षणा ।
समतुर्यश्रका ज्ञेयाप्येकशालाथवायता ॥ ५५ ॥

एतयोः शालयोरत्र नान्तरालानि सन्त्यतः ।
शूद्रादिसूतिकादीनां प्रवेशे स्पृष्टिसम्भवात् ॥ ५६ ॥

---

१. 'ष्ठे', २. 'अ' क. पाठः.

अशुचिर्व्याप्यतेऽन्यस्मिन्नपि तत्र गृहत्रिके ।
एकच्छायेन तस्मात् ते वर्जयेद् भूसुरालये ॥ ५७ ॥
ध्वजः कोणेषु पर्यन्ते दिक्षु दिङ्मानभेदकाः ।
नाम्ना तुर्यश्रभिन्ना या नेष्टा विप्रालयेऽपि सा ॥ ५८ ॥

तद्भेदः—

कृत्वा बाह्यान्तरवृतिमिमामुक्तक्लृप्त्या ततोऽन्यां
दिक्कोणाद् यद्गृहपरिमितिं योनिभेदोपपन्नाम् ।
कुर्याद् युक्त्या मितिषु कुशलः सा तु तुर्यश्रशाला
प्राग्वन्मध्येऽङ्कणविलसिता स्यात् पुनर्भिन्नशाला ॥ ५९ ॥
दिग्गेहानि विदुर्गृहैरभिमतैर्योनिप्रभिन्नैर्मिथः
श्लिष्टानीह बहिः समैः परिमिता सीमा च मध्येऽङ्कणम् ।
श्लिष्टानां तु मिथो भवेदिह मितिः सम्भूय धाम्नां ध्वजं
भिन्ना सैकविदिश्यसत्यपि पुनस्तुर्यश्रशाला मता ॥ ६० ॥
द्वारं मुखेषु कर्तव्यं सर्वेषामपि वेश्मनाम् ।
मध्यस्थं द्वारमध्यं स्याद् वास्तुमन्दिरसूत्रयोः ॥ ६१ ॥
आशाहर्पतिसूत्रभेदिनि गृहे षष्ठेऽथ वा सप्तमे
सूत्रे द्वारमथापरं वितनुयाच्छालासु सव्यार्धके ।
सिंहोक्षद्विपकेतुयोनिविहितं चाग्न्यादिकोणालयं
मित्रे दक्षिणपश्चिमे पुनरुदक्प्राच्ये च गेहे मिथः ॥ ६२ ॥
अथवान्यप्रकारेण मित्रत्वं कैश्चिदिष्यते ।
वास्तु(नः) पूर्वपार्श्वस्थे गेहेऽन्योन्यमिति स्फुटम् ॥ ६३ ॥

१. 'दिग्गृहै' ख. पाठः.

एकस्मिन्नशुचौ सत्यां तन्मित्रेऽप्यशुचिः स्मृता ।
अनुसृत्योभयं मार्गमाचरेत् तदनापदि ॥ ६४ ॥

अथ देवालयतो विशेषमाह —

रूपोत्तरस्य तु क्वापि क्षुद्रवाजनमिष्यते ।
अङ्घ्रेस्तथा मध्यखण्डमारूढं भूषणाय च ॥ ६५ ॥

शिलाबद्धमसूरं च सुधामिलितभित्तिकम् ।
पक्वैतान्यपि निन्द्यानि दृश्यन्ते नरसद्मानि ॥ ६६ ॥

प्राच्ये चाग्निसमर्चनादिकमुदीचीने कुटुम्बादिकं
व्यत्यस्य प्रकरोतु वा द्वयमिदं याम्येऽतिथिप्रीणनम् ।
पाश्चात्त्ये धनसंनिधापनमतो द्वन्द्वं विपर्यस्य वा
शेषार्धे तु तयोस्तथा शयनविद्याभ्यासनाद्यं चरेत् ॥ ६७ ॥

माहेन्द्रे सलिलाधिराजि च तटाकं कूपमैशानके
पर्जन्ये पचनालयं शिखिनि वा भुक्त्यालयं तत्पुरः ।
कर्तव्यं खलसद्म नैर्ऋतपदे कुर्वीत धान्यालयं
गोशालाम्बुपतौ हरावपि समीरे धाम चौलूखलम् ॥ ६८ ॥

ग्रामादिपूक्तवत् सर्वमनुक्तं स्थानमाचरेत् ।

अथ द्वारं —

द्वारपादस्य बाहल्यं तुल्यमुत्तरमानतः ॥ ६९ ॥
खखयोन्या गृहादीनां कल्प्यन्तां द्वारयोमयः ।
प्रस्तरोत्तरयोर्मध्यं पञ्चधा विभजेद् बुधः ॥ ७० ॥
द्वारायामं चतुर्भागमष्टसप्तांशमेव वा ।
शेषांशे द्वादशांशे तु पञ्चांशं गुल्फमिष्यते ॥ ७१ ॥

शिरोन्मानं तु सप्तांशमथवा नवभाजिते ।
गुल्फमानं चतुर्भागं तत्र पञ्चांशकं शिरः ॥ ७२ ॥

उत्सेधशेषं परिधेर्द्वारतारमुदाहृतम् ।
उत्सेधे नवसम्भक्ते पञ्चांशं वात्र विस्तृतम् ॥ ७३ ॥

अथवा गुणतारं वा कुर्याद् द्वारं यथोचितम् ।
कुर्यात् प्राङ्गणतो गमागमकृते द्वारं महत् पादुके
हस्तैर्वाङ्गुलकैः प्रकल्पितशुभायाद्यप्ररूढोत्तरम् ।
स्वायामप्रतिभक्तरुद्रदशनन्देभांशविष्कम्भत-
स्त्वण्डोत्पन्नघनाङ्घ्रियुग्मविलसन्मङ्गल्यपट्टयादिकम् ॥७४॥

आग्नेय्यामङ्कणद्वारं दक्षिणाशामुखं स्मृतम् ॥ ७५ ॥
प्रत्यङ्मुखं तु नैर्ऋत्यां वायव्यां तदुदङ्मुखम् ।
ईशे तु प्राङ्मुखं कुर्यात् तानि स्युः पादुकोपरि ॥ ७६ ॥

अथान्यथा चतुःशालविधानमाह —

चतुःशालं त्रिशालं च द्विशालं चैकशालकम् ।
वक्ष्यामि भवनं राज्ञां नामलक्षणसंयुतम्॥ ७७ ॥

अलिन्दैश्चतुर्द्वारैश्चतुःशालमुदाहृतम् ।
सर्वतोभद्रनामेदं नृपाणां शस्यते गृहम् ॥ ७८ ॥

नन्द्यावर्तमिति ख्यातं पश्चिमद्वारवर्जितम् ।
वर्धमानं तथा ख्यातं दक्षिणद्वारवर्जितम्॥ ७९ ॥

स्वस्तिकं तद् भवेन्नाम्ना पूर्वद्वारविवर्जितम् ।
उत्तरद्वारहीनं चेद् रुचकं तद् भवेद् गृहम् ॥ ८० ॥

नन्द्यावर्तादि चत्वारि स्युस्त्रिशालानि भूभुजाम् ।

अथान्यथा —

नैर्ऋते मुख्यगेहं स्याच्छाले चोत्तरपूर्वगे ॥ ८१ ॥
पूर्वायाश्चोत्तरद्वारमुत्तरायाश्च पूर्वतः ।
कर्तव्ये गर्भगेहस्य द्वारे वास्तुविचक्षणैः ॥ ८२ ॥
एकं स्यात् पूर्वतो द्वारमन्यदुत्तरतः स्मृतम् ।
अङ्कणाद् दक्षिणा शाला हस्तिनी परिकीर्तिता ॥ ८३ ॥
अङ्कणात् पश्चिमा शाला महिषीति निगद्यते ।
इदं द्विशालं सिद्धार्थं सर्वकामफलप्रदम् ॥ ८४ ॥
नृपाणां शस्यते स्थानं विशेषाद् वित्तवर्धनम् ।
वायव्ये गर्भगेहं स्यात् शाले दक्षिणपूर्वगे ॥ ८५ ॥
द्वारे शालामुखे कार्ये शालाद्वारे च सम्मुखे ।
महिषी त्वङ्कणात् पश्चादुत्तरा गौः प्रकीर्तिता ॥ ८६ ॥
द्विशालं भयदं चैतद् द्वारपुर्यां विनिन्दितम् ।
ईशाने प्रथमे वेश्मे(?) शाले दक्षिणपश्चिमे ॥ ८७ ॥
अङ्कणात् पूर्वशालाखी + गौरुत्तरादिग्गता(?) ।
व्यासाख्यं नाम तत् प्रोक्तं नृणामुद्वेगकारणम् ॥ ८८ ॥
विशालमेकं सिद्धार्थं प्रशस्तं पृथिवीभुजाम् ।
क्रीडार्थं तन्निवासार्थं भोगार्थं च प्रशस्यते ॥ ८९ ॥
ध्रुवं हीनमलिन्देन पूर्वालिन्दं तु धन्यकम् ।
जयं स्याद् दक्षिणालिन्दं पश्चालिन्दं खरं भवेत् ॥ ९० ॥
दुर्मुखं चोत्तरालिन्दमेकालिन्दं चतुर्गृहम् ।
धन्यं जयं च शुभदं निन्दिते खरदुर्मुखे ॥ ९१ ॥

पूर्वदक्षिणतोऽलिन्दं नन्दमित्यभिधीयते ।
याम्यपश्चिमतोऽलिन्दं क्षयमित्यभिधीयते ॥ ९२ ॥
पूर्वपश्चिमतोऽलिन्दं कान्तं नाम्ना निगद्यते ।
दक्षिणोत्तरतोऽलिन्दं सुपक्षं परिचक्षते ॥ ९३ ॥
उत्तरालिन्दहीनं चेत् सुखं तत्तु प्रकीर्तितम् ।
पश्चिमालिन्दतो हीनं धनदं गेहमुच्यते ॥ ९४ ॥
दक्षिणालिन्दहीनं यदाक्रान्तं तदुदाहृतम् ।
पूर्वालिन्दविहीनं यद् विपुलं परिकीर्त्यते ॥ ९५ ॥
सर्वतोऽलिन्दतो युक्तं विजयं गेहमुत्तमम् ।
एवं षोडशगेहानि कथितानि परिस्फुटम् ॥ ९६ ॥
यथानाम फलं तेषु ज्ञेयं तत्र निवासिनाम् ।
धन्यं तस्मात् प्रकर्तव्यं नृपाणां गेहमुत्तमम् ॥ ९७ ॥
हीनस्तम्भमलिन्दं स्याच्छाला स्तम्भैः समावृता ।
नृपाणां गृहकर्तॄणां (कर्म ? क्रम) एष निरूपितः ॥ ९८ ॥
मुखं द्वारं विनिर्दिष्टं मन्दिरस्य विचक्षणैः ।

अथान्यथा —

नृपगेहानि वक्ष्यामि स्तम्भसंख्याप्रमाणतः ॥ ९९ ॥
चतुष्कालिन्दशोभीनि चतुर्भद्रैर्मनोहरैः ।
पृथ्वीजयं गृहं कार्यं दशभागं विचक्षणैः ॥ १०० ॥
मध्ये स्तम्भशतं तस्य भद्रेऽष्टाविंशतिस्तथा ।
चतुर्भद्रेषु च शतं स्तम्भानां द्वादशाधिकम् ॥ १०१ ॥

१. 'स' क. पाठः. २. 'का' ख. पाठः.

नवकोणविदिग्गेहे (स्यात् ? स्युः) षड्विंशच्चतुर्ष्वपि ।
चत्वारो मध्यगाः स्तम्भा यत्र तस्यां चतुष्कृतम् ॥ १०२ ॥
तस्माद् बहिरलिन्दः स्याच्छाला स्यात् तदनन्तरम् ।
अलिन्दं च पुनः शाला क्रमेणैवं प्रवर्तते ॥ १०३ ॥
यावत् कर्तुमभीष्टं स्याद् गृहं नरपतेः शुभम् ।
यच्चतुष्कशतं क्षेत्रं पञ्चधा तद् विभज्यते ॥ १०४ ॥
तन्नागप्र(तिमं ? मितं) कार्यं त्रिभिर्भागैरलिन्दकम् ।
सार्धत्रिभागिका शाला कर्तव्या सुविचक्षणैः ॥ १०५ ॥
इयं स्थितिः समस्तानां गृहाणां प्रतिपादिता ।
नाम्ना तु मुखकोणं यत् त(न्नागं ? त्कार्यं) रविभागतः ॥
मध्यस्तम्भाः शतं सार्धं षड्भिर्न्यूना निरूपिताः ।
शतं षष्ट्यधिकं ते स्युश्चतुर्भद्रेषु सङ्ख्यया ॥ १०७ ॥
एकादश तथा कोणे विदिशं विदिशं प्रति ।
चतुर्दश तथा त्रिंशच्चतसृष्वपि संख्यया ॥ १०८ ॥
कथ्यते सर्वतोभ(द्रे ? द्रं) मनुभागैर्विभाजितम् ।
मध्यस्तम्भा भवन्त्यस्य षण्णवत्यधिकं शतम् ॥ १०९ ॥
चत्वारिंशत् तथाचैव भद्रे स्तम्भा निरूपिताः ।
एवं च(तस्य ? तुर्षु) भद्रेषु शतं षष्टिस्तथाष्टकम् ॥ ११० ॥
कोणौस्तस्य विधातव्यास्त्रयोदशमिता बुधैः ।
समन्ताद् गुणिताः कोणा द्विपञ्चाशद् भवन्ति ते ॥
श्रीवत्समष्टभागं स्याच्चतुःषष्टिस्तु मध्यमाः ।
तस्य स्तम्भाः प्रयोक्तव्या भद्रेऽष्टादशसंख्यया ॥ ११२ ॥

---

१. 'न्देशे स्यात्' ग. पाठः.  २. 'णे तस्या वि' ख. पाठः.

चतुर्ष्वपि च भद्रेषु द्विसप्ततिरुदाहृताः ।
सप्तकोणाः समन्ताच्च द्विगुणा मनुसंख्यया ॥ ११३ ॥
एवमादीन्यनन्तानि गेहानि धरणीभुजाम् ।
कियन्त्यपि मयोक्तानि प्रधानानि यथाक्रमम् ॥ ११४ ॥
तिष्ठन् गेहेषु शस्तेषु श्रियमाप्नोति पुष्कलाम् ।
आरोग्यं विजयं कीर्तिं सन्तोषं परमाप्नुयात् ॥ ११५ ॥
ईदृग्लक्षणसंयुक्तान् विविधान् बहुभूमिकान् ।
कारयित्वा महीपालः प्राप्यचन्द्र(इ ? ब)लं महत् ॥
इति विज्ञाय नृपतिर्वासार्थं गृहमुत्तमम् ।
सुलक्षणयुतं दोषैर्विहीनं कारयेत् सुखम् ॥ ११७ ॥
ईशानभागकोणे तु सर्वलक्षणसंयुतम् ।
पूर्वतो मुखशालाया देवतारूपचिह्नितम् ॥ ११८ ॥
देवकार्यगृहं कार्यं नृपाणां सुमनोहरम् ।
स्नानगेहं तु तत्पार्श्वे कर्तव्यं वेदिकायुतम् ॥ ११९ ॥
होमशाला तदभ्याशे बहिः कुण्डविमण्डिता ।
धूमनिर्गमनोपायकृतजालपरिष्करा ॥ १२० ॥
अन्यान्युपगृहादीनि सुभक्तानि पुरैव हि ।
चित्रं लक्षणसंयुक्तं लेखयित्वा महीपतिः ॥ १२१ ॥
गृहस्यान्तर्बहिःकुड्यमुखेषु च विभूषयेत् ।
पूर्वतः शिल्पिनो गेहं परिगृह्य विनिर्मितम् ॥ १२२ ॥
गोमयाद्यैर्जलाद्यैश्च शुद्धिं विधिवदाचरेत् ।
अथ वास्तुबलिं विप्रैः कारयेत् तद्विधेर्मिदाम् ॥ १२३ ॥

१. 'प्ब' ख. पाठः.

वक्ष्ये पूर्वोक्तमार्गात्तु तद्धोमस्य विशेषकम् ।
अन्तर्गृहस्य कोणे स्याद् (?) ऐशाने शालिपिष्टकैः ॥
मण्डलं कारयेदेकाशीतिकोष्ठैर्यथापुरम् ।
कुण्डं त्रिमेखलं कार्यं मण्डलेशानभागतः ॥ १२५ ॥
तत्र होमः प्रकर्तव्यः शास्त्रदृष्टेन वर्त्मना ।
ततो मण्डलसंस्थाभ्यो देवताभ्यो बलिं हरेत् ॥ १२६ ॥
घृतान्नं देयमीशाय पर्जन्यायाज्यसंयुतम् ।
ओदनं सात्त्वतं दद्याज्जयन्ताय निवेदयेत् ॥ १२७ ॥
ध्वजानपूपान् पिष्टेन कूर्मरूपं प्रकल्पितम् ।
पैष्टं कुलिशमिन्द्राय पञ्च रत्नानि चार्पयेत् ॥ १२८ ॥
धूम्रवर्णं वितानं च सक्तून् सूर्याय कल्पयेत् ।
सत्याय घृतगोधूममत्स्यान् दद्याद् भृशाय च ॥ १२९ ॥
शष्कुलीरन्तरिक्षाय सक्तून् दद्याच्च पावके ।
पूष्णे लाजाः प्रदातव्या वितथे च(र?)णकौदनम् ॥
गृहक्षताय मध्वन्नं यमाय पललौदनम् ।
गन्धर्वाय सुगन्धं च *भृ(शा?ङ्गा)य रणजिह्मकः ?) ॥
मृगाय यावकं देयं पितृभ्यः कृसरांस्तथा ।
दौवारिके दन्तकाष्ठं पैष्टं कृष्णबलिं तथा ॥ १३२ ॥
क्षिपेदपूपं सुग्रीवे पुष्पदन्ते तु पायसम् ।
कमलं सकुशस्तम्बं वरुणाय समर्पयेत् ॥ १३३ ॥

* अत्रैव पूर्वभागे 'स्यात् पक्षिजिह्वा त्वथ भृङ्गराजे' (अध्या० ७ श्लो० ५१) इत्युक्तम् ।

असुराय सुरा देया पैष्टं सौवर्णमेव च ।
घृतौदनं च शोषाय यवाः स्युः पापसंज्ञके ॥ १२४ ॥
रोगाय मोदकान् स(र्पान्? र्पिः) फणिने नागकेसरम् ।
भक्ष्यो मुख्याय दातव्यः फल्लाटाय ततः क्षिपेत् ॥ १२५ ॥
मुद्गौदनं ततः सोमे पायसं मधुमिश्रितम् ।
शालिपिष्टं त्वर्गलाय लोपिकामदितेः क्षिपेत् ॥ १२६ ॥
दित्यै तु पूरिकान् दद्यादित्येवं बाह्यतो बलिः ।
मण्डलान्तरसंस्थानामिदानीं बलिरुच्यते ॥ १२७ ॥
आपाय दापयेत् क्षीरमापवत्साय वै दधि ।
आर्ये पैक्वं तथा मांसं दातव्यं बलिकर्मणि ॥ १२८ ॥
सावि(त्र्यै ? त्रे) मोदकं दद्याद् मरिचं[3] सकुशौदनम् ।
सवित्रे गुडपूपांश्च देयं स्याद् घृतचन्दनम् ॥ १२९ ॥
विवस्वते प्रदातव्यं पायसं रक्तचन्दनम् ।
देवाधिपतये दद्यात् तालमिश्रं घृतौदनम्* ॥ १३० ॥
मित्राय सघृतं भक्तं रुद्राय (सुध ? गुड)पायसम् ।
पृथ्वीधराय मांसानि सकूश्माण्डानि दापयेत् ॥ १४१ ॥
आज्यं च दधिसंयुक्तं ब्रह्मणे विनिवेदयेत् ।
शर्वस्कन्दाय चार्यम्णे जम्भके पिलिपिञ्जके ॥ १४२ ॥

१. 'श्चे' ख. पाठः. २. 'तत्त्वं त', ३. 'चिं' क. पाठः.

* इन्द्रानन्तरम् इन्द्रजयस्य, रुद्रानन्तर रुद्रजयस्य च पूजा मातृकासु लुप्ता स्यात् । सैषा 'शुद्धान्नमेवेन्द्रजयाय शस्तम्', 'मांसं तथा रुद्रजये त्वपक्वम्' (क्रियापा० पट० २७. श्लो० २५) इति गुरुदेववचनादवगन्तव्या ।

तिलाक्षतं पञ्चगव्यं भक्ष्यं भोज्यं पृथग्विधम् ।
मांसौदनं सरुधिरं हरिद्रौदनमेव च ॥ १४३ ॥
ईशानदिशमाश्रित्य चरक्यै विनिवेदयेत् ।
आग्नेयीं दिशमाश्रित्य स्थितायै मांसखण्डकम्॥ १४४ ॥
दध्योदनं सरुधिरं विदार्यै विनिवेदयेत् ।
पूतनायै च नैर्ऋत्यां पीतं रक्तं बलिं क्षिपेत् ॥ १४५ ॥
वायव्ये पापराक्षस्यै मत्स्यमांसं सुरासवम् ।
पायसं वा प्रदातव्यं तन्नाम्ना सर्वतः क्रमात्॥ १४६ ॥
सर्वेषां काञ्चनं दद्याद् ब्रह्मणे गां पयस्विनीम् ।
राक्षसानां बलिं दद्यान्मधुमांसौदनान्वितम् ॥ १४७ ॥
एवं सम्पूजिता देवाः शान्तिं कुर्वन्ति ते सदा ।
विप्रांश्च पूजयेद् भक्त्या विदुषो गृहमागतान्॥ १४८ ॥
इति वा(स्तो ? स्तू)पशमनं विरचय्य समाचरेत् ।
प्रासादभवनोद्यानप्रारम्भे च समापने ॥ १४९ ॥
परमैश्वर्यवृद्ध्यर्थं सर्वदोषोपशान्तये ।
विधाय वास्तुपूजां च गृहं सूत्रेण सर्वतः ॥ १५० ॥
पावमानेन सूक्तेन रक्षोघ्नेन च वेष्टयेत् ।
मङ्गलं तूर्यघोषेण कुर्याद् ब्राह्मणवाचकैः॥ १५१ ॥
वृतं सद्म विशेद् राजा सुमुहूर्ते विशेषतः ।
ब्राह्मणोदीरितैर्मन्त्रैः शोभनैः शङ्खनिस्वनैः ॥ १५२ ॥
मङ्गलैस्तूर्यनादैश्च विशेद् वेश्म विशांपतिः ।
प्रासादे रुचिरोत्तुङ्गे सौवर्णकलशान्विते॥ १५३ ॥

सुधाधवलिते रम्ये रचनापरिशोभिते ।
जालमार्गकृतोद्याने क्वापि सर्वप्रकाशके ॥ १५४ ॥
क्वापि सन्तमसोपेते मणिदीपप्रकाशिते ।
सौवर्णस्तम्भरुचिरे चन्दनस्तम्भगन्धिनि ॥ १५५ ॥
काचकुट्टिमरोचिष्णौ स्फटिकोज्ज्वलकुट्टिमे ।
स्फटिकोपलविन्यासदर्पणाकारभित्तिके ॥ १५६ ॥
विचित्रचित्रसंयुक्तप्रमोदप्रदकुट्टिमे ।
चित्रवस्त्रसमाकीर्णवितानेनोपरञ्जिते ॥ १५७ ॥
यथासुखं विशेद् राजा राष्ट्रैश्वर्यसमन्वितः ॥ १५७½ ॥

इति शिल्परत्ने उत्तरभागे मनुष्यालयलक्षणं नाम एकत्रिंशोऽध्यायः ॥

---

अथ द्वात्रिंशोऽध्यायः ।

अथ कूपप्रश्नः ।

मीनकर्किमृगान्त्यार्धवृषतौल्यलियोषितः ।
कुम्भश्च तोयदानि स्युर्ग्रहेषु शशिभार्गवौ ॥ १ ॥
तोयात्मकौ ज्ञजीवौ तु सतोयौ तोयराशिगौ ।
वितोयावन्यराशिस्थावथ शन्यर्कभूमिजाः ॥ २ ॥
राहुश्च जलराशिस्थाः स्वल्पतोया भवन्ति हि ।
जलवर्यजलेन गतेऽधस्ताज्जलमुपरि भवति विपरीते ।
जलवद्द्वयसंपाते प्रभूतमुदकं विनिर्देश्यम् ॥ ३ ॥
स्पृशति यदि वामभागे नैर्ऋतभागे विनिर्दिशेद् वारि ।
ऐशान्यामूर्ध्वाङ्गे शेषेषु स्पर्शतोऽनिलस्थाने ॥ ४ ॥

जलसंज्ञो राशिर्वा जलग्रहो वापि लग्नगतः ।
कूपविधौ चिन्त्यः स्यादार्द्रद्रव्यप्रसङ्गो वा ॥ ५ ॥
प्रश्नवचनादिवर्णे वर्गचतुर्थे(थ)वा स्वरे दीर्घे ।
भवति जलं न भवति तद्वर्गादौ चान्तिमे द्वितीये वा ॥ ६ ॥
राहुयुतश्चन्द्रश्चे(श्च)र)लग्नस्थो भवेदम्बु ।
दशमगते वा भानौ पातालस्थो गुरुस्तथा तादृक् ॥ ७ ॥
लग्ने जलवति सेन्दौ प्रष्टरि जलराशिगे भवेदम्भः ।
पातालस्थे पाते पृच्छकचन्द्रौ सहस्थितौ तद्वत् ॥ ८ ॥
स्वोच्चगतौ भृग्विन्दू नीचगतैः प्रेक्षितौ पृथग् जलदौ ।
प्राग्गमने चण्डालो यद्यागच्छेत् तदाशु वेश्या वा ॥ ९ ॥
प्रमुषितको यदि वायात् कूपे वाच्यं जलं भूरि ।
आर्द्रद्रव्यं स्पृशति यदि वा वारि तत्संज्ञितं वा
तोयासन्नो भवति यदि वा तोयकार्योन्मुखो वा ।
प्रष्टा वाच्यः सलिलमचिरादस्ति निःसंशयेन
पृच्छाकाले सलिलमिति वा श्रूयते यत्र शब्दः ॥ १० ॥
अम्भःप्रश्ने सलिलनिलयं राशिमाश्रित्य चन्द्रो
लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे ।
सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमम्भ-
श्चिन्त्यो युक्त्या सुमतिभिरतश्चन्द्रवद् भार्गवोऽपि ॥ ११ ॥
पातालराशियुक्ताद् ग्रहयोगाद् दर्शनाच्चापि ।
कूपाम्भोरसमाहुर्लग्नवांशेशतुल्यं वा ॥ १२ ॥
कटुलवणतिक्तमिश्रा मधुराम्लौ + कषायमर्कादेः ।
प्रश्नवचनादिवर्णाद् रसभेदाः स्युस्तथा वाच्याः ॥ १३

अकचटतपयशवर्गाश्चन्द्राद्यर्कान्तरसतुल्याः ।
सास्थिनि देहे स्पर्शो नेष्टः शिष्टेषु पुष्टफलम् ॥ १४ ॥
मांसाक्ये पङ्कयुतं काले पाषाणसंयुक्तम् ।
प्रष्टरि तोयगते चेत्तोयं सुलभं तथा दृषद् दृषगे ॥ १५ ॥
रुदिते क्षवथौ कासे निष्ठीवे नासिकास्रवे ॥ १६ ॥
शीतच्छायाप्रवेशे च जले दृष्टे श्रुतेऽथवा ।
जलमस्तीति वक्तव्यं पृष्टकाले दृषद्यपि ॥ १७½ ॥

इति शिल्परत्ने उत्तरभागे कूपप्रश्नविधानं नाम
द्वात्रिंशोऽध्यायः ॥

---

## अथ त्रयस्त्रिंशोऽध्यायः ।

### अथासनादिपरिच्छदलक्षणम् ।

चम्पकाम्रमधूकैर्वा पनसोदुम्बरादिभिः ।
पीठानि कारयेद् विद्वान् सिंहयोन्यन्वितानि वा ॥ १ ॥
गजयोन्यन्वितान्येवं ध्वजयोन्यन्वितानि वा ।
आयतं चतुरश्रं च समं तुर्यश्रमेव वा ॥ २ ॥
वृत्तं वा कच्छपाकारं कारयेत् पीठमुत्तमम् ।
चतुष्पादसमायुक्तं पृष्ठाधारयुतं तु वा ॥ ३ ॥
यथोचितोन्नतोपेतं श्लक्ष्णं दृष्टिमनोहरम् ।
फलकामयमेवं स्याद् वेत्रबन्धमथापि वा ॥ ४ ॥
एतत् पूतासनं देवकार्यादौ विहितं बुधैः ।
कार्पासपूरितं वृत्तं स्थूलं पट्टावकुण्ठितम् ॥ ५ ॥

हंसपिञ्छभृतं वापि सुखासनमितीरितम् ।
छागचर्ममयं पीठमूर्णागर्भं सुविस्तृतम् ॥ ६ ॥

नानावर्णविचित्रं तदासनं च सुखाभिधम् ।
सितपट्टपिनद्धैश्च हंसपिञ्छैः सुपूरितम् ॥ ७ ॥

स्वेद + + + + + + + + शय्यासनमुत्तमम् ।
पञ्चभिः सप्तभिर्वापि नवभिर्लोहजैः पदैः ॥ ८ ॥

लोहपट्टकृताधारैर्लोहजालकमूर्धभिः ।
(छटिको ?) पट्टगर्भस्थकार्पासेन विनिर्मितम् ॥ ९ ॥

लोहासनमिदं प्रोक्तमूर्ध्वतः कलितं दृढम् ।
एकदारुकृतं श्लक्ष्णं दन्तिदन्तसुचित्रितम् ॥ १० ॥

नानावर्णविचित्राढ्यं पृष्ठे फलकसंयुतम् ।
चतुष्पादकृताधारं सार्धहस्तविशालकम् ॥ ११ ॥

प्रायेण सार्धत्रिकरदीर्घं तस्योर्ध्वतः पुनः ।
तावन्मात्रायताद्युक्तमृदुशय्यासनादिकम् ॥ १२ ॥

ईषत् समुन्नतं राज्ञां पृष्ठाधारासनं स्मृतम् ।
रुचिरेण सुवर्णेन निर्मितं रत्नमण्डितम् ॥ १३ ॥

अष्टाभिः स्फाटिकैः सिंहैः मूर्धभिः सुविधारितम् ।
अधः काञ्चनविन्यस्तरत्नवेदित्रयान्वितम् ॥ १४ ॥

आस्थानमण्डपे राज्ञां सिंहासनमिदं वरम् ।

अथ व्यजनं—

चामरं तालवृन्तं च द्विविधं व्यजनं स्मृतम् ॥ १५ ॥

मयूरपिञ्छसम्भूतं वृत्ताकारविचित्रितम् ।
तालवृन्तमिति ख्यातं ध्वजयोनिसमन्वितम् ॥ १६ ॥

चामरं चमरीपुच्छसम्भवं स्थूलमूलकम् ।
कृशाग्रं सुसितं स्निग्धं तयोर्दण्डं च कारयेत् ॥ १७ ॥

हेमजं रत्नखचितं वृत्तं सुस्पर्शमेव च ।
चन्द्रमण्डलसङ्काशं नानापट्टविनिर्मितम् ॥ १८ ॥

तालवृन्तविशेषं तद् व्यजनं समुदाहृतम् ।
तालपत्रसमुद्भूतमअकालङ्कृतं तु वा ॥ १९ ॥

अथच्छत्रं —

चन्द्रमण्डलसङ्काशं पङ्कजाकारमेव वा ।
लम्बितानेकवरणनीप्रयुक्तमथापि वा ॥ २० ॥

सदण्डं मकुटोपेतं वंशसूत्रादिनिर्मितम् ।
नानाविधपटीच्छन्नं ध्वजयोनिसमन्वितम् ॥ २१ ॥

चित्रितं पट्टसूत्राद्यैश्छत्रमेवं समीरितम् ।
तालीपत्रकृतं वापि वंशदण्डं विशेषतः ॥ २२ ॥

मकुटेनान्वितं वापि वर्जितं वा सुशोभनम् ।
सितपट्टकृतं रत्नदण्डं पङ्कजसन्निभम् ॥ २३ ॥

सरत्नहेममकुटं मुक्तादामविभूषितम् ।
सितच्छत्रमिदं ख्यातं सार्वभौमोचितं स्मृतम् ॥ २४ ॥

प्रतिषिद्धवृक्षनिर्मितशयनासनसेविनां कुलविनाशः ।
व्याधिभयव्ययकलहा भवन्त्यनर्थाश्च नैकविधाः ॥ २५ ॥

(धू ? पू)र्वच्छिन्नो (यदिवा) दारुरतद्वत् परीक्ष्य(मा ? आ)रम्भे।
यद्यारोहेत् तस्मिन् *कुमारादिकावस्रपशुदः सन् (?) ॥ २६ ॥
(सितकुसुम)मत्तवारणदध्यक्षतपूर्णकुम्भरत्नानि ।
मङ्गल्यान्यन्यानि च दृष्टारम्भे शुभं ज्ञेयम् ॥ २७ ॥
कर्माङ्गुलं यवाष्टकमुदरासक्तं तुषैः परित्यक्तम् ।
अङ्गुलशतं नृपाणां महती शय्या जयाय कृता ॥ २८ ॥
नवतिः सैव षडूना द्वादशहीना त्रिषट्कहीना च ।
नृपपुत्रमन्त्रिबलपतिपुरोधसां स्युर्यथासङ्ख्यम् ॥ २९ ॥
अर्धमतोऽष्टांशोनं विष्कम्भो विश्वकर्मणा प्रोक्तः ।
आयामत्र्यंशसमः पा(दो)च्छ्रायः सकुक्षिशिरः ॥ ३० ॥
यः सर्वः श्रीपर्ण्या पर्यङ्को निर्मितः स धनदाता ।
असनकृतो रोगहरस्तिन्दुकसारेण वित्तकरः ॥ ३१ ॥
यः केवलशिंशपया विनिर्मितो बहुविधं स वृद्धिकरः ।
चन्दनमयो रिपुघ्नो धर्मयशोदीर्घजीवितकृत् ॥ ३२ ॥
पद्मकपर्यङ्कः श्रियमायुर्दीर्घं श्रुतं शुभं वित्तम् ।
कुरुते सालेन कृतः कल्याणं शाकरचितश्च ॥ ३३ ॥
अन्येन समायुक्ता न तिन्दुकिः शिंशपा (च) शुभफलदा ।
न श्रीपर्णी नच देवदारुवृक्षो नचाप्यसनः ॥ ३४ ॥
शुभदौ तु सालशाकौ परस्परं संयुतौ पृथक्त्वे च ।
तद्वत् पृथक् प्रशस्तौ सहितौ च हरिद्रककदम्बौ॥ ३५॥
फलतरुणा शयनासनमिष्टफलं भवति सर्वेषाम्।
गजदन्तः सर्वेषां प्रोक्ततरूणां प्रशस्यते योगा(त्) ॥ ३६ ॥

* 'कुमारकः पुत्रपशुदः सः' इति पाठः स्यात् ।

कार्योऽलङ्कारविधिर्गजदन्तेन प्रशस्तेन ।
दन्तस्य मूलपरिधिं त्वायामात् प्रोज्झ्य कल्पयेच्छेषम् ॥
अधिक(मग्रो ?)मनूपचराणां न्यूनं किञ्चिद् गिरीन्द्रचाराणाम् ।
ईषायोगे दारु प्रदक्षिणाग्रं प्रशस्तमाचार्यैः ॥ ३८ ॥
अपसव्यैकादिगग्रे भवति भयं भूतसंजनितम् ।
पादे कुम्भाधश्चेद् ग्रन्थिस्तस्मिन् सुदारुणो रोगः ॥ ३९ ॥
कुम्भाधस्ताज्जङ्घा तत्र कृतो जङ्घयोः करोति भयम् ।
तस्याश्चा(धो ? धा) रोऽधः क्षयकृद् द्रव्यस्य तत्र कृतः ॥
खुरदेशे यो ग्रन्थिः खुरिणां पीडाकरः स निर्दिष्टः ।
ईषाशीर्षण्योश्च त्रिभागसंस्थो भवेन्न शुभः ॥ ४१ ॥
निष्कुटमथ कोलाक्षं सूकरनयनं च वत्सनाभं च ।
कालकमन्यद् वृद्धकमिति कथितारिछद्रसङ्क्षेपाः ॥ ४२ ॥
*पादपसुषिरं मध्ये सङ्कटमास्ये च निष्कुटच्छिद्रम् ।
निष्पावमाषमात्रं नीलं छिद्रं च कोलाक्षम् ॥ ४३ ॥
सूकरनयनं विषमं विवर्णमध्यं§ द्विपर्वदीर्घं च ।
वामावर्तं भिन्नं पर्वयुतं वत्सनाभाख्यम् ॥ ४४ ॥
कालकसंज्ञं कृष्णं वृद्धकमिति यद् भवेद् विनिर्भिन्नम् ।
दा(रौ पर्य ? रुसवर्ण) छिद्रं न तथा पा(ङ्गं ? पं) समुद्दिष्टम् ॥
निष्कुटके द्रव्यस्य क्षयमथ कोलेक्षणे कुलध्वंसः ।
शस्त्रभयं सूकरके रोगभयं वत्सनाभाख्ये ॥ ४६ ॥
कालकवृद्धकसंज्ञं कीटैर्विद्धं च न शुभदं छिद्रम् ।
सर्वं ग्रन्थिप्रचुरं सर्वत्र न शोभनं दारु ॥ ४७ ॥

* 'घटवत् सुषिरम्' इति, § 'अध्यर्धपर्वदीर्घं च' इति च बृहत्संहिता ।

एकद्रुमेण धन्यं वृक्षद्वयनिर्मितं च धन्यतरम् ।
त्रिभि)रात्मजवृद्धिकरं चतुर्भिरर्थो यथाश्वाग्र्यम् ॥ ४८ ॥
पञ्चवनस्पतिरचिते पञ्चत्वं याति तत्र यः शेते ।
षट्सप्ताष्टतरूणां काष्ठैर्घटिते कुलविनाशः ॥ ४९ ॥
भूमयो ब्राह्मणादीनां यथोक्ता वास्तुकर्मणि ।
ता एव तेषां शस्यन्ते देवतायतनेष्वपि ॥ ५० ॥

अथ वाहनम्—

डोला सुखासनं तद्वद् रथो नौः प्लवकस्तथा ।
वाहानि पञ्च ज्ञेयानि नराणां कृत्रिमाणि वै ॥ ५१ ॥
सुवक्रया वेणुजया हेमरत्ननिबद्धया ।
स्वर्णशृङ्खलया पट्टन्यस्तशय्योपधानया ॥ ५२ ॥
दिव्यपट्टप्रच्छदया वाहकद्वयवाह्यया ।
एकदण्डिकया नद्धं डोलायानं तदुच्यते ॥ ५३ ॥
दन्तिदन्तकृतं हेमरत्नजालविभूषितम् ।
शार्दूलचर्मसंनद्धं दण्डकद्वयधारितम् ॥ ५४ ॥
चतुर्भिर्वाहकैर्वाह्यं हंसशय्यासमन्वितम् ।
पृष्ठाधारेण संयुक्तं सुखासनमिति स्मृतम् ॥ ५५ ॥
वक्ष्यमाणक्रमं चोक्तलक्षणाकारलक्षितम् ।
निर्मितं दन्तिदन्ताद्यैर्नानावर्णविचित्रितम् ॥ ५६ ॥
हेमरत्नसमाकीर्णं मृदुशय्यास्तृतान्वितम् ।
डोलोक्तमार्गसंबद्धदण्डया च समन्वितम् ॥ ५७ ॥
तद्दण्डमध्यसंलम्बहस्ताधारसमन्वितम् ।
यानं यत्तु तदेव स्याद्डोलाभेदमिति स्मृतम् ॥ ५८ ॥

लोहजं दण्डकं मध्यं कृतं दार्वादिभिः पुनः ।
मूलाग्रबाहुसुभगं शृङ्खलापट्टिकान्वितम् ॥ ५९ ॥
लोहडोलमिदं तत्तु यानं मानुषसम्मितम् ।
अश्वैश्चतुर्भिर्द्वाभ्यां वा युक्तश्च युगलान्वितैः ॥ ६० ॥
विस्तारादाततताधिक्यः सर्वचित्रसमन्वितः ।
मुखे पृष्ठे यथान्यायं मकराननलक्षितः ॥ ६१ ॥
नानावर्णपताकाभिर्भ्राजितः सुदृढा(त्म ? क्ष)कः ।
स्यन्दनोऽयं नृपाणां वै निर्मितो वाहनोत्तमः ॥ ६२ ॥
डोलादण्डायतं तत्र कारयेद् योनिभेदतः ।
अष्टाङ्गुलोनषड्ढस्तं रविहस्तौ प्रशेरते (?) ॥ ६३ ॥
सप्तहस्तं तथाप्यष्टमात्रोनदशहस्तकम् ।
पञ्चहस्तं तथाप्यष्टमात्रान्वितदिगक्षरम् ॥ ६४ ॥
एवं षोढोत्तमं मध्यं सप्तधा कीर्तयाम्यहम् ।
साष्टमात्राष्टहस्तं चाप्येकादशकरं तथा ॥ ६५ ॥
साष्टाङ्गुलं (च) षड्ढस्तं नवहस्तं तथैव च ।
साष्टार्काङ्गुलहस्तं च पर्ववयो + + + + ॥ ६६ ॥
अष्टाङ्गुलोनाष्टकरं त्रयोदशकरं पुनः ।

अथ नौः —

लाकुचैः फलकैः क्लृप्ता चोपवल्कलवेष्टिता ॥ ६७ ॥
आवृता सुदृढा नीरे सा नौर्याने प्रशस्यते ।
वेणुकर्म्राभि(?)रन्योन्यं गुम्फितो वर्तुलाकृतिः ॥ ६८ ॥

---

१. 'र्मां' ख. पाठः.

पिनद्धश्चर्मणा बाह्ये प्लवकोऽयं जलेचरः।
एकवृक्षभवा वा स्याद्नानाकारसमन्विता ॥ ६९ ॥
नौका *नद्रीचिका धान्या (?) महती सागरोचिता।
नानाप्रमाणफलका बहुबद्धा यथादृढम् ॥ ७० ॥
सर्वेषामायतत्र्यंशादधिकं नैव विस्तृतिः।
उत्सेधं च तथायामसमं वा पटपादके ॥ ७१ ॥
नौतारात्रिगुणं प्रोक्तं सर्वत्र पटविस्तृतम्।
एकत्रिपञ्चसप्त स्युः पटपादा यथोचितम् ॥ ७२ ॥
कर्णधारादिसंयुक्तं कार्यं नौवाहनं स्मृतम्।
उत्तमं ध्वजजं यानं मध्ये सिंहगजान्विते ॥ ७३ ॥
वृषयोनिसमायाममधमं वाहनं स्मृतम्।

अथ शयनसाधनम्—

(निषिद्ध ?)हंसपिच्छमयी काचिच्छाल्मलेस्तूलजा परा॥
कार्पासरचिता चान्या केसरैरितरा कृता।
एता वस्त्रदुकूलादिकल्पिताः सुविचित्रिताः ॥ ७५ ॥
पल्लवैः कल्पिता काचित् काचित् कुसुमनिर्मिता।
शीताम्भःपूरिता छागचर्मणा रचिता परा ॥ ७६ ॥
ताः सर्वाः स्वायसंपन्ना दशतालायतान्विताः।
नवतालान्विताः कार्या अष्टतालान्विताश्च वा ॥ ७७ ॥
स्वायामार्धत्रिपादादिविस्तीर्णाः प्रायशः स्वितम् (?)।

अथ खट्वा—

दन्ताङ्घ्रिर्लोहचरणः साष्टापदपदस्तथा ॥ ७८ ॥

* 'नध्रीचिता धन्या' इत्येवञ्जातीयः पाठः स्यात्

अचलश्च चलश्चैव वेत्रकः पट्टिकामयः ।
डोलाख्यश्चेति कथिता शय्या विद्वद्भिरष्टधा ॥ ७९ ॥
द्विपद(न्त)कृतैः पादैश्चतुर्भिरुपशोभितः ।
दन्ताङ्घ्रिर्नाम मञ्चोऽयं सर्व(मञ्च ? दन्त)मयः शुभः ॥
ताम्रारकूटघटितैश्चरणैस्तन्मयैः शुभैः ।
लोहमञ्चकनामायं सुदृढः परिकीर्तितः ॥ ८१ ॥
चारुचामीकरानद्धो रचनापरिरञ्जितः ।
अष्टापदमयः प्रोक्तो मञ्चकोऽयं चतुष्पदः ॥ ८२ ॥
यन्त्रयन्त्रीकृतैर्नादैरानन्दं तनुते नदन् ।
अचलोऽयं समाख्यातो रतिकेलिसुखावहः ॥ ८३ ॥
उपवेशनमात्रेण गच्छत्यूर्ध्वमधश्च यः ।
दृढाङ्घ्रिश्चारुरूपश्च चलमञ्चः प्रकीर्तितः ॥ ८४ ॥
त्वग्भिर्वेत्रस्य बाह्याभिस्तनुभिर्गुम्फितो घनम् ।
आयामतिर्यक्कर्णाभिर्यथादृष्टिमनोहरम् ॥ ८५ ॥
स्पर्शे मन्दरवाढ्यश्च वेत्रमञ्चः प्रकीर्तितः ।
कार्पासगुणक्लृप्ताभिः सुपट्टाभिः सुगुम्फितः ॥ ८६ ॥
दीर्घाभिश्चित्रवर्णाभिर्मञ्चोऽयं पट्टिकाभिधः ।
श्रीकण्ठदारुघटितो नदत्काञ्चनभूषितः ॥ ८७ ॥
फलकामस्तु(?)तच्चीवफलकाचित्रसंयुतः ।
सौवर्णशृङ्खलाबद्धो लम्बमानः स डोलकः ॥ ८८ ॥
मञ्चानामायतं तारं शय्यावत् कारयेद् बुधः ।
आधारमुपधानस्य मञ्चतारसमायतम् ॥ ८९ ॥

१. 'मयस्तु' क. पाठः.

तदर्धं वा त्रिपादं वा तुङ्गं तत्सममेव वा ।
फलकं जालकं वाथ कारयेदग्रमूलयोः ॥ ९० ॥
शिरोपधानं पादोपधानं कार्यं यथाशुभम् ।
शय्यातारसमायामं तदर्धविपुलान्वितम् ॥ ९१ ॥
तूलादिपूरितं प्राग्वच्चतुष्कोणसमन्वितम् ।
वृत्ताकारं तु वा कुर्यान्नानावर्णविचित्रितम् ॥ ९२ ॥

अथ पादुकम्—

लघुदारुकृतं चारु सुस्निग्धं पादसंयुतम् ।
तत्तत्पादतलायामविस्तारं सुलघुक्रियम् ॥ ९३ ॥
लघुच्छत्रकृताधारं पादसौख्यप्रदं परम् ।
नात्युच्छ्रितं नातिनीचं कारयेत् पादुकद्वयम् ॥ ९४ ॥
छागत्वचाथ वा कार्यं नानाचित्रविचित्रितम् ।
शुभयोन्यादिसंयुक्तं स्वर्णरत्नविभूषितम् ॥ ९५ ॥
एतेषामपि वस्तूनां हस्तैर्वाङ्गुलकैर्यवैः ।
यथासम्भवमायादि परिध्यादिषु कारयेत् ॥ ९६ ॥

अथ कुडुबादिमानसाधनम्—

वृत्तं वा चतुरश्रं वा धान्यादेर्मानसाधनम् ।
एकाङ्गुलमितं तारं दीर्घं घातं च तत्समम् ॥ ९७ ॥
यत्तद् घनाङ्गुलं प्रोक्तं तेनाहुस्तस्य लक्षणम् ।
सार्धत्रयोदशमितं यत्र जातं घनाङ्गुलम् ॥ ९८ ॥
कुडुबोऽयं समुद्दिष्टः चतुष्पञ्चाशदङ्गुलः ।
घनरूपं यत्र दृष्टं प्रस्थः स्याद् द्विशतोत्तरम् ॥ ९९ ॥

यत्र षोडशकं जातं घनसंज्ञकमङ्गुलम् ।
आढकोऽयं समाख्यातः सर्वधान्यादिमापने ॥ १०० ॥

चतुःषष्टियुतं यस्मिन् घनमष्टशताङ्गुलम् ।
द्रोणोऽयमयुतादूर्ध्वं त्रिसाहस्रघनाङ्गुलम् ॥ १०१ ॥

शतानामष्टकयुतं चतुर्विंशत्समन्वितम् ।
खारीति विदिता तज्ज्ञैः सर्वे वै दारुलोहजाः ॥ १०२ ॥

यथा तेषां बहिर्भागे शुभायादिसमुद्भवः ।
तथा भित्तेर्घनं कुर्यात् सङ्क्रमौथं च लोहजम् ॥ १०३ ॥

ऊर्ध्वभागे तु तन्मध्ये तदाधाराय लोहजम् ।
पादं च पत्रचित्राढ्यं भित्तिबाह्ये सश्रृङ्खलम् ॥ १०४ ॥

दण्डं सुवर्तुलं लौहं कार्यं धान्यापसारकम् ।
तुर्यश्रे व्यासगुणितमायामगतमात्रकम् ॥ १०५ ॥

तद्घाताङ्गुलनिभं यत् तत् दन्तर्घनाङ्गुलम् ।
वृत्ते व्यासार्धगुणितं नाहार्धं घातताडितम् ॥ १०६ ॥

अथोलूखलादि—

हस्तमात्रससुत्सेधं वर्तुलं लघुमध्यमम् ।
आयामार्धं त्रिपादं वा तारं तच्चयंशमानतः ॥ १०७ ॥

गर्तस्य घातं तारं च शैलं वा वार्क्षमेव वा ।
उलूखलाङ्घ्रिभित्त्येवं कारयेत् सुदृढं यथा ॥ १०८ ॥

सारदारुकृतान्येव मुसलानि भवन्ति हि ।
पञ्चाङ्गुलोनद्विकरायायतानि दृढानि च ॥ १०९ ॥

आयामषोडशांशादिविष्कम्भान्यग्रमूलयोः ।
कृष्णलोहैर्मुखं कुर्यात् सर्वधान्यक्षतक्षमम् ॥ ११० ॥
यावद्भिर्मुसलैरिष्टमवघातं नरैरिह ।
तावद्भिरेव कार्यं स्यादथवा यन्त्रसंस्थितैः ॥ १११ ॥
मुसलैर्बहुभिश्चेत्तत् कार्यमेकेन तद्विदा ।

अथ तुला —

दशार्धगुञ्जं प्रवदन्ति माषं
माषाह्वयैः षोडशभिश्च कर्षः ।
कर्षैश्चतुर्भिश्च पलं तुला त-
च्छतं सुवर्णस्य सुवर्णसंज्ञम् ॥ ११२ ॥

अथ तैलद्रोणिः —

धाराद्यर्थं रोगिणां वैद्यकर्म-
ण्येवं खट्वां कारयेच्छिल्पिवर्यैः ।
वृक्षैर्वातघ्नोदितैराम्रदार्वा-
द्यैस्तद्युक्त्या मानुषाणां हिताय ॥ ११३ ॥

खट्वा रुद्रवितस्तिदीर्घमहिता तुर्यांशविस्तारिता
(सा न चरद्भित्तिकां धर्मतला ?)स्निग्धोपधानाग्रतः ।
मूले मात्रमितोक्तनालसुषिरा मूले तथाप्यग्रके
भास्वत्तद्द्विगुणाङ्गुलोच्चचरणद्वन्द्वान्विता स्याद् दृढम्
[॥ ११४ ॥

अथ जलयन्त्रम् —

निर्माय शकटद्वन्द्वं तयोर्दूरस्थयोः पुनः ॥ ११५ ॥

पट्टिकाभिर्नेमिबाह्ये परितः परिवेष्टयेत् ।
तिर्यग्गताभिः सुदृढं सान्तरं वृषयोनिकम् ॥ ११६ ॥
तद् यन्त्रं चतुरश्राभं दण्डप्रोतस्वनाभिकम् ।
सुवृत्तं तद्दण्डिकाग्रद्वयं तु भ्रमणक्षमम् ॥ ११७ ॥
जलाशयोपरि यथा तथा स्तम्भेषु योजयेत् ।
पाशे बद्ध्वा त(सः?तः)पात्रं प्रक्षिपेत् तज्जलाशये ॥
तत्पाशाग्रं यन्त्रपृष्ठे वेष्टयित्वा वृतिद्वयम् ।
आकृष्योद्धरणं कार्यं जलस्य लघु यत्नतः ॥ ११९ ॥
अथवा जलपात्राणि वेणुनालकृतानि वै ।
बहूनि पाशे सम्बध्य मालाकारं निरन्तरम् ॥ १२० ॥
मुखे पृष्ठं परस्यास्य मुखेऽन्यस्य यथा तथा ।
यन्त्रपृष्ठे क्षिपेन्मालां जलपात्रमयीमिमाम् ॥ १२१ ॥
भ्रामयेद् यन्त्रमथ तत्तीरगैर्वा महावृषैः ।
तद्दण्डिकास्थसुमहद्यन्त्रान्तरगतैर्नरैः ॥ १२२ ॥
पात्राणि तोयमादाय गत्वोर्ध्वे यन्त्रपृष्ठतः ।
प्रक्षिप्य गच्छन्ति पुनस्तद्भ्रमक्रममाननः ॥ १२३ ॥
तुलायन्त्रेण वा तोयोद्धारणं तत्तु कथ्यते ।
कूपाद्यगाधमानेन दशभागकृते पुनः ॥ १२४ ॥
तदष्टांशोन्नतं पादद्वन्द्वं तीरेऽब्धिभागतः ।
दूरे संस्थाप्य पादाग्रे दण्डं भ्रमरिकान्वितम् ॥ १२५ ॥
बद्ध्वा भ्रमरिकायां तु तुलादण्डं च योजयेत् ।
पादतुल्यसमायामं भ्रमरादूर्ध्वगं पुनः ॥ १२६ ॥

भ्रमराधोगतं (?) युक्त्या कृत्वास्मिन् भारवाहकम् ।
द्व्यंशायतं चलं बद्ध्वा भारं तन्मूलतः क्षिपेत् ॥ १२७ ॥
दण्डाग्रे क्षेपणीं बद्ध्वा पाशैर्वंशाग्रजां दृढाम् ।
भाण्डं च क्षेपणीमूले योजयेच्चलबन्धतः ॥ १२८ ॥
जलाशयोपरिगतः सङ्क्रमीथस्थितो नरः ।
गृहीत्वा क्षेपणीं दोर्भ्यामाकृष्य जलमुद्धरेत् ॥ १२९ ॥

अथेक्षुयन्त्रं —

षडङ्गुलविष्कम्भं वा पादोनद्विकरायतम् ।
सुवृत्तमार्जवयुतं सुस्निग्धं सारदारुजम् ॥ १३० ॥
तदग्रेऽर्काङ्गुलायामं शिरःकाष्ठं दशाङ्गुलम् ।
विष्कम्भमुभयोः कार्यं तन्नाहेऽथाष्टधा कृते ॥ १३१ ॥
एकैकांशैश्चतुर्दिक्षु कारयेच्चतुरर्गलम् ।
अर्गलद्वयमध्यस्थान्यन्तरालान्यथान्यकैः ॥ १३२ ॥
वृत्तपृष्ठान्यर्गलानि काष्ठोष्ठोच्चाय(मका ? ता)नि च ।[1]
अन्तरालानि निम्नानि द्विद्विमात्रप्रमाणतः ॥ १३३ ॥
एवं स्तम्भयुगं कृत्वा संस्थाप्योलूखलावटे ।
अन्तरालेऽर्गलं कृत्वा मेलयित्वा निरन्ध्रकम् ॥ १३४ ॥
शिरःकाष्ठादधः कार्यं स्तम्भं तत्रगपट्टिका ।
यन्त्रस्तम्भद्वयप्रोता विश्लेषभयशङ्कया ॥ १३५ ॥
तयोरन्यतरस्योर्ध्वशिखासम्बन्धयष्टिगैः ।
वृषैः स्तम्भमयेत् स्तम्भं तदन्यस्त्वन्यथा तदा ॥ १३६ ॥

---

१. 'ष्ठोय' ख. पाठः.

करोति भ्रमणं तस्मात् तन्मध्यन्यस्तमैक्षवम् ।
खण्डं संपीड्य निस्सारं पतत्यन्यत्र तत्क्षणात् ॥ १३७ ॥

अथ नाडीयन्त्रं —

शुद्धताम्रादिक्लृप्तं यत् कपालं वर्तुलाकृति ।
सर्वतस्तुल्यघनमप्यत्यन्तं लघु तस्य तु ॥ १३८ ॥
मध्ये सूच्यग्रवेधेन कृत्वा सुषिरमल्पकम् ।
कारयेद् घटिकायन्त्रं कालज्ञानाय सर्वतः ॥ १३९ ॥
गालितं जलमादाय महद् भाण्डं प्रपूरयेत् ।
घटिकायन्त्रमादाय तज्जलोपरि विन्यसेत् ॥ १४० ॥
सुषिरेणागतजलैस्तत्पूरणनिमज्जनात् ।
कालो विज्ञायते सम्यक् तत्परीक्षणमुच्यते ॥ १४१ ॥
खमध्यगेऽश्विनीपूर्वतारेष्वन्यतमे बुधः ।
न्यस्य यन्त्रं यथान्यायं विनिद्रः प्रतिपालयेत् ॥ १४२ ॥
यावत् परेऽह्नि तत्तारं खमध्यमधिगच्छति ।
तत्र यन्त्रस्य संजातं षष्ट्यावृत्तिनिमज्जनम् ॥ १४३ ॥
तर्हि सूक्ष्मं भवेद् यन्त्रं नो चेत् सूक्ष्मत्वमाचरेत् ।
अथवा सुषिरीभूतं काचपात्रद्वयं मिथः ॥ १४४ ॥
सुसूक्ष्मवालुकापूर्णं सम्यक् संयोज्य तेन वा ।
नाडीपरीक्षणं युक्त्या कार्यं तत्सिकतास्रवात् ॥ १४५ ॥
ऊर्ध्वपात्रस्थसिकतं निरवशेषमधःस्थिते ।
पात्रे पतनकालं यत् तन्नाडीति निगद्यते[२] ॥ १४६ ॥

१. 'व' क. पाठः. २. 'ते अथ स्वर्ण' ख. पाठः.

अङ्गुलं + + + काभिर्घटिकावलयं तथा(?) ।
आवर्तनं च निर्माय बद्ध्वान्योन्यं यथाविधि ॥ १४७ ॥
जलैर्वालुकभाराद्यैर्भ्रामयेद् यन्त्रयन्त्रितम्

अथ स्वर्णकीलं —

स्वर्णकीलस्य वक्ष्यामि लक्षणं वर्णसिद्धये ॥ १४८ ॥
पञ्चवर्णादिपादोनरुद्रवर्णावसानकम् ।
पादवर्णविवृद्ध्या तत्कीलं स्याद् द्वादशद्वयम् ॥ १४९ ॥
आदौ द्वादशकीलानां बहिर्भागे तु लाञ्छनम् ।
अन्तर्भागे तदन्यानामिति पूर्वैरुदाहृतम् ॥ १५० ॥
छेदपञ्चकमाद्यस्य वृत्तत्रयमतःपरम् ।
आवर्तद्वयमन्यस्य वृत्तमेकं परस्य तु ॥ १५१ ॥
अन्ये छेदचतुष्कं तु वृत्तोर्ध्वविपदं परे ।
केवलं हंसपादोऽन्ये हंसपादोपरिस्थितम् ॥ १५२ ॥
छेदश्छेदत्रयं[1] पश्चात् कर्णरेखा ततः परम् ।
छेदद्वयं तथा पश्चादेकच्छेदस्तथैव च ॥ १५३ ॥
अथोर्ध्वद्वादशस्याद्ये कर्णरेखाद्वयं विदुः ।
एकैव + तथा कर्णरेखान्यस्य तथा पुनः ॥ १५४ ॥
हंसपादं तथान्यस्य पञ्चच्छेदं परस्य तु ।
चतुष्कं छेदरेखानां त्रिकं च द्विकमेककम् ॥ १५५ ॥
दशवर्णस्य कीलस्य नोक्तं किमपि लाञ्छनम् ।
वृत्तत्रयं द्विवृत्तं च वृत्तमेकमतःपरम् ॥ १५६ ॥

१. 'च्छे' क. पाठः.

एवं सुवर्णकीलानामिदं पूर्वोक्तलक्षणम् ।

अत्रानुक्तं शारिकापञ्जराद्यं
भूषापेटीवस्त्रभाण्डादिकं च ।
हस्तैर्मात्रैर्वा यवैर्नाहविस्ता-
रायामाढ्यं कारयेद् युक्तियुक्तम् ॥ १५७½ ॥

इति शिल्परत्ने उत्तरभागे आसनादिलक्षणं नाम
त्रयस्त्रिंशोऽध्यायः ॥

अथ चतुस्त्रिंशोऽध्यायः ।

अथ कर्मकारवेतनाक्रमः ।

व्रीहीणां वाथ शालीनां प्रस्थषट्कं यदेव सा ।
प्रायेण तक्षकादीनां दृश्यते नित्यवेतना ॥ १ ॥

एतद् द्विगुणितं दद्यात् स्थपतेस्तद्विसङ्गुणम् ।
गुरोरिति महद् वाक्यमस्ति शास्त्रेति शुश्रुमः ॥ २ ॥

अथ दारुखण्डिज्ञानं —

दारूणां मूल्यविज्ञाने तदायामस्य मध्यतः ।
त्वचं सारेतरं सर्वं त्यक्त्वा नाहं परिग्रहेत् ॥ ३ ॥

तन्नाहाङ्गुलिवेदांशो स्वघ्ने दार्वायतैः करैः ।
सङ्गुण्य वेदमनुभिः संहता पादखण्डिका ॥ ४ ॥

तच्चतुष्कं पूर्णखण्डी तद्द्वारा मूल्यमादिशेत् ।
समभूगतवृक्षस्यच्छायामानकरं पुनः ॥ ५ ॥

त्रयोदशहतं स्वस्यच्छायापदयुगाहतम् ।
तरुदीर्घकरं ज्ञेयं नाहं मूलप्रदेशतः ॥ ६ ॥

गृहीत्वा तद्विभागोनशेषं नाहं प्रकल्पयेत् ।
एवं स्थितस्य वृक्षस्य खण्डिज्ञानं विधीयते ॥ ७ ॥

अथ क्रकचं —

क्रकचैर्बहुधा दारौ दारिते सुमहामतिः ।
पृथक् तत्खण्डविस्तारं मात्वा मात्रैः पृथक् पृथक् ॥ ८ ॥
क्रकचस्पृष्टपार्श्वेषु तत्तदायाममध्यतः ।
तदङ्गुलार्धं गुणयेदायामकरमानतः ॥ ९ ॥
हृत्वा तस्माद् द्वादशभिस्तत्फलं क्रकचं स्मृतम् ।
क्रकचानां समं प्रस्थशालिकं कथ्यवेतना (?) । १० ॥
तद्दशांशं स्थपतये दत्त्वा शेषं परिग्रहेत् ।
वृक्षाणां छेदने तेषां दारणे तक्षणादिषु ॥ ११ ॥
तत्काठिन्यमृदुत्वादिवशान्न्यूनं तथाधिकम् ।
कल्पयेद् वेतना यस्तु तत्तत्कर्मकृतास्तथा (?) ॥ १२ ॥
दशांशकं स्थपतये देयमष्टांशकं तु वा ।

अथ शिलायाः —

शिला कीलचतुष्केण यावत्करमितायता ॥ १३ ॥
दारिता वेतना तरया त्रीहिप्रस्थं न संशयः ।
दारणद्विगुणं तक्ष्णे सुश्लक्ष्णीकरणे पुनः ॥ १४ ॥
तस्माद् द्विगुणमेवं स्याद् यावच्छायात्र दृश्यते ।
पूर्वस्माद् द्विगुणा पश्चाद् वेतना शिल्पकारिणाम् ॥ १५ ॥

---

१. 'र', २. 'मुदुत्वतः' ख. पाठः. ३. 'तं तथा' क. ग. पाठः. ४. 'ष्को' ख. पाठः.

अन्योन्यमेलने तक्षणस्तुल्या प्रायेण कल्पिता ।

अथ बिम्बादौ —

यावदङ्गुलमुत्सेधं शिलादार्वादिकल्पिते ॥ १६ ॥
बिम्बे तावत् पणः प्रोक्तस्तदर्धं वात्र चित्रके ।
हस्तायामवितानाढ्यफलकादौ विचक्षणैः ॥ १७ ॥
पणपञ्चकमाख्याता वेतना चित्रलेखने ।

अथ लोहानां —

प्रायशः स्वर्णकारस्य वेतनार्कदशांशकम् ॥ १८ ॥
भूषादिकरणे किञ्चिन्न्यूनं वाप्यधिकं क्वचित् ।
द्राविते तापिते लोहकूटेनाभिहतेऽपि वा ॥ १९ ॥
पूर्वप्रमाण(मो ? तो) हानिर्न स्वर्णस्य मनागपि ।
दृश्यते रजते हानिर्दशांशादिक्रमेण तु ॥ २० ॥
शुद्धताम्रे न हानिः स्यात् सीसे नागेऽथ पैत्तले ।
कृष्णलोहे च पञ्चांशं कांस्ये हानिर्दशांशतः ॥ २१ ॥
एतेषां कर्मकर्तॄणां तत्तद्द्रव्यदशांशकः ।
प्रायेण वेतना प्रोक्ता षडंशं रजते स्मृतम् ॥ २२ ॥
लोहदारुदृषत्तन्तुमृत्तिकादिकृताभिह ।
कुटुम्बपोषणापूर्णा पूर्णा वा स्याद् द्विवेतना ॥ २३ ॥

इति शिल्परत्ने उत्तरभागे वेतनाक्रमविधिर्नाम
चतुर्स्त्रिंशोऽध्यायः ॥

१. 'दो' क. पाठः. २. 'तद्दशां' ख. पाठः. ३. 'द्विवे' क. पाठः.

## अथ पञ्चत्रिंशोऽध्यायः ।

### अथ शस्त्रलक्षणम् ।

शस्त्रप्रश्नः पूर्वपक्षे पृच्छकस्याशुभाय च ।
शुभवारे तथा वामभागगे पृच्छकेऽपि वा ॥ १ ॥
शुभाय दक्षिणे कृष्णपक्षे पापवारके(?) ।
यत्र दूतः समायाति तद्गतश्चेत् तदा मरुत् ॥ २ ॥
तच्छस्त्रमिष्टफलदमन्यथानिष्टदं वदेत् ।
दूते मरुति दक्षस्थे शुभमन्यत्र मध्यमम् ॥ ३ ॥
दूरादाहूय वा मार्गे यात्रासमयतोऽथवा ।
प्राभृतेन विना मौनमानसो यदि पृच्छति ॥ ४ ॥
तत्कार्यमशुभं विद्धि तत्र शस्त्रे विशेषतः ।
स्नानभूषादिसंयुक्तो मृष्टाशी हृष्टमानसः ॥ ५ ॥
पृच्छको वा स्वयं वा चेच्छुभं स्यादन्यथाशुभम् ।
नागवल्लीदलं पूगं पुष्पमुर्वारुकादिकम् ॥ ६ ॥
केरवृक्षफलं वेक्षुविकारं कदलीफलम् ।
गोरसानि च मुख्यानि प्राभृतानि विशेषतः ॥ ७ ॥
भिन्ने जीर्णे नीरसे वा प्राभृतेऽप्यशुभं वदेत् ।
कुट्टिमोपरि विन्यस्य पादमेकं परं भुवि ॥ ८ ॥
पृच्छेदशुभदं विद्यादूर्ध्वमालोक्य चेत् तथा ।
कक्षे विन्यस्य पृच्छा चेत् पृष्ट्वा पश्चाद्गतोऽथवा ॥ ९ ॥
तस्कराद्यैः क्षयं ब्रूहि शुभं वक्षसि मेलनम् ।
सच्छिद्रमायुधं विद्यान्नवद्वारगते करे ॥ १० ॥

छिद्रमग्रे ह्यधद्वारस्पर्शनेऽन्यत्र चेदधः ।
अङ्गसन्धौ करं न्यस्येच्छस्त्रे संधानमुच्यताम् ॥ ११ ॥
पृच्छकश्चलपादश्चेदाशु गच्छति तत्करात् ।
कृपाणे निश्चलीभूते हिंसादौ न प्रशस्यते ॥ १२ ॥
भूमौ कृपाणं विन्यस्य पृष्टे निष्फलतां वदेत् ।
मध्ये गृहीत्वा चेदेवं शस्त्रमालोक्य चेच्छुभम् ॥ १३ ॥
निम्नभूमिगते वृते स्वस्मादुत्तमजातितः ।
औन्नत्यभूमिगे नीचात् स्वीकृतासीति कथ्यताम् ॥ १४ ॥
तत्पूर्वेऽह्नि यथा स्वस्य सुखदुःखाशनादिकम् ।
तथास्य स्वीकृतिदिने सम्यगूह्य विनिर्दिशेत् ॥ १५ ॥
कण्ठादूर्ध्वाङ्गसंस्पर्शे ब्रह्मवंशं कृपाणकम् ।
तदधः स्तनयोरूर्ध्वे क्षत्रवंशं न संशयः ॥ १६ ॥
स्तनादधः कटेरूर्ध्वे वैश्यवंशमिहायुधम्[2] ।
कट्यधः शूद्रवंशं स्यादिति निश्चित्य निर्दिशेत् ॥ १७ ॥
तत्कालोदयराशिर्वा दूतगो वा तदायुधम् ।
दृश्यते यत्र तद्राशिर्न्यस्तराशिरथापि वा ॥ १८ ॥
स्थिरश्चेच्छुभदं ब्रूयात् तदन्यौ मध्यमौ स्मृतौ ।
मेषत्रिकोणाद् विप्राद्या जातिभेदा भवन्ति हि ॥ १९ ॥
अनामिकाङ्गुलस्याद्यद्वितीयपर्वायतम् (?) ।
दक्षिणस्य करस्याहुर्मिलित्वा मानसाधनम् ॥ २० ॥

१. 'स्थ' घ. पाठः. २. 'होदितम् ।' क. पाठः.

मात्वा मूलाग्रमायामं दशभिर्गुणयेत् पुनः ।
आयमर्कहृताच्छेषं नवभिरथ वर्धयेत् ॥ २१ ॥
चतुर्दशहृतं शेषं व्ययं शङ्खस्य निश्चयः ।
त्रिघ्ने अष्टहृताच्छेषं योनिः स्यान्नवभिः पुनः ॥ २२ ॥
हत्वा त्रिपञ्चकैर्हत्वा शेषेण तिथिमानयेत् ।
कृत्वा दशगुणं सप्तविंशत्या तारमानयेत् ॥ २३ ॥
हत्वा चतुर्भिर्वारः स्याच्छैलाहरणशेषतः ।
आयाधिक्यं व्ययाद् भद्रमथ योन्यष्टकस्य तु ॥ २४ ॥
ध्वजमार्जारपञ्चास्यश्ववृषाखुशशाः क्रमात् ।
योनयस्तेषु शुभदास्तार्क्ष्यसिंहश्वगोवृषाः ॥ २५ ॥
अथवा ध्वजधूमादीन् कल्पयेद् यदि कथ्यते ।
अर्थलाभश्च कलहो विजयं रोगमेव च ॥ २६ ॥
लाभं दुःखं शुभं तद्वन्निष्फलं च क्रमात् फलम् ।
करणे सिंहशार्दूलौ पशुवृष्टिगजाः शुभाः ॥ २७ ॥
स्थिरविष्टिखराः शङ्खे करणेषु विनिन्दिताः ।
स्वाङ्कक्षतिस्तु गण्डान्ते शुभवारः प्रशस्यते ॥ २८ ॥
स्वस्य स्ववंशजं शङ्खं मुख्यमाहुर्मनीषिणः ।
व्ययायौ योनिनक्षत्रतिथिवारान् समूह्य तु ॥ २९ ॥
यज्जातं तत्तदायुस्तत् पञ्चधा विभजेत् पुनः ।
बाल्यकौमारकादीनि शेषादानीय तद् वदेत् ॥ ३० ॥

---

१. 'सिंहमा' क. पाठः. २. 'खरगजाः क', ३. 'गजाः' घ. पाठः. ४. 'ल्प्यते य' ख. पाठः.

मरणं मरणं दद्याद् बालो वृद्धो न विक्रमी ।
कुमारयौवनौ युद्धदुर्मदौ हेतिलक्षणे ॥ ३१ ॥
आयुःसङ्ख्यां त्रिभिर्भक्त्वा निःशेषेऽन्धत्वमादिशेत् ।
एकशेषे एकचक्षुर्द्विचक्षुः स्याद् द्विशेषतः ॥ ३२ ॥
हत्वायुर्वेदसङ्ख्याभिस्तच्छेषैर्वा कुलं नृपात् ।
आयुधर्क्षमृगैरस्य जन्मादिमृगमित्रताम् ॥ ३३ ॥
शत्रुत्वमपि विज्ञाय वदेदिष्टमनिष्टदम् ।
ताम्बूलं द्विगुणीकृत्य त्वेकयुक्तं पुनस्तथा ॥ ३४ ॥
पञ्चघ्नं द्वादशहतं कृत्वा शेषं विलग्नकम् ।
सप्तविंशहताच्छेषं नक्षत्रमिति वा वदेत् ॥ ३५ ॥
शुभे वार्केऽथवारूढे शुभं पापेऽशुभं वदेत् ।
एवं परीक्ष्य बहुधायुधलक्षणानि
तत्पृच्छकस्य शुभदाशुभदं हि वाच्यम् ।
कुन्तादिचापमुसलादिषु मौनवर्जं
सञ्चिन्तयेदखिलमन्यदिहोक्तरीत्या ॥ ३६ ॥

अथ धनुर्लक्षणं—

पुष्पवत् पुङ्खमादाय शत्रुवत् पीड्यते धनुः ॥ ३७ ॥
मुष्टिना लक्ष्ममाच्छाद्य श्वासेन सह मोचयेत् ।

अध्यायैरथ सप्तपञ्चकयुतैः श्रीदेवनारायण-
प्रज्ञाकल्पितशिल्परत्नगतपश्चाद्भागमन्त्यं गतम् ।

१. 'वृ', २. 'न्मर्क्षमृ', ३. 'नामक' घ. पाठः. ४. 'त्या ॥ अध्या' क. ख. ग. पाठः.

नानालक्षणमन्त्रलिङ्गमनुबिम्बाकारभूषायुध-
ब्रह्माश्मासनतत्प्रतिष्ठितिभवं जीर्णोद्धराद्यन्वितम् ॥
करुणापूरसम्पन्नगुरूणां सुप्रसादतः।
अहं सिद्धरसोऽस्म्यज्ञस्तत्पादेभ्यो नमोनमः ॥ ३९ ॥

इति शिल्परत्ने उत्तरभागे शस्त्रलक्षणविधानं नाम
पञ्चत्रिंशोऽध्यायः ॥

शिल्परत्नोत्तरभागः समाप्तः ॥

शुभं भूयात्